# प्रतिज्ञापत्तिः



लेखक :
डॉ० श्रीनाथहसूरकरः

पुरोवाणीलेखक :
आचार्यकरुणापतित्रिपाठी
अध्यक्ष :
उत्तरप्रदेशसंस्कृताकादम्याः, लक्ष्मणपुरस्थायाः

प्रकाशक :
उत्तरप्रदेश-संस्कृत-अकादमी
लखनऊ

- उपकृतोऽस्मि नूनमुपन्यासमिमं स्वप्रज्ञाचक्षुषा निरीक्षितवद्भिः पण्डितप्रवरैः दयाशंकरवाजपेयिमहोदयैस्तत्साहाय्यकृद्भिः तच्छिष्योत्तमैः डॉ० सम्पूर्णानन्दशास्त्रिभिश्च ।

- सम्मानितोऽस्मि खलु इमं प्राकट्यं नयद्भिर्विद्वद्वरेण्यैः श्रीमद्भिः सुब्रह्मण्यऐयरमहोदयैः श्रीमद्भिः विश्वनाथशर्मभिश्च ।

- संतोषितश्चाऽऽवरणपृष्ठमस्य चित्रालेखनेनालंकुर्वत्या मम ज्येष्ठया कन्यया मृणालिन्या ।

उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् ।
शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥

—भारवेः

# पुरोवाणी

अयि विबुधभारतीसमुपासकाः सकलकलाकुशलकविताकामिनीकेलि-कालिकललितक्रियाकलापविलसितोद्भावनाभावितभावरसोत्फुल्लस्वान्ताः साहित्यमधुमाधुरीमर्मज्ञाः सुधिय एतस्य प्रस्तूयमानस्य ललितग्रन्थस्य पठन-समुपजाततरलं मे मनोऽस्या रचनाया विषये किञ्चिन्निवेदयितुम् स्पृह-यति । अतोऽधोलिखिताः काश्चन पङ्क्तीर्निवेदयितुमुत्सहे ।

अयं गद्यग्रन्थः संस्कृतसाहित्ये अभिनवसाहित्यनिर्माणकलाश्रेण्यां परिगणयितुं शक्यते । अस्मिन् विषये यथावसरं स्वकीयं संक्षिप्तं सिंहाव-लोकनमनुपदमेव निवेदयिष्यामि ।

सम्प्रति एतत् कथयितुमुत्सुकोऽस्मि यदिमे साहित्यस्रष्टारः श्रीमन्तः डॉ० श्रीनाथहसूरकरमहोदयाः संस्कृतोपन्यासस्य रचनाक्षेत्रे कुशलाः साहित्यनिर्माणे च विशिष्टप्रज्ञावन्तः । विश्वसनीयसूत्रान्मया ज्ञातं यदेतेषां जनका अपि महान्तः संस्कृतसाहित्यरचनाकाराः बभूवुः । तेऽपि संस्कृत-भाषामाध्यमेन नानाविधानां साहित्यिककृतीनां लेखका आसन् । तेषामपि बह्व्यः बहुमूल्याः कृतयः संस्कृतोपन्यासादयश्चाप्रकाशिता अद्यापि वर्तन्ते ।

अस्य प्रस्तुतस्य गद्यकाव्यस्य आरम्भपृष्ठे उपन्यासनाम्ना लेखकेन परिचयो दत्तो विद्यते । अनुमातुं शक्यते यद् आधुनिकसाहित्यकृतिक्षेत्रे रचनात्मकसाहित्यस्य य एको भेदः "उपन्यासेति" नाम्ना प्रसिद्धः कथात्मक-गद्यसाहित्यान्तर्गताधुनिकसाहित्यप्रकारः सर्वैराधुनिकैरूररीकृतो ग्रन्थकारस्य स एवाभिप्रेतः। आङ्गलभाषायामस्य भेदस्य कृते "नावेल" इति शब्दप्रयोगः प्रचलितो वर्तते । इदमपि श्रूयते आधुनिकभाषासु विशेषतश्च हिन्दीभाषाया-मस्य आङ्ग्-"नावेल"-शब्दस्यार्थे प्रयुक्तो य 'उपन्यास'-शब्दः स बङ्गभाषा-प्रचलितप्रयोगप्रभावात्समागत इति ।

जानन्ति सर्वे यत् संस्कृतकाव्यशास्त्रानुसारेण दृश्यं श्रव्यं चेति काव्यस्य द्वौ प्रकारौ । तत्र खलु श्रव्यकाव्ये गद्यं पद्यं चम्पूश्च इति त्रयो भेदाः । कथात्मकसाहित्यान्तर्गतमेतादृक्काव्यं गद्यकाव्यस्यैव एकः प्रकारः । चम्पू-

काव्यमपि कथात्मकमेव काव्यम् । गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते इति परिभाषानुसारेण गद्यपद्योभयात्मककाव्यस्य चम्पूसंज्ञा भवति ।

संस्कृतगद्यकाव्यगणनाया आरम्भकालादेव त्रीणि गद्यकाव्यानि सर्वाधिकप्रसिद्धानि—(१) महाकवेः सुबन्धोः "वासवदत्ता" । अस्मिन् खलु समासबहुले अलंकृतशैल्यां विरचिते काव्ये श्लेषबाहुल्यं शब्दालंकारार्थालंकारप्राचुर्यं वैदर्भीपाञ्चाली-गौडीयेति नाम्ना प्रसिद्धानां तिसृणां रीतीनामनुगामित्वं ललित-मधुर-सक्षमप्रयोगकौशलञ्च दरीदृश्यते । एतस्य गद्यकाव्यस्य कथायाः वासवदत्तोदयनाख्यायिकया साकं सम्बन्धलेशोऽपि न विद्यते । अत्र नवीना कविकल्पनासर्जिता कथा गुम्फिताऽस्ति । महाकविः सुबन्धुः खलु निसर्गतः—

शृंगाररसोच्छलितभावाङ्कने निपुणः । अस्य गद्यकाव्यस्य विषये स्वयं काव्यकारेण घोषितम्—"प्रत्यक्षरश्लेषमयः प्रबन्धः ।"

द्वितीया च प्रख्याता कृतिः—काव्यादर्शकारस्य साहित्य-साहित्यालोचनोभयविधग्रन्थरचनानदीष्णस्य दण्डिनः "दशकुमारचरितम्" । अस्मिन् खलु बहूनां कुमाराणामतीव ललितानि कथानिबन्धनानि वर्तन्ते । तत्र च बह्व्यः कथाः कविप्रौढकल्पनासर्जिताः सन्ति । एतस्या वैशिष्ट्यमपि गद्यकाव्यसौन्दर्याधायि समग्ररसभावालंकाररीतिगुणनिबन्धननैपुण्यम् ।

तृतीया च विश्वप्रसिद्धा महाकृतिः बाणभट्टस्य "कादम्बरी" । "कादम्बरी"-विषये बाणमहाकविसम्बन्धे च समालोचकैः बहु प्रशंसितम् । अस्यैव काव्यकारस्यापराऽपि सुप्रसिद्धा रचनाऽस्ति "हर्षचरितम्" गद्यमयमैतिहासिकं काव्यम् । साहित्यालोचनशास्त्रकारैः बाणभट्टप्रशंसामुखरैः साहित्यालोचकैर्निगदितम् "बाणोच्छिष्टं जगत्सर्वम्" । तथा च पुनः कविता-कामिनी-वर्णनप्रसङ्गे चर्च्यते ।

"यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो,
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
"हर्षो" हर्षो हृदयवसतिः पञ्चबाणस्तु 'बाणः',
केषां नैषा कथय कविताकामिनी कौतुकाय ॥

अस्यां भणत्यां बाणः स्वयं कामदेवसदृशः पञ्चबाणधारी कविताकामिनीमनसिजः निखिलविश्वसौन्दर्यनिधानतुलनीयः काव्यकाररूपधारी काम इव प्रशंसितः । बाणभट्टस्य "हर्षचरित-कादम्बरी"-द्वयललितरसभावपेशलगद्यकाव्ययोर्महत्त्वेन सकलसंस्कृतकाव्यरसिकाः सम्यक्परिचिता अतः तयोर्वैशिष्ट्यवर्णनेनालम् ।

**आख्यायिका—कथा:**

भामहस्य काव्यालङ्कारशास्त्रग्रन्थात् काव्यादर्शाख्यप्रबन्धात् पूर्वं गद्य-काव्यकथासाहित्यस्य साहित्यकी व्यवस्था का आसीदिति सम्यग् वक्तुं न पारयामि। अग्निपुराणेऽपि सुस्पष्टं काव्यलक्षणविषया व्याख्याता:। अग्निपुराणकार: सर्वान् काव्यलक्षणग्रन्थकर्तॄन् अधमर्णयतीति निश्चप्रचम्। एतदेव कथितुं शक्यते यत् भामहात् पूर्वं—(१) आख्यायिका (२) कथा चेति कथात्मकगद्यकाव्यस्य द्वौ प्रकारौ प्राचलताम्। यद्यपि पंचतन्त्रादिषु कथाया अपर: कश्चित् प्रकारो दृश्यते—तथापि काव्यशास्त्रीयलक्षणा-भावात् स कथाप्रकार: न साहित्यिक: अपि तु नीतिकथाभेदान्तर्गत: नीति-कथाभेद इति प्रोक्तुं शक्यते।

भामहवर्णितत परिभाषानुसारेण आख्यायिकासु अधोलिखितानि शैली-परकवैशिष्ट्यानि समावेशितव्यान्यासन्। तत्र नायक: स्वयं स्वानुभूतानि आख्यानान्यवर्णयत्।

तस्य वर्णनशैली सरसगद्यकाव्यानुरूपा आसीत्। आख्यायिका-काव्यस्य च विभाजनम् उच्छ्वासनाम्ना विभागेन निबध्यते स्म। अस्मिश्च गद्यभाषामध्ये वक्त्रापरवक्त्रछन्दोबद्धानि पद्यान्यपि अनुस्यूतानि बभूवु:। तानि यत्र तत्र निबद्धानि पद्यानि स्वल्पान्येवाभूवन्। तैश्च भाविघटनानां प्रायोऽभिव्यञ्जनं करणीयमासीत्। अनुस्यूतै: पद्यै: भाविघटनासंसूचसंसूचन-मपि क्रियते स्म। आख्यायिकानां वर्ण्यविषय: कन्याहरण-युद्धवर्णन-नायक-विजय-सम्बद्धानि संग्रथनीयान्यासन्। भाषा च आख्यायिकाया: संस्कृतेनैव निबद्धनीया चेत्यादयो विशेषा:। यदा कदा च कल्पितकथावस्तुद्वाराऽपि आख्यायिका रच्यते स्म। परन्तु तत्र कथावर्णनकर्ता नायकभिन्न एवाभवत्।

कथाया: खलु विभाजनमुच्छ्वासेषु आख्यायिकावत् न क्रियते स्म। तत्र च वक्त्राऽपरवक्त्रछन्दोबद्धपद्यान्यपि नाभूवन्। कथाया भाषा च संस्कृतं प्राकृतमपभ्रंशो वा बभूव।[1]

---

१. प्रकृतानाकुलश्रव्यशब्दार्थपदवृत्तिना।
गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता।।
वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम्।
वक्त्रं चापरवक्त्रं च काले भाव्यार्थशंसि च॥

दण्डिमते उपर्युक्तकथाख्यायिकयोर्भेदः वक्तृनिष्ठः उछ्वासादिविभाजन-भेदो वा शैलीपरको वा भेदो न स्वीक्रियते स्म। वक्त्रापरवक्त्रप्रवेशोऽप्युभयत्र भवितुं शक्यते।

अपादः पदसन्तानो गद्यमाख्यायिकाकथे।
इति तस्य प्रभेदौ द्वौ तयोराख्यायिका किल ॥२३॥
नायकेनैव वाच्यान्या नायकेनेतरेण वा।
स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः ॥२४॥
अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्।
अन्यो वक्ता स्वयं वेति कीदृग्वा भेदकारणम् ॥२५॥
वक्त्रं चापरवक्त्रं च सोछ्वासत्वं च भेदकम्।
चिह्नमाख्यायिकायाश्चेत्प्रसङ्गेन कथास्वपि ॥२६॥
आर्यादिवत्प्रवेशः किं न वक्त्रापरवक्त्रयोः।
भेदश्च दृष्टो लम्भादिरुछ्वासो वा किं ततो भवेत्? ॥२७॥
तत्कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता।
अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानवृत्तयः ॥२८॥
कन्याहरणसंग्रामविप्रलम्भोदयादयः।
सर्गबन्धसमा एव नैते वैशेषिका गुणाः ॥२९॥
कविनाविष्कृतं चिह्नमन्यत्रापि न दुष्यति।
मुखमिष्टार्थसिद्धौ यत् किं तत्र स्यात् कृतात्मनाम् ॥३०॥

(दण्डिकृते काव्यादर्शे प्रथमे परिच्छेदे श्लोकाः २३-३०)

एतत्कथनेन संसूच्यते द्वावपि भेदौ सामान्यतः गद्यकाव्यस्य कथात्मकस्यैव प्रकारावास्ताम्। तत्र न कौचिद्विभाजकौ गुणधर्मौ। दण्डिमतेन भेदकतत्त्वं यदेकत्र व्याख्यानमैतिहासिकमर्धैतिहासिकमपरत्र च कविकल्पितं जनपरम्परागतं जनश्रुतिमूलकं वा।

---

कवेरभिप्रायकृतैः कथानैः (कथनैः) कैश्चिदङ्किता।
कन्याहरणसंग्रामविप्रलम्भोदयान्विता ॥
न वक्त्रापरवक्त्राभ्यां युक्ता नोछ्वासवत्यपि।
संस्कृतं संस्कृता चेष्टा कथापभ्रंशभाक्तथा ॥
अन्यैः स्वचरितं तस्याः नायकेन तु नोच्यते।

(भामहकृतकाव्यालंकारे प्रथमे परिच्छेदे श्लोकाः २५-२९)

एतेन विभाजनेन स्पष्टमेव लक्ष्यते यत् एतद् विभाजनं सुबन्धुकविरचित—वासवदत्तागद्यकाव्यं वा बाणभट्टस्य "कादम्बरी"-"हर्षचरितं" गद्यकाव्यद्वयं वा लक्ष्यीकृत्य न परिभाषितमासीत् । परञ्च तत्रोपर्युक्तवर्णनगतभेदः बाणभट्टस्य द्वयोर्गद्यकाव्ययोरचनाप्रकारभेदं चापि प्रदर्शयति । एतेन भाषितुं शक्यते यत् काव्यादर्शकारस्य दण्डिनः काले द्वावपि भेदौ सामान्यतः गद्यकाव्यान्तर्गतावेव मन्येते स्म । तत्र स्पष्टरूपेण विभाजनभेदकधर्माणां निर्धारणं नाविद्यत । दण्डिमतानुसारेण एष एव भेदको गुणविशिष्टधर्मः यदेकस्य कथावस्तु ऐतिहासिकं पौराणिकमर्धैतिहासिकं लोककथामूलकं वा भवति स्म । अपरस्य च रचनाकार-कल्पितवृत्तमादाय जायते स्म ।

अमरकोशानुसारेण तु—

(१) 'आख्यायिकोपलब्धार्था (२) प्रबन्धकल्पना कथा ।' न अनयोः कथाख्यायिकयोर्गद्यकाव्यभेदो बहुधा लोककथावृत्तमधिकृत्य स्वीकृत आसीत् । मानवीयामानवीयकथारूढिमाश्रित्य संस्कृतसाहित्ये अनयोः संघटनं क्रियते स्म । वस्तुतः उभयोर्गद्यकाव्यप्रकारयोरेतदेव तात्त्विकं प्रयोजनं यत्सरसदृश्यादिवर्णनसहितोदात्तनायकचरितकथादिवर्णनेन सुसंस्कृतानां साहित्योपासकानां मनोरञ्जनादिकं करणीयम् । कान्तासम्मितोपदेशोपस्थापनं च व्यञ्जनीयम् । अत एव च महाकाव्यादिवदनयोर्गद्यप्रकारयोरपि वैशिष्ट्यानि परिशीलनीयानीति दिक् ।

यत्र तत्र च तयोर्दीर्घसमासबाहुल्यं श्लिष्टशब्दालंकारार्थालंकारसंवलितत्वं काव्यगतविच्छित्तिरमणीयत्वं चावश्यकम् । प्रभात-सन्ध्या-रात्रि-नदी-वन-सरोवरादि-विभिन्न-प्राकृतिकशोभावर्णनरमणीया कन्याहरणसहिता चेयं क्वापि नायिकानायकयोः प्रणयवर्णनसरसा वा संयोग-विप्रलम्भ-शृंगारमनोरमा वा मानवीयान्तःप्रकृतिविश्लेषणपरा वा प्रायः अविद्यत् । संवादानां चात्र न प्राचुर्यमासीत् । परन्तु यत्र तत्र मर्मस्पर्शी संवादः कुशलगद्यकाव्यकारैः बहुधा संगुम्फितः । मुख्यतः एतेषां गद्यकाव्यानामितिवृत्तं प्रणयकथारमणीयम् । परन्तु एतयोर्गद्यकाव्ययोर्मुख्यवैशिष्ट्यं सालंकृतिप्रौढकल्पनासंवलितवर्णनकौशलपरम् ।

उपरिलिखितकथाख्यायिकयोः भेदकधर्मगुणानां संक्षिप्तवर्णनेन प्रतीयते यत् प्राचीनसंस्कृतकाव्यकारैः संस्कृतसाहित्यिकवाङ्मये साहित्यिककथा-

त्मकगद्यकाव्यस्य द्वौ प्रकारौ स्वीकृतौ—एकः कथाख्यः अपरश्च आख्यायिकानामकः। चम्पूकाव्याख्योऽपि तृतीयो भेदो गद्यप्रायमेव परन्तु तत्र पद्यानामपि संयोजनं भवति।

**उपन्यासः**

परञ्च गद्यकाव्यस्य उपन्यासात्मकोऽसौ भेदः—येन नाम्ना "प्रतिज्ञापूर्ति"—शीर्षकस्य काव्यस्य रचनोद्घोषो ग्रन्थकारेण आरम्भे एव निर्दिष्टः स खल्वाधुनिको गद्यकाव्यप्रकारः।

एतेन उपन्यासेति-नाम्ना 'प्रतिज्ञापूर्ति'—शीर्षकस्य काव्यस्य यो रचनोद्घोषः एतस्मिन् ललितग्रन्थे वर्णितो वर्तते स नूनमाधुनिकललितसाहित्याधुनिकसाहित्यशास्त्रानुसारेण एको भेदः स खलु सम्प्रति बहुविश्वभाषासु सर्वाधिकलोकप्रियः सर्वाधिकप्रचारितो भेदः "उपन्यास", 'नावेल',—प्रभृतिनानासंज्ञया विख्यातो वर्तते। यूरोपस्य सर्वेषु देशेषु दक्षिणोत्तर—"अमेरिका—' भूभागेषु चीनदेशेषु जापानदेशे एशियामहाद्वीपे अन्येषु देशेषु अमुष्य भेदस्य प्रचारो लक्ष्यते। इत्थं च ललितसाहित्यप्रकारः सर्वलोकप्रियः सर्वराष्ट्रप्रचलितः सर्वाधिकसशक्तः साहित्यकोऽयं भेदः वर्तते। संस्कृतभाषायां चासौ साहित्यप्रकारो नवागतः नवप्रारब्धश्च। अत्र भाषायां स्वल्पा एव उपन्यासाः श्रूयन्ते। अस्य संस्कृतोपन्यासस्य निर्मातारः डा० श्रीनाथहसूरकरमहाभागाः एतस्मादेव कारणाद् भूयो भूयः साधुवादार्हाः। हिन्दीभाषायामपि उपन्यासनामकगद्यकाव्यप्रकारः सर्वाधिकलोकप्रियः प्रचुरसंख्यकश्च वर्तते।

उपर्युक्तभामहदण्डिकाव्यालंकारपण्डितयोः कथाख्यायिकासम्बन्धी लक्षणस्य संक्षिप्तोल्लेखेन वयं जानीमः यत् प्राचीनभारतीयकाव्यालंकारशास्त्रे साहित्यिकगद्यकाव्यकथाप्रकाररूपेण आधुनिकोपन्यासानामुल्लेखो नाविद्यत। अयं किलोपन्यासनामकगद्यकाव्यकथाप्रकारविशेषः सर्वथा आधुनिकः, पाश्चात्यसाहित्यप्रकारान्तर्गतः साहित्यिको भेदः। असौ भेदः किलाधुना प्रायः सर्वेषु समुन्नतविश्वदेशभाषासाहित्येषु अतीव लोकप्रियः पाश्चात्यसाहित्यालोचनशास्त्रे "नावेल"—इति नाम्ना प्रसिद्धः। श्रीहसूरकरमहोदयेन संस्कृतभाषामाध्यमेन प्रस्तूयते, लोकप्रियो भेद इति तेषां श्लाघनीयः प्रयासः।

अतः आधुनिकपाश्चात्यसमालोचनदृष्टिमधिकृत्यैवैतस्य गद्यसाहित्यस्य विषये उपन्याससम्बन्धिमुख्याः केचन पक्षाः विवेच्यन्ते, ते एव च अत्र संक्षेपेण परिचीयन्ते ।

**कथावस्तु**

अस्योपन्यासस्य कथासारः ऐतिहासिकवृत्तमाधृत्य संग्रथितो वर्तते। आर्यचाणक्यचन्द्रगुप्तादीनां भारतीयपुराकालिकैतिहासिकं प्रसङ्गमाश्रित्य एष उपन्यासो विरचितो वर्तते। न केवलमितिहासे अपितु बहुषु पुराणेषु अपि एतस्य वृत्तस्य मूलभूतपुरुषाणां नन्दमौर्यवंशयोः राज्यकाले ख्यातवृत्तानां चन्द्रगुप्तचाणक्यादीनां समुल्लेखो विद्यते । चाणक्यसाहाय्येन नन्दवंशं समूलमुत्पाट्य अर्थशास्त्ररचयितुः चाणक्यस्य कौटिल्यस्य साहाय्येन मौर्यवंशसंस्थापकेन चन्द्रगुप्तेन नवीनस्य मगधसाम्राज्यस्य शासकरूपेण मौर्यवंशस्य प्रतिष्ठापना कृता। संस्कृतेऽपि "मुद्राराक्षस" नामकदृश्यकाव्ये शूद्रककविविरचिते विस्तारपूर्वकं कथावृत्तमेतत्प्रसारितं वर्तते। आधुनिकभारतीयभाषासु—हिन्दी-बांग्ला-मराठीप्रभृतिषु तद्वृत्तमधिकृत्य बहवः उपन्यासाः नाटकरूपकादिदृश्यकाव्यानि च विरचितानि तत्तद्भाषासाहित्यकारैः।

अस्याः कथायाः सूत्ररूपेण यवनेतिहासकारेण यो निर्देशो बीजरूपेण कृतो वर्तते, तन्मूलककथाबीजमादाय साहित्यकारैः दृश्यश्रव्यकाव्यरूपेण कृतयो विनिर्मिताः। शूद्रकस्य "मुद्राराक्षस"-नाटकेऽपि काल्पनिकवृत्तानां कूटनीतीनां समाकलनात्मकप्रयोगनैपुण्यं परिकल्पितमिति जानन्त्येव विद्वांसः।

अस्य प्रस्तुतस्य "प्रतिज्ञापूर्ति"-शीर्षकस्य सुरभारतीनिबद्धोपन्यासस्य कथावस्तुनि चाणक्यचन्द्रगुप्त-राक्षस-भागुरायण-पर्वतेश्वरादयः पात्रपुरुषाः इतिहासपुराणजनश्रुतिप्राचीनलोकगाथानाटकादिषु प्रसिद्धाः।

इदमप्यत्रावधेयं यन्नन्दवंशस्य विनाशे आर्यचाणक्यस्य यदवदानं तस्य विषये पुराकालादेव जनश्रुतयः श्रूयन्ते ।

उपन्यासेऽस्मिन्द्वे प्रतिज्ञे—ते एवाधिकृत्यास्य शीर्षकम् । प्रथमा सर्वतः महत्त्वमयी च प्रतिज्ञा आर्यचाणक्यस्य वर्तते यदार्यसंस्कृतिविघातकानां भारतीयधार्मिकसांस्कृतिकसामाजिकपद्धतिविनाशकानां यवनशासकानां यवनसैनिकानां च भारतवर्षाद्बहिर्निष्कासनम्। एषा मूलभूता प्रतिज्ञायं ऽ-

चाणक्यस्य। अत्र यद्यपि मुख्यतः एषा एव प्रतिज्ञा मूलप्रेरणादायिनी तथाप्यन्या द्वितीयाऽपि प्रतिज्ञा विद्यते यस्यां नन्दवंशस्य समूलं समग्रं विनाशं सम्पाद्य आर्यसंस्कृतिसंरक्षकाय कस्मैश्चित् आर्यसंस्कृतिधर्मसदाचारनिष्ठाय वीरपुरुषाय मगधसाम्राज्यसमर्पणं समुद्घोषणं सम्पाद्यम्। तेन राजनीतिप्रयोगनिपुणेन आर्यचाणक्येन तस्या एव द्वितीयायाः प्रतिज्ञायाः पूर्त्यै उपन्यासे बहुसंख्यकाः परिच्छेदाः निबद्धा वर्तन्ते। इदमपि अत्रावधेयं यच्चाणक्यचन्द्रगुप्तमौर्यनन्दवंशादिविषये या इतिहासप्रसिद्धा विजयरूपा कथा तस्या विषये इतिहासे साक्षाद्रूपेण निर्णीतोऽर्थः सूत्ररूपेणैवात्र प्रकाश्यते। अतः दृश्यकाव्यश्रव्यकाव्यादिसाहित्यकारेभ्यः कल्पनासाहाय्येनैव कथाप्रसारः सम्पादितः। यथाप्रयोगं, यथाकथाप्रसङ्गं च तानि वृत्तानि उपन्यासादिकाराः संगृह्णन्ति स्म।

अस्मिन्नपि देवभारतीमाध्यमविरचिते उपन्यासाख्यगद्यसाहित्यभेदे किल श्रीहसूरकरमहाभागेन इतिहासजनश्रुति-किंवदन्तीषु इतस्ततः विशृंङ्खलितरूपेणोपलब्धानां कथाबीजानां संग्रहं कृत्वा शेषाणां पक्षाणां कथाप्रसङ्गानां च स्वकल्पनासाहाय्येन कल्पितवृत्तघटनासंग्रथनेन अस्योपन्यासस्य कथावस्तु गुम्फितम्।

अत्र कल्पितवृत्तानां घटनानाञ्च प्रसङ्गानां प्रचुरमात्रया कथावस्तुनि सन्निवेशोऽस्ति। धननन्दस्य सान्वयस्य विनाशनमपि सम्भवतः विस्फोटकद्रव्यमाध्यमेन अप्रसिद्ध-कल्पनाकल्पितघटनाप्रसङ्गेन यद्वर्णितं तदपि कविप्रौढकल्पनाफलितमेव वर्तते। मन्ये मौर्ययुगे तथाविधविस्फोटकद्रव्याणामाविष्कारो न जातमासीत्। इत्थञ्च आद्यन्ततः साहित्यकारकल्पितप्रौढोक्तिकल्पनाकृतानां पक्षाणां, घटनानां, प्रसङ्गानां चारुप्रयोगादिवृत्तान्तानां च निबन्धनमुपन्यासे प्राचुर्येण परिलक्ष्यते।

अवश्यमेव खल्वत्र उपन्यासे आर्यचाणक्यधीरोदात्तनायकचन्द्रगुप्तस्वामिभक्तराक्षस-वीरश्रेष्ठपर्वतेश्वर( पोरस )भागुरायण-मलयकेत्वादीनां प्राचीनेतिवृत्तलोकगाथादृश्यश्रव्यकाव्यप्रसिद्धानां नामोल्लेखः विद्यते। परन्तु घटनावर्णनप्रसङ्गे कथावस्तुनि च कल्पनासहकृतानां विवरणानां सर्वत्र बाहुल्यं दरीदृश्यते। तथाकरणे च दृश्यश्रव्यकाव्यकाराः साधिकाराः स्वतन्त्राश्च। अत्र चोपन्यासलेखकः सर्वथा कौशलमण्डित इति हेतोः सर्वथा प्रशंसार्हः।

संक्षेपेण किल एतदपि निगदितुं शक्यते, यत्सत्यपि कथावस्तुसौष्ठवे, विद्यमाने च कथावर्णनरोचकत्वे, प्रभावशलिन्यां च भाषायां सत्यामपि आवश्यकतातः किञ्चिदधिकमेव कल्पितवृत्तगुम्फने बाहुल्येन कल्पनाया उपन्यासकरेणोपयोगः कृतः। परन्तु एतदपि निश्चप्रचमेव यत् प्रथमपरिच्छेदादारभ्य उपसंहारपर्यन्तं द्वाविंशपरिच्छेदेषु कथावस्तुसंग्रथनं लालित्यपूर्णमौपन्यासिकरोचकत्वविलसितं सहृदयहृदयावर्जकं रसभावपेशलं च विद्यते।

निष्कर्षरूपेण कथावस्तुसंगुम्फनप्रसङ्गे एतन्निवेदनीयं यत् सामदानभेददण्डादिसहितोपजापप्रयोगजन्यकूटराजनीतिनैपुण्योद्भूतघटनानां घातप्रतिघातानां तेषां फलानां च वर्णनेनोपन्यासे प्रारम्भतोऽन्तपर्यन्तं, रोचकत्वं खलु कथावस्तुसंगुम्फनस्य प्रशंसनीयं वैशिष्ट्यम्। दृश्यादिवर्णनोपजापादिविवरणा—गुप्तचरपुरुषादिकृतोपायवर्णनाधिक्येन कथा-प्रवाहनिमज्जनोत्सुकान्तःकरणानां मनसि यदा कदाऽतिस्वल्पकालं प्रतिरोधं जायते। परन्तु सामान्यत एतस्य ग्रन्थस्य कथावस्तुनो रोचकताप्रवाहोऽनवरतं प्रवहतीति विचारेणास्योपन्यासस्य कथावस्तुसंग्रथनं सर्वथा सन्तोषावहमिति मम मतम्।

## उपन्यासस्य प्रमुखपात्राणि
## तेषां
## चरित्रचित्रणानि च

**आर्यचाणक्यः**

अस्मिन्नुपन्यासे बहूनां नायकोपनायकानां प्रतिनायकानां च चरितानि संन्निबद्धानि। तेषु पात्रेषु सैद्धान्तिक-प्रायोगिकराजनीतिविद्यार्थशास्त्रकूटनीतिविज्ञाननदीष्ण आर्यचाणक्यो नायकः एतस्य संस्कृतोपन्यासस्य। स एव प्रमुखपात्रम्। प्रथमपरिच्छेदादारभ्यान्तपर्यन्तं तस्य कार्यव्यापाराः कूटनीतिप्रयोगान्यबाधगत्याऽग्रेसरन्ति। स एव सर्वेषु चरित्रेषु मुख्यं पात्रम्। आर्यचाणक्यः खल्वत्र कूटनीतिगूढचारादिविधानकुशलः दृढप्रतिज्ञः परमकर्मठः स्वप्रतिज्ञापूर्त्यै उचितानुचितकोमलकठोरप्रभृतिसर्वविधविधाने स्वोद्देश्यपूरणोपयोगिव्यवहारदक्षः; अश्रान्तः, निरन्तरलक्ष्यदर्शी, निरालस्यः, निर्लोभः, परिश्रमशीलो, वीरस्त्यागी, उदात्तचरितोऽङ्कितो वर्तते। अर्थशास्त्रप्रणेता कौटिल्यचाणक्यः अस्मिन्नुपन्यासे स्वीयार्थशास्त्रीयप्रयोगविधानानुसारी उपजापविधिपरममर्मज्ञोऽवसरोचितकूटनीतिसंचालनदक्षः

सर्वदा सर्वत्र च परिलक्ष्यते। आर्यचाणक्यः खलु एकतस्तु स्वाभिमानी, त्यागी, निर्लोभः, ब्राह्मणाचारनिष्ठः, नित्यकर्मानुष्ठानशीलश्चित्रितो वर्ततेऽपरत्र च स समये समये आवश्यकतामनुसरन् परमक्रूरः क्रूरकर्मविधानकालेऽविचलितो राजनीतिज्ञः उपन्यासकारेणाङ्कितः। स दूरदर्शी, भविष्यद्द्रष्टा भेदोपायप्रवीणः सदा पूर्वकल्पितफलभागस्ति।

एवमेव च कुमारचन्द्रगुप्तस्य क्षत्रियोचितशासनोपयोगिशास्त्र-शस्त्रास्त्रविद्यानां प्राशिक्षणे दक्षः अथ च राजनीतिशास्त्रादीनामुपदेशने सफलशिक्षकरूपेणापि चित्रितो विद्यते। कुमारचन्द्रगुप्तस्य च तं प्रति निष्ठास्थे चाविचले। स एव कुमारचन्द्रगुप्तस्य दृढचरित्रनिर्माताऽस्ति। स एव मौर्यवंशीयराजप्रतिष्ठापकस्य शासकचन्द्रगुप्तस्य गुरुः। सदैव नृपतिश्चन्द्रगुप्तः किलार्यचाणक्यस्य कूटनीतिपूर्णां योजनामनुगच्छन्नेव प्रजां शास्तीत्येतस्मिन्न्ग्रन्थे वर्णितमस्ति।

अमात्यराक्षस एक एवैतादृशो राजनीतिविषयककूटनीतिमर्मज्ञो यः खलु चाणक्यस्य कुटिलनीतिरहस्यानि नन्दवंशीयधननन्दवधानन्तरं समग्ररूपेण विदाञ्चकार। परन्तु प्रमाणाभावात् शक्त्यभावात् साधनाभावात्सहायकाभावाच्च तानि प्रतीकर्तुमक्षमोऽभूत्।

आर्यचाणक्यः पूर्वं खलु आर्यसंस्कृतिविघातकान् यवनान् भारताद्बहिष्कर्तुं मन्त्रिराक्षसस्य साहाय्यं लब्ध्वा प्रायतत। तथाकरणाय धननन्दं प्रोत्साहयितुमोजपूर्णशब्दैः स्वाभिप्रायं न्यवेदयत्। परन्तु दुर्भाग्यवशात्कठोरकथनामर्षितो विलासी ब्राह्मणद्वेषी धननन्दस्तस्य तथाऽपमानमकरोद्यथा येन च स्वाभिमानी ब्राह्मणोऽवमाननासहिष्णुरार्यचाणक्यः सकुटुम्बस्य सपरिवारस्य नन्दवंशस्य समूलोन्मूलनाय प्रतिज्ञामकरोत्। तदा तस्य कठोराणि ओजस्वीनि राजापमानकराणि उग्राणि वचनानि श्रुत्वा सर्वे राजसभोपस्थिताः पुरुषा स्वयं धननन्दो, राजपुरुषाः अमात्यराक्षसादयश्च स्तब्धा अभवन् अथ च परावर्तमानं चाणक्यं प्रति कठोरवचनश्रवणातिरिक्तं किंचिदपि कर्तुं नाशक्नुवन्। एतेनार्यचाणक्यस्य तेजस्विता, निर्भीकताऽमर्षशीलतादयो चरित्रगतगुणाः स्पष्टीक्रियन्ते।

संक्षेपेणार्यचाणक्यस्य चरित्रचित्रणप्रसङ्गे एतावदेव कथ्यं यदस्मिन् ग्रन्थे उपन्यासकारेण अतिमनोयोगेन निबद्धे आर्यचाणक्यचरित्रे मुख्यतः तस्य कर्मठता, दूरदर्शितोपजापप्रयोगप्रवीणता-तेजस्विता-राज-

नीतिविषयकानुष्ठान-निष्णता -पदलिप्साविमुखताऽऽर्यसंस्कृतिसंरक्षणविधायक-दृढाभिलाषितादयो चरितगुणा सर्वैः पाठकैरनुभवितुं शक्यन्ते ।

**कुमारचन्द्रगुप्तः**

चन्द्रगुप्तश्चास्योपन्यासस्यापरो मुख्यः पात्रपुरुषः । अमुना खलु आर्यचाणक्येन सह प्रथममेलनावसरे एव वन्यवीरबालकरूपेण स्वस्य वीरभावः, निर्भीकत्वं, शस्त्रास्त्रयुद्धःकुशलत्वमोजस्वित्वं नेतृगतगुणवत्त्वं चाद्यनेकानि स्वजन्मजातवैशिष्ट्यानि अथ च भाविनृपतिप्रयोजकानि चरितानि-संसूचितानि ।

स्वपितृकल्पवनवासिसामन्तराज्ञः सान्निध्यादार्यचाणक्यस्य संरक्षकत्वमधिगत्य कुमारस्य चन्द्रगुप्तस्य सर्वे उदात्तगुणाः निरन्तरं वर्धमाना अभवन् । स किल चाणक्यसदृशं महापुरुषं गुरुमुपदेष्टारमाचार्यञ्चावाप्य राजोचितोत्कृष्टवैशिष्ट्यसम्पन्नतां लब्ध्वा परमुत्कृष्टपदं मगधसाम्राज्यशासकरूपमधिजगाम । चाणक्यस्योपदेशमक्षरशोऽङ्गीकृत्य दृढतयाचरन्नसौ मगधशासकानां मौर्यवंशीयानां राज्ञां वंशस्थापकोऽभूत् । तेन तत्सर्वं सम्पादितं यदार्यचाणक्येन लक्ष्यसाधनाय समुपदिष्टम् । स निःसन्देहरूपेण वेषेण, वपुषा, वाचा, विद्यया, विनयेन च महापुरुषस्य पदवीमधिगतवान् । मगधराज्ञा सता स्वशौर्येण राजोचितगुणेन, विलासरहितेन, प्रजापालनतत्परत्वेन, राजनीतिनैपुण्येन तत्सर्वं सम्पादितं यदार्यचाणक्येन पूर्वत एव निर्धारितम् ।

इत्थं चायमपरो नायककल्पः पात्रपुरुषोऽत्र यस्य चरित्रचरिताङ्कने ग्रन्थकारः सावधानेन मनसा प्रयत्नशीलोऽभवत् । अस्यापि चरितानि प्रभावोत्पादकानि ।

**अमात्यराक्षसः**

अमात्यराक्षसस्यापि चरित्रगतानि वैशिष्ट्यानि सर्वथाऽविस्मरणीयानि । असौ किलार्यचाणक्यस्य नन्दराजसभायां प्रथमे प्रवेशावसरे तस्य सहायक आसीत् । तत्रामात्यराक्षसस्य भारतीयार्यसंस्कृतिसंरक्षकरूपं सम्यगुद्घाटितं विद्यते । स खलु नन्दवंशविनाशिनीं कूटनीतिप्रयोगपरां चाणक्यचातुरीं घटनाघटनात्पूर्वं ज्ञातुं नाशक्नोत् । इदमपि च ज्ञातुं न शक्नोति स्म यन्महाबलाधिकृतं सेनापतिं भागुरायणं चाणक्यः कथं भेदनीतिसहकृतमहापदप्रदानलोभलिप्सासाधकवचनेन स्वपक्षं प्रति समाकृष्टवान्, कथं वा गूढछलप्रयोगेण नामाङ्कितां राजकीयमुद्रां छलेनावाप्य तस्याः साहाय्येन

मुद्राङ्कितपत्रप्रेषणेन सीमान्तनृपतिं पर्वतेश्वरं प्रलोभ्य मिथ्याप्रचारित-दुर्बलीभूतमगधसाम्राज्योपरि आक्रमणाय आह्वयाञ्चकार, कथं वाऽऽर्यां मुरादेवीं पुत्रवियोगसंतप्तहृदयां स्वाभीष्टार्थसाधनाय समायोजयत् ।

परन्तु विस्फोटकद्रव्यसाहाय्येन जाते नन्दवंशविनाशे स राक्षस आर्य-चाणक्यस्य सर्वां छलचातुरीं सम्यग्ज्ञातवान् ।

१२३ पृष्ठतः १२५ पृष्ठपर्यन्तं १३२ पृष्ठतश्च १३५ पृष्ठपर्यन्तञ्चास्मि-न्नुपन्यास उल्लिखितं वृत्तमधीत्य कोऽप्यस्य ग्रन्थस्य पाठको मदीयकथनस्य प्रामाणिकत्वं ज्ञातुं शक्ष्यति येनांशेन राक्षसस्य परप्रयुक्तकूटनीतिसूक्ष्मज्ञानपाटवं राजनीतिशास्त्रनैपुण्यं प्रत्यक्षीभवति ।

परन्त्विदमपि तथ्यं यदार्यचाणक्यापेक्षया राजरूपस्वामिभक्तस्यामात्य-राक्षसस्य पक्षो दुर्बलोऽसफलश्च ।

इदमत्रावधेयं यदमात्यराक्षसस्वामिभक्तिसर्वाङ्गीणराजनीतिज्ञानाकृष्ट-हृदयो महापण्डित आर्यचाणक्यो राक्षसं प्रति समादरभावं मनसि भजते स्म तं प्रशंसति स्म च ।

अमात्यराक्षसस्य निखिलगुणगणाभिज्ञश्चाणक्यस्तं प्रति किमप्यपूर्वं स्निग्धभावं धारयति स्म । अत एव मौर्यसाम्राज्यस्य दृढीकरणाय चाणक्य-स्यैष प्रबलाभिलाषोऽभूद् यदमात्यराक्षसः सम्राजश्चन्द्रगुप्तस्यामात्यपदवीं स्वीकरोतु । एतदभिप्रेत्य एव कूटनीतिप्रयोगयुद्धद्वारा राक्षसं प्रति कूटनीति-विजयमवाप्य तं मौर्यनृपतेश्चन्द्रगुप्तस्यामात्यपदं गृहीतुं विवशमकरोदवा प्नोच्च चाणक्यो राक्षसेन सह कूटनीतियुद्धे सफलतां सहैव च परमंसन्तोषम् ।

इत्थं चास्मिन्नुपन्यासे यथा तथाकिल मुद्राराक्षसाख्ये नाटके राक्षस एव चाणक्यस्य मुख्यः प्रतिद्वन्द्वी । अन्ततश्चामात्यराक्षसः आर्यचाणक्यद्वारा कूटनीतिप्रयोगविषयकं पराजयमवाप्यापि तस्य राजनीतिविषयकप्रयोग-चातुरीमभिलक्ष्यार्यचाणक्यस्यार्यसंस्कृतिरक्षणपरकोद्देश्यस्यावश्यकतां महत्त्वं चानुभूय तस्यानुरोधं स्वीकृत्य सम्राजश्चन्द्रगुप्तस्यामात्यपदमुररीचकार ।

अवश्यमेवामात्यराक्षसो महास्वामिभक्तो निःस्पृहः पदप्राप्तिलिप्सा-रहितो मित्रपरिपालकः प्रशंसनीयाचरणः एतादृशो महापुरुषोऽभूत् यस्य प्रतिद्वन्द्वी चाणक्योऽपि तस्य प्रशंसकः समादरकर्ताऽऽसीत् ।

**अन्यानि पात्राणि**

अन्ये पात्रपुरुषास्तूपन्यासेऽस्मिन्गौणा एव । भागुरायणो हि वीरः शूरः

सैन्यसञ्चालनोचितनेतृत्वगुणपुष्टोऽपि पदलोभी चाणक्यप्रयुक्तगूढभेदनीतिपाशस्य बोधनाक्षमः। आर्या मुराऽपि पुत्रवियोगजन्यगम्भीरवेदनानष्टविवेका चाणक्यस्यकूटनीतिजालं ज्ञातुमसमर्था, पतिभक्ता, भोगलुब्धा च समये समये कोमलहृदया यदा कदाचिच्च कठोरान्तःकरणा। पर्वतेश्वरमलयेकेतू महत्त्वाकाङ्क्षिणौ कूटनीतिपरकपाशबोधनासमर्थौ दम्भकृतमलिनविवेकौ। मलयकेतुस्तु सदा शङ्कालुः स्वशक्तिसम्बन्धिज्ञानरहितोऽत्राङ्कितो वर्तते। पर्वतेश्वरस्याचरणमत्र नगण्यं महत्त्वहीनं च।

**संवादः**

अस्मिन्नुपन्यासे दृश्यवर्णनस्यैव प्राचुर्यमथ चोपन्यासकारेण कथासूत्राणां विविधोपजापगूढचारप्रयोगादीनां वर्णनमाध्यमेन संसूचितमिति हेतोः संवादानां प्रायोऽभाव एव। यत्र तत्र एव पात्राणां मुखेभ्यः सशक्ताः समयोचिताः प्रभावकराः संवादाः निबद्धाः सन्ति।

**दृश्यानां शब्दैश्चित्राङ्कनम्**

अस्मिन् गद्यकथाकाव्ये संश्लिष्टप्राकृतिकदृश्यचित्राणां चित्रविचित्राङ्कनमतीव रमणीयं सहृदयहृदयमनोहारि च। दृश्यवर्णनस्यात्र प्राचुर्यं वर्तते। दृश्यवर्णनानि सर्वदा साहित्यिकलालित्यमयानि संश्लिष्टचित्रोत्थापकानि। उषः-प्रभात-सूर्योदय-सन्ध्या-प्रदोष-चन्द्रोदय-रात्रि-मध्याह्नादीनां प्राकृतिकसंश्लिष्टचित्राणामर्थालंकार-शब्दालङ्कारजन्यविच्छित्तिमनोरमणीयानि दृश्यचित्राणि अतीव ललितानि हृदयावर्जकानि च। अटवि-पाटलिपुत्रनगरशोभान्तःपुर-राजप्रासादादीनामपि वर्णनं मौर्ययुगीनचित्राङ्कनमधुरम्। सन्ध्या-प्रभातादीनां चित्राणि यद्यपि पुनः पुनः यथावसरेष्वङ्कितानि तथापि सर्वत्र तानि नव्यतामनोहराणि सन्ति। पाठकास्तान्यधीत्य लेखकस्यास्याः कृतेः दृश्याङ्कनपाटवं च दर्शं दर्शं बाणभट्टीयसंश्लिष्टसालंकारदृश्याङ्कनपटुत्वं स्मरन्त्येव।

एभिः संश्लिष्टप्राकृतिकदृश्यचित्रणैर्ग्रन्थकारस्य सञ्चारिभावोद्दीपनविभावभावकत्वमपि परिलक्ष्यते। तत्र चोचितपदनिवेशेन शब्दार्थयोः शब्दार्थच्छायासौष्ठवमपि स्फुटीभवति। सर्वाणि चित्रणानि सालङ्करणानि। सर्वत्र च समर्थभाषाप्रयोगपाटवमपि गद्यकाव्यकारस्य दरीदृश्यते। अभीप्सितभावार्थबोधक्षमाण्यपि चित्राणि खल्वस्योपन्यासस्य मधुरं वैशिष्ट्यम्।

**भाषाशैली**

भाषायाः भाषाशैल्याश्च विषये नाधिकं निगदितव्यं वर्तते। स्वयमेव पाठकाः प्रवाहमयीं ललितपदविन्यासरुचिरां प्रसादगुणमयीमथ च सालङ्कारां वक्रोक्तिजन्यविच्छित्तिशालिनीमभीप्सितार्थबोधनक्षमामवसरोचितरीतिगुण-जुष्टां भणितिमधीत्य ग्रन्थकर्तुः शब्दप्रयोगकौशलप्रसङ्गे निर्णेष्यन्ति स्वय-मेव च शैलीभाषयोस्तयोर्महत्त्वमनुभविष्यन्ति।

**उपसंहारः**

अस्मिन्नुपन्यासविषये उपन्यासकर्तुः कृतित्वविषये यद्यपि बहु वक्तव्यं वर्तते तथापि स्थानाभावात्समयाभावादवसराभावादात्मवैदुष्याभावाच्चाहमत्र ग्रन्थस्यास्य सुरसरस्वती-निबद्धस्य विषये संक्षेपेणैवोक्त्वा स्वविवेचनौत्सुक्य-मुपसंहरामि प्रशंसयामि चास्योपन्यासस्य निर्मातारं, विरमामि च संक्षिप्त-संस्तवात्मिकां पुरोवाणीमुपन्यस्य। भूयो भूयश्चोपन्यासलेखकाय साधुवादं समर्पयामि कामये च यदुत्तरप्रदेशसंस्कृताकादम्या लक्ष्मणपुरस्थायाः सोत्सा-हेन प्रयासेन प्रकाशिता एषा रचना संस्कृतपाठकलोकप्रिया स्यात्।

पुरोवाणीलेखने याः यास्त्रुटयो मया विहितास्ताः सर्वा सहृदयैः पाठकैरुदारमानसैरवश्यमेवोपेक्षणीया क्षन्तव्याश्च भविष्यन्तीति दिक्।

जयतु संस्कृतम् जयतु भारतभारती।

संवत्सरे २०४० वैक्रमाब्दे
चैत्रशुक्लायां रामनवम्याम्

निवेदकः
**करुणापतित्रिपाठी**

## प्रथमः परिच्छेदः

'यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत' ।
'गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद् वै तत्' ॥
'या प्राणेन संभवत्यदितिर्देवतामयी' ।
'गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत । एतद् वै तत्' ॥
'अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।'
'दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ।
एतद् वै तत्' ॥
'यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ।'
'तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन । एतद् वै तत् ॥'
'यदेवेह तदमुत्र यदमुत्र तदन्विह'
'मृत्योः स मृत्युमाप्नोति य इह नानेव..............'

..........अविरतपाठ एव तस्मिन् प्रशान्ताश्रमस्थानमध्यमलङ्कुर्वतो महतः सायंप्रभारक्तपल्लवपटलस्य वटवृक्षस्याधस्तान्निषण्णे तपस्तेजोभासुरे वृद्धे गुरुवर्ये, अविरतानुपाठेष्वेव परितो मण्डलाकारेणोपविष्टेष्वाश्रमवासिषु कुमारेषु,—उदभवदकस्माद् वित्रासितपरिक्लान्तपतत्रिगणः, उद्वेजयन् मनो, भीषयन् वनेचरान्, कंपयन् अरण्यानीमनेकाश्वह्रेषारवोपबृंहितः, '.......इयं गृहीता.......इयं गृहीता' एवंप्राकारकविविधभाषणसंभिन्नः कोलाहलः ।

'किं नु खल्वकस्मादिदमापतितम्' इति जिज्ञासातम्यमानमानसेषु चकितचकितं दिक्ष्ववलोकयत्सु तेष्वाश्रमवासिषु सजवं प्रविवेशाश्रमपदं त्वरितप्रधावनपरिश्रान्ता धूलिधूसरधवलवर्णा भयविभ्रान्ततारका वेपमानसर्वाङ्गा श्रमविवृतमुखनिपतद्दूर्वाग्रासा भयव्याकुलं मुहुर्मुहुः पश्चादवलोकयन्ती गुरुवर्यस्य प्रियाश्रमधेनुः, तदनु च केचन प्रजविमहाप्रमाणकृष्णतुरङ्गमाधिरूढा मृगयाश्रमस्वेदार्द्रललाटपट्टाः लोहकवचावृतकायाः

श्मश्रुलमुखाः संचारिणः रजोगुणपुञ्जा इव निष्पापस्यापि निष्कारणमेव भयमुत्पादयन्तः सुतीक्ष्णभल्लधारिणो विद्युल्लतोद्भासिनं वर्षाजलदस्तोममिव युगान्तकारिणं विडम्बयन्तः क्रूराः यवनसैनिकाः।

'नूनमेते दुराचाराः नातिदूरवर्तिनः कटकादकुतोभयं मृगयार्थं परिभ्रमन्तोऽस्मदाश्रमधेनुं वराकीं जीवग्राहं गृहीतुमिहागता····' इति तत्क्षणमेव साक्षात्कृत्य व्याकुलेषु तेषु आश्रमवासिषूपाययोजनां विचारयत्स्वेव, तेषामन्यतमो यवनसैनिकः हठात् समुपसर्पिततुरङ्गमो मदोन्मत्तमौद्धत्यजडमपरिस्फुटवर्णमसंस्कृताक्षरं जगाद—'समर्पय रे वृद्धापसद एनां गामस्मिन्नेव क्षणे।·······मृगयाकौतूहलेनैनामनुसरन्ता वयं कटकं विहायैतावद्दूरमागताः परिश्रान्ताश्च।·······गोमांसभक्षणेच्छा नूनं बाधत अस्मान् प्रबला।···· ·· तन्मैवं मंस्थाः·······'क्षीणगात्रान् दुर्बलकायान्निःशस्त्रान् अस्मान् अवलोक्य समुपजातदया अगृहीत्वैवैनामस्मद्वचनानुरोधेन एते स्वस्थानं यास्यन्ति'—इति।

स वृद्धतपस्वी तु तामिमामनपेक्षितामापदं दृष्ट्वापि अविचलितः, ईषद्विहस्य स्वसमीपमागतां संमुखापन्नयमदूतभयव्याकुलां दीनां गौरीं वयोतिपातवेपमानेन पाणिना परामृशन् निर्भीकया दयार्द्रया दृष्ट्या स्नपयन्निव, तं मदोन्मत्तमश्वारोहमवदत् 'कीदृशी खल्वियमायुष्मतः पापवुद्धिः? ·· ····कीदृशः खल्वयं कल्याणवुद्धेर्गोवधेऽयमाग्रहः? ····किं खल्वपराद्धमेतया वत्सस्य यदियमेवममानुषया रीत्या दण्ड्यते?····गौर्नामास्माकं सर्वेषामेवापरा जन·······'

'विरम रे मूढ बहु-जल्पनात्'····प्रत्यवदत् स यवनः। 'अप्यवलोकयसि तीक्ष्णमेतं मम भल्लम्?····अहो समुत्सुकायते वत्स एवं बहुविधं प्रलपन्तं कण्ठग्राहं समालिङ्ग्य मौनमात्यंतिकं ग्राहयितुम्।··इयमस्माकं पापबुद्धिर्वा कल्याणसंपद्वेति वयमेव सुष्ठु जानीमः। मा खलु तत्र भवान् वार्द्धक्यपलितां स्वबुद्धिं प्रेरयतु।····अथवा किमेभिः कालमात्रापहारिभिः उत्तरप्रत्युत्तरैः? अपहरतेमां सैनिकाः! · रे वृद्ध! किमायासयसि वृथैवाऽत्मानम्? श्रृणु।·· स्वल्पोऽप्यत्र प्रतीकारस्त्वां तवेमान् अर्भकांश्च मृत्युमुखं प्रापयन् तवैतदाश्रमपदञ्च विध्वंसयन् प्रदर्शयिष्यति यवनसैनिकानां दिग्विजयशौर्यं····'

उच्चारयत एव तस्येमानि वचनानि, अकस्मात् कुतोऽपि महता जवेनागत्यैकस्तीक्ष्णमुखः शरस्तमुरस्याजघान। लोहकवचावृतसर्वांगतया

स्तोकमप्यक्षतः, आकस्मिकप्रहारक्रुद्धः प्रतिहिंसाभावनोदग्रः स तु 'कुतः खल्वियम्'इति जिज्ञासया दृष्टिं दिक्षु क्षिपन् सहसाऽवलोकयामास नातिदूरमवस्थितं कोदण्डपाणिं द्वितीयशरसंधानव्यापृतकरं मृगचर्ममात्रोत्तरीयकमनतिप्रौढमेकं क्षत्रियकुमारम्। अधावच्च समुत्क्षिप्तभल्लोग्रहस्तो दिशि तस्यामेव। तमनु चान्ये यवनाधमाः। स बालवीरस्तु तानश्वारोहिणो महता जवेन समापततो वीक्ष्याप्यविचलितो गृहीतखड्गो महता शौर्येण योद्धुमारेभे। तञ्चैकाकिनं मृगचर्ममात्रावृतकायं बालं योद्धारं तं बहुभिः लोहकवचसञ्छादितशरीरैः सुतीक्ष्णभल्लहस्तैस्तुरगाधिरूढैर्यवनैः सर्वतः परिवेष्टितमवलोक्य प्रज्वलितो वृद्धो गुरुः, विधूय शान्तभावं, सर्वानाश्रमवासिनः शस्त्रग्रहणायादिदेश।

जज्वाल च कतिपयक्षणेष्वेव तस्मिन् प्रशान्ते तपोवने स्वनीडप्रविष्टैर्निद्रायमाणैर्द्विजगणैः, निर्वातस्थिरैर्भयस्तब्धैरिवाश्रमतरुभिः, भयवेपमानैर्गोवृन्दैश्चाकुलमोक्षितः परस्परसंघर्षकोलाहलभीषणः भाविनां महतां समरप्रसङ्गानां प्रात्यक्षिकोऽभ्यास इव यवीयान् स्तब्धकर्णैः भयाक्रान्तैश्चित्रलिखितैरिव मृगकदम्बकैश्चकितचकितं श्रूयमाणो भयङ्करो युद्धानलः।

असमर्थ इवावलोकयितुमसमं तं समरप्रसङ्गं भगवान् सहस्रकिरणः पश्चिमांबुनिधौ ममज्ज।

शनैः शनैश्च संख्याधिकैः रणकलाकोविदैर्विविधशस्त्रसम्पन्नैस्तुरंगमाधिरूढैः यवनसैनिकैः क्रमशः पराभूयमानान् स्वल्पबलान् शस्त्रधारणानभ्यस्तान् कोमलवल्कलावृतकायान् पदातीन् विविधयोगाभ्यासकृशकायान् स्वसंस्कृतिरक्षणाभिनिवेशेन जीवितनिरपेक्षं युध्यमानानपि वीरानाश्रमवासिनो धरातले पततोऽवलोक्य खिन्नस्य दिवसस्य हास इव सायंरागोऽपि विलयं जगाम। आच्छादयामास च दुःखिताया वनदेवताया दुःखसंभार इव नैशोऽन्धकारः—'अस्य भीषणस्य दृश्यस्य तिरोधापनमेवेष्टं—इति मत्वेव निहतैराश्रमवासिभिः संकीर्णपरिसरमाश्रमपदम्।

यवनसैनिकास्तु तानल्पवयसः कतिपयानाश्रमवासिनो यूनः हत्वैव विजयानन्दोन्मत्ताः प्रतिहिंसाभावनाप्रचण्डाः, "अयमेव वृद्धः शृगालः प्रतीकारं प्रोत्साहयामास"—इति तं वृद्धम् आश्रमगुरुं प्रथमत एव खड्गप्रहारविकलाङ्गं तस्यैव वटवृक्षस्य मूले व्रतताभिर्बद्ध्वा नयनयोः जंघयोश्च भल्लैर्विभिद्य विलुप्तचेतनं चक्रुः।.........पिशाचाविष्टा इव

सर्वाण्युटजानि, पर्णशालाः, लतामण्डपान् गोस्थानानि कुलगुरुविश्राम-स्थानं—किं बहुना निखिलमेव तपोवनं,—विध्वंसयामासुः, निन्युश्च सर्वं तत्रस्थं गोधनं बन्दीकृत्य स्वकटकं विहसन्तोऽवशिष्टम् ।

....उत्तरे भारतवर्षे, आर्यसंस्कृतेरावासभूते पञ्चनदप्रदेशे, एकस्मिन् तपोवने लोमहर्षिकास्वेतासु घटनासु घटमानासु तस्याश्रमपदस्य कनिष्ठोऽधिष्ठाता तपोधनो मनस्वो विप्र आर्यचाणक्यो नाम सायं-संध्यामुपासितुं स्वाश्रमान्नातिसमीपवर्तिन्याः पुष्करिण्याः पावने शीतले निपतितकमलपरागकषाये जलेऽर्द्धनिमग्नोऽस्ताचलचुम्बिमंडलाय दिनकरायार्घ्याञ्जलिं समर्पयन् पवित्राघमर्षणजपचलदधरोष्ठः नित्यकर्मानुष्ठाने व्यापृतचित्त आसीत् ।

सहसैवोदभूत् तस्य निर्विकल्पे भगवद्दिनकरतेजोध्यानसंलग्ने प्रशान्ते निर्वातस्थिर इव सरसि, चेतसि दुर्लक्ष्यस्वरूपाऽज्ञेयकारणा, व्याकुलयन्ती हृदयं, भीषयन्ती मनः काप्याशङ्का । असकृत् प्रयतमानोऽपि न स शशाक ध्यानविचलितं स्वचित्तं पुनरप्येकाग्रं कर्त्तुं ।........"किन्नु खलु कारणं स्यादस्याकस्मिकस्याननुभूतपूर्वस्य चित्तोद्वेगस्य ? नहि किञ्चिदपि निमित्तमुत्पश्यामि बहु चिन्तयन्नपि....' इति वितर्कयन् कथमपि परिसमाप्य सायंसन्ध्यावन्दनं प्रत्यग्रस्नानार्द्रशिख आगृहीतकमण्डलुः रुद्राक्षमालाव्यापृतैकहस्तो गृहीतधौतवल्कलः पठन् स्तोत्राणि चचालाश्रमपदं प्रति त्वरितगतिः । आश्रममार्गे तैस्तैः दुष्टैः शकुनैरधिकतरमेवोद्वेजितः, 'सर्वथा देवताः स्वस्ति करिष्यन्ति'—इत्यात्मानमुद्विग्नं व्यवस्थापयन्, असमर्थं इवावलोकयितुं भाविनं तस्य सन्तापातिरेकं सत्वरमस्तंगते भगवति सहस्रकिरणे, निर्घृणं यवनकर्म वीक्ष्य विमोहिताया वनश्रियो मोहान्धकार इव वनप्रान्तमाच्छादयति तमःपटले, 'अननुभूतपूर्वमेतन्मर्यादातिक्रमणमनुभूय, मानधनोऽयं चाणक्यः प्रचण्डक्रोधः किमु अनुतिष्ठेत्'—इति भयमूकद्विजकुलेष्विव स्तब्धमवस्थितेषु तपोवनतरुषु, युद्धनिहताश्रमवासिजनकलेवरस्पर्शभीत इवाचलति सायंसमीरे, अशुभां वार्तामार्यचाणक्याय निवेदयत्स्विवोच्चैः शब्दायमानेषु दिवाभीतेषु, स तपोधन आश्रमोपान्तप्रदेशं प्राप ।

दूरादेव च तदश्रूयमाणगोकुलहुंकृति निरतसायंस्तोत्रपाठरवं स्तब्धवृक्षं निश्चलरुतं निर्जनमिव परित्यक्तमिव शून्यशून्यमाश्रमपदं वीक्ष्य शङ्काकुलो, 'कथमिवाद्य श्मशानमिव निष्प्राणं भीषयत्याश्रमपदम् ?

........कुत्र खलु गता भवेयुः शाकलायनप्रभृतय आश्रमवासिनो ब्रह्मचारिणः ! किमिवाद्य न श्रूयते गुरुवर्याणां धीरगम्भीरः सायंस्तोत्र-पाठः ? कथमिवाद्य गौर्यादयो गावः परित्यज्य दोहनहुँकृतिमिमां शान्तिमाश्रयन्ते ? कथमिवाद्य न प्रकाशयति वृक्षराजिपरिवेष्टितमाश्रमपदमेकोऽपि प्रदीपः ? .... ..इत्येवमादि स्वात्मनैव वितर्कयन्, त्वरितगतिः आश्रमपदं प्रविवेश। ........ददर्श च सहसा प्रवेशद्वार एव विक्षतं रुधिरार्द्रम् आश्रमवासिन एकस्य यूनः कलेवरम्।

उत्तेजितश्च,—'कीदृशः खल्वयमनभ्रवज्रनिपात'—इति व्याकुलया दृष्ट्या इतस्ततोऽवलोकयन् अक्षिलक्ष्यीचकार विभग्नान् लतामण्डपान्, समुद्ध्वस्तप्रायाणि उटजानि, शून्यभीषणानि गोस्थानानि, तुरगखुरोत्खातानि रुधिररक्तान्यजिराणि, सर्वत्र च विकीर्णानि बीभत्सदर्शनान्याश्रमवासिनां मृतशरीराणि।........'अहो! बलोन्मत्तैर्दुर्जनैः कैश्चिदाश्रमोऽयं विध्वंसित'........इति तर्कयन्, 'अपि कश्चिद्युवा स्वल्पावशिष्टजीवितो मामस्या विपदो वृत्तान्तं निवेदयेत्........?' इति क्षुभितया जिज्ञासया विकीर्णानि कलेवराणि निरीक्षितुमारेभे। नैकमपि तु जीवन्तं लेभे। ......किं-कर्त्तव्यविमूढश्च......'क्व नु वृद्धा गुरुचरणा' इति जिज्ञासयाऽऽश्रमपदमखिलमवलोकयन्......अपश्यत् सहसा महतो वटवृक्षस्याधस्तादेव व्रततीभिर्निबद्धं, रक्तारक्तकायं विगतप्रायचैतन्यतया लम्बमानमस्तकं स्वगुरोः शरीरम्।

'अहो निर्घृणानामत्याचारः' इति सहसोदीर्य, समीपमुपसृत्य, सत्वरं बन्धनान्यपनीय, मृतप्रायं तच्छरीरमङ्के धृत्वा तच्छुश्रूषायां प्रयत्नमकरोत्। सुचिरं प्रयतमानस्य तस्य मनस्युदभूत् जीविताशा। प्रत्यग्रनिक्षिप्तजलकणार्द्रजिह्वस्य किञ्चिद्-विकसितनिस्तेजस्कनयनस्य च तस्य वृद्धस्य तपस्विनः स्वप्रियशिष्यावलोकनार्थं प्रत्यागतमिव प्रादुरभूत् पुनरपि चैतन्यज्योतिः। अकरोच्च प्रयत्नं महता कष्टेन किञ्चिद् वक्तुं, गभीरत्वात् भल्लाघातानां विस्पष्टं वक्तुं न शशाक। तं तु गुरोर्विफलं प्रयासमवलोक्य नितरां खिन्न आर्यश्चाणक्यः सत्वरं गत्वा समीपवर्तिन उद्ध्वस्तप्रायस्य स्वोटजस्याभ्यन्तरे भागे बहु अन्विष्यानयामास रसायनकरण्डिकामेकामौषधोपचारे च प्रयत्नं विशिष्टमकरोत्। तस्य रसायनस्य प्रभावेण जज्वालास्तंगतकल्पमपि मुनेः प्राणज्योतिः। तं पुनः प्रत्यागतचेतनमवलोक्याऽऽशान्वित आर्यश्चाणक्यश्चलदोष्ठतया तर्कयित्वा

तस्य विवक्षां''''सुचिरं दत्तकर्णोऽश्रृणोदस्पष्टानि त्रुटितत्रुटितानि''
'यवनै'''''''गौरी''''प्रतीकार''''''अपमानिता''''''''वैरनिर्या'''''''''
एतादृशानि कतिपयान्यक्षराणि ।

अकस्मादेव विरतां तस्य वाचमनुभूयाऽऽशङ्काकुलः निपुणतरमवलोकयन् विदांचकार स्वगुरोः प्राणज्योतिर्निर्वाणमात्यन्तिकम् ।

आदित एव स्वेच्छाचारियवनविद्वेषिणस्तत्रापि तेषां तथाविधमत्याचारं साक्षादनुभवत आत्मसंमानिन आर्यचाणक्यस्य हृदये जज्वाल तान्यशनिपातसंनिभान्यस्फुटान्यक्षराणि श्रुत्वा महान् क्रोधवह्निः योऽपसारयन् सर्वविवेकं, दहन् शान्तिभावं, भस्मीकुर्वन् पापपुण्यविचारं, समुल्लङ्घयन् सर्वा मर्यादाः क्रमशः प्रचण्डतरोऽभूत् ।

पर्यालोचयत एव सर्वां परिस्थितिं तस्याननुभूतपराभवक्षुभितस्य समुल्लङ्घितस्य मूर्तस्य ब्राह्मतेजस इव, सुप्तोत्थितस्य भारतवर्षात्मन इवात्मनो दयनीयां दशां साक्षात्कुर्वतो दिव्याञ्जनशलाकोद्घाटिताभ्यां नयनाभ्यां स्वकर्त्तव्यं पश्यतो मनस्विन आर्यचाणक्यस्य-संसूचयन्तीव भारतीयानां मोहनिद्रापगममन्तर्दधौ सा निशा । ''''''''व्यञ्जयन्तीवार्यसंस्कृतेः सौभाग्योदयं सर्वतः प्रससाराऽऽरुणा प्रभा ।

प्रशंसन्त इवार्यचाणक्यस्य महान्तं संकल्पमारेभिरे सुप्तोत्थिता द्विजगणाः प्राभातिकानि मांगलिकानि गीतानि गातुम् ।

शनैः शनैरुदगात् व्यतीतायां सायंवेलायां तथा प्रत्यक्षीकृतस्य निर्घृणस्यात्याचारस्य पुनः पुनः पर्यालोचनेन शतगुणितामर्षं इवारक्तमुद्रः भगवान् सहस्ररश्मिः ।

तस्य च बालपल्लवारक्तैराश्रमतरुकिसलयान्तरनिपतितैः करैः सानुकंपं परामृश्यमान इव, मन्दं मन्दं वहद्भिस्तुषारशीतलैः प्राभातिकैः समीरणैः निःशब्दमाश्वास्यमान इव, श्रुतिसुखं कूजद्भिर्द्विजगणैः सम्बोध्यमान इवाऽऽर्यश्चाणक्यः प्रसह्य परित्यज्य शोकजडां विचारतन्द्रां, स्पष्टतरं दृश्यमानं तदमानुषं कर्मावलोक्याधिकतरमेव क्रुद्धो, दृढीकृत्य स्वसंकल्पं, संयम्य शोकवेगाकुलमात्मानं, मृतानां तपोवनवासिनामन्तिमसंस्कारादि सधैर्यमन्वतिष्ठत् दृढतरीभूतनिश्चयप्रभोद्भासितमुखमुद्रः ।

—:०:—

## द्वितीयः परिच्छेदः

अशनिपातसंनिभां तामापदं कर्णोपकर्णिकया निशम्य तत्रैकत्रभूतानां यवनदुराचारग्रस्तानामपि किञ्चिदपि कर्त्तुमसमर्थानां दीनानामासन्न-ग्रामटिकावासिनाञ्च साहाय्येन स्वसंस्कृतिरक्षणपराधेनैव धरातलेऽप्रति-बोधार्थं शायितानाम् आश्रमवासिनाम् और्ध्वदैहिकं कर्म महता धैर्येण विधिवदनुष्ठाय स विप्रवरो वटवृक्षस्य तस्याधस्तात् मुहूर्तं निषण्णो विविधान् स्वप्रतिज्ञापूर्तिमार्गान् पर्यालोचयन्—'संस्कृतेर्धर्मस्य च रक्षणं सनातनचातुर्वर्ण्यव्यवस्थानुसारं क्षत्रियाणामेव परमं कर्तव्यम्। कलियुग-प्रभावात्तु सम्प्रति राज्यसुखोपभोगलिप्तचित्ता नृपतयोऽस्मिन् परमे कर्त्तव्ये दुःखदमौदासीन्यं भजन्ते।······एतादृशन्तु महत् कार्यम् असहायेन राजनीतिपरमकुशलेनापि न कर्त्तुं शक्यम्। अतो यवनोच्छेदार्थं कृतसंकल्पेन मया कस्यापि नृपतेः साहकार्यमवश्यमन्वेषणीयम्। ······तत्रापि यदि तदर्थमभ्यर्थितो नृप आभ्यन्तरकलहक्षीणसामर्थ्यः सारासार-विवेकबुद्धिहीनो विषयसुखोपभोगलोलुप आर्यसंस्कृत्यभिमानशून्यश्च तर्हि कार्यसिद्धेरपेक्षया विफलताया एवाधिका संभावना। तत् ···प्रथमं तावत् पर्यटता मयाऽखिले भारतवर्षे राजकीयां परिस्थितिञ्च सुनिपुण-मभ्यस्यता शूरः स्वाभिमानी यवनविद्वेषी बलाढ्यः कश्चिन्नृपतिरन्वेषणीयः, यो निशम्यैतत् निर्घृणं कृत्यं समुत्तेजितः, परिकल्प्य यावनसंकटस्य यथार्थं स्वरूपं प्रबुद्धः प्रतीकारभावनोद्दीपितः, मदुपदिष्टं राजनीतिमार्गमनुसृत्य, जागरयित्वा भारतवर्षस्य प्रसुप्तां दुःसहप्रतापां क्षात्रशक्तिं, महता वेगेनाऽऽक्रम्य शत्रून्, तान् कांदिशीकान् विधातुं स्वयमेव समर्थः स्यात्······' इत्यात्मनैव संप्रधार्य जगन्नियन्तारमंगीकृतमहत्तमकार्य-सिद्ध्यर्थं संप्रार्थ्य, गम्भीरोदात्तमूर्तिः, प्रशान्ताशयः, तस्मिन्नेव समये, गगनमध्यारूढेऽभिभूते तपस्विनीव तीव्रतरं तपति भगवति मरीचिमालिनि प्रौढातपक्लान्तेषु विहाय गगनविहारं स्वनीडावस्थितेषु मंद मंदं कूजत्सु विहगेषु, परित्यज्य शाद्वलानि तरुच्छायासुखासीनेषु प्रारब्धरोमन्थेषु तंद्रालसेषु मृगकदम्बकेषु, विध्वंसितमाश्रमस्थानं प्रविश्य चकितचकित-

मितस्ततः परिभ्रमत्सु यवसग्रासलालसेषु वनमयूरेषु·······समुत्थाय उद्ध्वस्तातपक्लान्तलतामण्डपं शुष्करुधिरप्रवाहारक्तभूतलं चिरपरिचितमप्यपरिचितमिव भासमानं तपोवनं सुचिरमनिमेषनिश्चलाभ्यां क्रोधारक्ताभ्यां खेदक्लान्ताभ्यां नयनाभ्यां निपीय, नमस्कृत्य स्मृतिमात्रावशेषौ पावनौ गुरुवर्यचरणौ, ध्यात्वा संकल्पितसिद्धिदायि परमं दैवतं, संयम्यातीतस्मृतिकल्लोलसंक्षुभितमाशयं·······अभ्यर्च्यमान इव वनदेवताभिः निपतत्पुष्पनिकरैः सानुकंपं परामृश्यमान इव सृष्टिदेव्या समीरणहस्तैः, कार्यसंसिद्धिसूचकैः शुभशकुनैः प्रोत्साहितो धीरगंभीरैः पदैर्नमयन्निव धरणीतलं कमण्डलुहस्तः निर्जगाम।

उपरि विनिर्दिष्टायास्तथाऽग्रे विनिर्दिश्यमानानां चिरस्मरणीयानां घटनानां रंगमंचो ख्रिस्तपूर्वचतुःशतकालिको भारतवर्षो धार्मिक-राजकीय-सामाजिकादिसर्वविधैरपि दृष्टिकोणैरव्यवस्थितोऽनिश्चितः संक्रमणशीलस्वभावश्चासीत्। आर्यसभ्यतायाः सुवर्णकालः सृष्टिनेमिक्रमेणातीतविषयीभूत आसीत्। तमनु च आर्याणां सर्वंकषा सामाजिकव्यवस्था आर्यसभ्यताया जीवनशक्तिः—समाजपुरुषस्य बुद्धिसामर्थ्यं प्रतिफलतां ब्राह्मणानां, शरीरसामर्थ्यं प्रतिफलतां क्षत्रियाणां, द्रव्यसामर्थ्यभाजां वैश्यानां, संस्कारहानत्वेन त्रैवर्णिकनिर्दिष्टं मार्गमनुसरतां शूद्राणां परस्परसहकार्येण प्रगतिः,—शनैः शनैः संक्षीयमाणसामर्थ्यासीत्·····। प्रादुर्भूताऽऽसीच्च तत्स्थाने दुःसहा सर्वविनाशजननी कठोरा विस्मृतस्वस्वकर्त्तव्यानां स्वाधिकारोपभोगमात्राभिनिवेशानां त्रैवर्णिकानां परस्परपीडनमात्रफला चातुर्वर्ण्यव्यवस्था।·······एवम् आत्मनः सर्वातिशायिनीं सामाजिकावस्थितिं परपीडनायैव योजयत्सु जातिब्राह्मणेषु स्व-शस्त्रसामर्थ्येन विजित्य परराज्यानि सुखोपभोगमात्रासक्तेषु मदोन्मत्तेषु क्षत्रियेषु आर्थिकशक्तिभिः सकलमेव समाजपुरुषं शोषयत्सु वैश्येषु त्रैवर्णिकोपजीव्यमानेषु च दीनेष्वंत्यजेषु—, विलुप्तायां समाजसेवापरमध्येयायामादर्शवर्णव्यवस्थायां, स्वभावत एव प्रादुरभवन् विविधाः प्रतिक्रियाः विचारशीलेषु समाजेषु·····यासां प्रथमो महांश्च परिणाम आसीद् बौद्ध-जैनधर्मयोरुद्गमः·······सनातनवैदिकधर्माधःपातप्रतिक्रियास्वरूपयोरनयोर्धर्मयोरुद्गमेन प्रथमत एव संकीर्णस्वरूपा भारतीयानां सामाजिकव्यवस्थाऽधिकतरमेव संकीर्णतामाससाद।·······विस्मृतस्वधर्मसिद्धान्ता एतद्धर्मानुयायिनोऽपि परस्परकलहग्रस्ता विधूय सर्वं सारासारविवेकमन्योन्यविनिपातन एवाभिनिविष्टा आसन्।

तटस्थ इव स्थानात् स्थानान्तरं परिभ्रमन्, ग्रामटिकासु ग्रामेषु नगरेषु महानगरेषु दूरविदूरप्रसृतेषु भारतीयराज्येषु स्थितिं राजकीयामभ्यस्यन् उपर्युक्तप्रकारामव्यवस्थामवलोकयंश्चार्यश्चाणक्यो नितरां समुद्विग्नो मनस्यकरोत्—

'अहो भारतीयानामधःपातः ! ·······एतादृशं पारस्परिककलहजर्जरितसामर्थ्यं समाजमुपलभ्य यदि परकीया अविलम्बेनैव स्वसाम्राज्यविस्ताराकांक्षां पूरयेयुस्तर्हि क इव विस्मयः ? अहो शोचनीयता भारतीयसमाजपुरुषस्य !······विलुप्तमेव प्राचीनैरार्य्यैः निसर्गनिर्मितान् क्षमताभेदानवलम्ब्य विरचितं चातुर्वर्ण्यम् !·······सात्त्विकगुणोत्कर्षशालिनः सर्वश्रेष्ठसामाजिकपदवीमलङ्कुर्वतो ब्राह्मणस्य स्वनिरतिशयबुद्धिवैभवेन·· शारीरिकसामर्थ्यभाजस्त्यागिब्राह्मणवशंवदस्य क्षत्रियस्य स्वसर्वोत्कृष्टशस्त्रसामर्थ्येन, ·······आर्थिकसामर्थ्यसंग्रहप्रवृत्तेर्वैश्यस्य स्वोपार्जितविभवसदुपयोगेन, ·····आध्यात्मिकशारीरिकार्थिकसामर्थ्यहीनस्य संस्कारशून्यस्य सामाजिकनिम्नतमपदस्थितस्य शूद्रस्य त्रैवर्णिकसेवया······ एवं तत्तत्-सामर्थ्योपपन्नानां समाजघटकानां सन्तुलितसहयोगप्रदानेनाखिलस्य समाजपुरुषस्य सर्वाङ्गीणोन्नतिः प्राक्खलु सुशक्यैवाऽऽसीत् ।'

'अधुना तु अस्या आदर्शव्यवस्थाया मूलभूते सांस्कृतिके सिद्धान्ते विलुप्ते एषा भारतीयसमाजसङ्घटनाऽऽन्तरिकतीव्रविद्रोहजर्जरितकलेवरा बाह्याक्रमणदुर्बला अवतिष्ठते ।

'विलुप्ता नूनं सा निष्कामकर्मानुष्ठानशक्तिः ।·····अस्तंगतं तत् सर्वकल्याणेच्छया वैयक्तिकाकांक्षाणां समर्पणम् ।·····स्मृतिमात्रेऽवशिष्टमधुनाऽऽर्यावर्तस्य सर्वातिशायि ब्राह्मं तेजः ।······दुर्धर्षं च क्षात्रं सामर्थ्यम् ।'

'अतीतान् कतिपयान् मासान् स्वसंकल्पितकार्यपूरणसमर्थं नृपमन्वेषयता मया प्रायः सर्व एव भारतवर्ष अवलोकितः ।····· दूरस्थप्रदेशेषु प्रसृतो विविधव्यवसायानुशीली नानाभाषाभाषी भारतीयः समाजोऽधीतः ।·······

·······विख्यातेषु विद्यापीठेषु निभृतं वसता आर्यसंस्कृतितेजोऽपि गवेषितम् ।·····परन्तु अहो दुर्दैवम् !·····न मया एकोऽपि स्वाभिमानी नरेश एतावत्कालपर्यन्तं दृष्टः,··· · यो विधूय सुखोपभोगलालसां·······

एकीकृत्य भारतीयां शक्तिं विकीर्णां परकीयाक्रमणप्रतिरोधार्थं बद्ध-परिकरो भवेत् ।'

'प्रभूतयज्ञदक्षिणालम्पटाश्चेमे 'द्विजोत्तमाः' स्वब्राह्मसामर्थ्येन प्रसुप्तं भारतीयं क्षात्रं तेजः जागरयेयुरिति का प्रत्याशा ?'

'इममेव सर्वविनाशकं पारस्परिककलहं संवर्ध्य यवनसम्राट् अलक्षेन्द्रो गान्धारान् पञ्चनदीयांश्च प्रदेशान् विजिग्ये । ····तस्यैव च कुटिलां नीतिमनुसरन्तो भारतवर्षं निखिलमेव स्वायत्तीकर्त्तुं संचेष्टन्ते तदीयाः सैन्याध्यक्षाः । क्षुद्रराज्यलाभेन स्वं धन्यं मन्यमाना मूढा इमे भारतीयराजानः परस्परकलहक्षीणसामर्थ्या उपस्थितेष्वपि अनुकूलेषु अवसरेषु परकीयान् न पराजयन्ते प्रत्युत पारस्परिककलहेषु तेषां साहाय्यमपेक्षन्ते । प्रतिकूलदैवविमोहितास्तु विषयसुखोपभोगजडमतयो न साक्षात्कुर्वन्ति भीषणं भाविनं कालम् ।'

'एवं सर्वतः-प्रसृतनिराशाघनतमःपटलावृतायां परिस्थितावेक एव प्रदीपः, समुत्तेजयन् स्वप्रकाशेनोज्ज्वलकालाशां, मामङ्गीकृतमहत्तमसंकल्प-सिद्धिविषय आश्वासयति ।'

'श्रुतं खलु मया तत्र तत्र प्रवसता, वाणिज्यव्यवसायार्थं सुदूरगामिभ्यो वणिग्भ्यो दूरस्थोदन्तमप्यधिगच्छता, पूर्वभारतवर्षीयस्य भारतीय-गौरवैकस्थानस्य बलाढ्यतमस्य मागधसाम्राज्यस्य यशः ।'

'तदेव केवलमेकं भारतीयसाम्राज्यमधुना परस्परकलहग्रस्तान्य-न्यानि सर्वाण्यपि राज्यानि सामर्थ्येनातिशेते । तस्यैवोत्कर्षपरमोच्च-शिखरविराजमानस्य साम्राज्यस्य सामर्थ्यं कर्णोपकर्णिकया निशम्य भीता यवनसम्राजो विश्वजयिन्यः सेनाः परित्यज्य निखिलभारतवर्ष-विजयमनोरथं परावृत्ताः । तस्यैव प्रभावेणावरुद्धगतयो यवनसेनाध्यक्षाः स्वभारतीयराज्यसीमापरिवर्धने न तथोत्सहन्ते ।'

'तन्मन्ये-तदेव राज्यमधुनाऽपि यवनानां समुच्छेदने समर्थम् ।'

'श्रुतं खलु मया-तस्य बलाढ्यस्य मगधसाम्राज्यस्य स्वामी सम्राट् घननन्द आस्ते नन्दवंश्यः । अयञ्च नन्दवंशः पुराण-प्रसिद्धस्य रामचन्द्रा-वतारपरिपूतस्य सूर्यवंशस्यान्यतमः शाखाप्ररोह इति पौराणिकाः । स्वयं सम्राट् तु—यथाऽधिगतं मया तस्माद् देशात् प्रत्यागच्छद्भ्यो वणिग्भ्यः—तादृशस्य विशालस्य साम्राज्यस्याधीश्वरोऽपि विषयभोगासक्तो न तथा राज्यकार्येषु संलगते यथा तस्य प्रधानामात्यो राक्षसः ।'

'किं बहुना—राक्षसस्यैव राजनीतिनैपुण्येन मागधं साम्राज्यं विषयभोगलोलुपाधीश्वरमपि समुत्कर्षशिखरसमोपवर्ति प्रभावबाहुल्येन दुर्धर्षानपि यवनान् भीषयदार्यसंस्कृतेरेकमात्रमवलंबनमास्ते। प्रायः सर्वत्रैव प्रधानामात्याः क्वचित्स्वोदरंभरिणः, क्वचित् स्वकीयाप्तजन-भरणतत्पराः, प्रभूतधनप्राप्तिलक्ष्याः दृष्टचराः। तेषां हि प्रजाजनकल्याण-सम्पादनतत्परता स्वस्वामिवैभववृद्धिचिकीर्षा वा क्वचिदेव निरीक्षण-पथमवतरति। अनियंत्रितस्वस्वामिचित्तवृत्त्याराधनमेव केवलं स्वपरमकर्त्तव्यत्वेन गणयन्तः, स्वमहत्तमपदसंरक्षणमात्रव्यग्रचित्ताः न्याय्यशासनचिन्तायां प्राय उदासते। विनाशपथपथिकमपि स्वस्वामिनं कटुकेनापि परिणामसुखेन हितोपदेशेन निर्भीकेन प्रकृतिस्थं विधातुं न प्रयतन्ते राजकोपभीताः'।

'परन्त्वयममात्यराक्षसोऽपवादत्वेनैव श्रुतोऽस्य सामान्यनियमस्य। प्रतिक्षणं स्वामिहितसाधनतत्परो यथा स्वामिकल्याणसम्पदभिवृद्धिः स्याद्यथा च मागधसाम्राज्यसामर्थ्यसमुत्कर्षो भवेत् तथाऽहर्निशं चिन्त-यति। स्वयं सम्राट् धननन्दोऽपि वंशपरम्परामाहात्म्यमात्राधिगतसाम्राज्यः राजनीतौ नातिप्रवीणः स्वप्रधानामात्ये राक्षस एव सर्वं शासनभारं समर्प्य, तद्राजनीतिप्रावीण्ये तत्स्वामिभक्तौ च निरपवादायां परं विश्वस्तः स्वयं नानाविधविलासोपभोगमग्न एव समयं यापयति'।

'श्रुतं मया—अमात्यो न केवलं स्वामिनो धननन्दस्यैव सेवां स्वकर्त्तव्य-त्वेन गणयति, अपि तु कृत्स्नस्य नन्दवंशस्येति। प्रयतते चानवरतं वंश-परम्परया सुसेवितोऽयं राजवंशः सुप्रतिष्ठितः सुवर्धमानो महोत्साहेन प्रजाः पालयन् निखिलमपि भारतवर्षं सुखयतु इति'।

'तद्यदि कोऽपि मम संकल्पस्य पूरणे साहाय्यदानमङ्गीकरिष्यति तर्हि मगधामात्यो राक्षस एव। तस्य च वचनं सर्वथा पालयन् मगधसम्राट् नियतं यवनोन्मूलनकार्यं कठिनतममपि स्वीकरिष्यति। अमात्य-राक्षसस्य राजनीतिचातुर्यं मगधसाम्राज्यस्यातुलितं शस्त्रसामर्थ्यञ्च मयैतस्मिन् महत्तमे कर्त्तव्ये विनियोजिते नियतमेव सिद्धयेताम्'।

संप्रधार्य चैवममात्यराक्षसं साक्षात्कृत्यैवोत्तरकार्यारंभः कार्य इति निश्चित्य पाटलिपुत्रं प्रति प्रतस्थे।

—:०:—

## तृतीयः परिच्छेदः

अनवरतं प्रवसंश्च कार्यौत्सुक्यत्वरितगतिः, पश्यन् विविधानि राज्यानि, अवलोकयंश्च विविधां राजकीयां सामाजिकीञ्चावस्थां, ......प्रविवेश कतिपयैरेव दिवसैर्मागधसाम्राज्यम् । 'कीदृशं नामामात्यराक्षसस्य राज्यपालनकौशलम्' इति–कौतूहलचित्तश्च साधारणानां प्रजाजनानां परिस्थितिं सुनिपुणं पर्यालोचयन्....संतुतोष ।

अमात्यराक्षसो हि 'धनलाभो नूनं कृषिप्रधाने भारतवर्षे कृषीवलेभ्य एव'—इति सुनिपुणं विभावयन् तान् सर्वथा ररक्ष । 'समग्रस्य शासनयंत्रस्य मौलिक आधारो ग्राम' इति सुष्ठु जानन् ग्रामान् सुसम्पन्नान् सुरक्षितान् स्वावलंबिनश्च विधातुं प्रायतत । साम्राज्यस्य केन्द्रीयसत्ता यथा सार्वजनीनमहत्त्वशालिषु विषयेष्वेव प्रभावशालिनी स्यात्तथा प्रशासनसंघटनामकरोत् । 'स्वजीविकाव्यवसायानुशीलनमिव साम्राज्य-रक्षणार्थं क्षात्रतेजः-संवर्धनमपि यूनां कृते अत्यावश्यकम्' इति गणयन् प्रजाजनेषु क्षात्रवृत्तिं प्रोत्साहयामास । प्रतिग्रामं ग्रामाध्यक्षमेव राजप्रति-निधित्वेन संमानयति स्म । प्रतिग्रामं धान्यसंग्रहस्य जलव्यवस्थायाश्च सुस्थितिं सततं परीक्षते स्म । महतां जलाशयानां कूपानाञ्चासंख्यानां साहाय्येन कृषिवर्धनमुत्तेजयति स्म ।

आर्यश्चाणक्यस्त्वेतां मगधसाम्राज्यप्रशासनपद्धतिमवलोक्य सुतरां संतुष्टो ग्रामाणान्तथा नगराणां पारस्परिकव्यवहारसौकर्यार्थं निर्मितैः वृक्षराज्यलङ्कृतोभयपार्श्वैः दीर्घपथैः प्रवसन्, स्थाने स्थाने विरचितासु धर्मशालासु प्रतिसायं वसतिं परिकल्पयन्, मनस्यकरोत्—'एतादृशेन परमदक्षेण शासननिपुणेन प्रधानामात्येन परिपालितमेतत् साम्राज्यं सामर्थ्यशालि दुराक्रमणीयं वैभवशिखरवर्ति चेत्यत्र क इव विस्मयः ? विषयलम्पटमपि स्वामिनं स्ववशे स्थापयतः प्रशंसनीयं बुद्धिवैभवममात्य-राक्षसस्य । राज्ञो दुराचारे प्रवृत्तिर्हि तन्निकटवर्तिनां दुराचाररतानां अमित्राणामनुकरणमूलैव दृष्टा । पङ्कनिमग्नो बलाढ्यो गज इव दुराचारि-

समावृतो राजा, अवश इव, संमोहित इव, तेषां मार्गमनुसरति। तदेतत् दुराचारिसांनिध्यं····यावच्छक्यं····परिहरताऽमात्यराक्षसेन मन्ये सम्राजः स्वाभाविक्यो दुष्प्रवृत्तयो मर्यादिताः। कुत इवान्यथा मगधसाम्राज्यस्यैतावान् समुत्कर्षः? यतो हि न केवला राज्यसुव्यवस्था प्रजानां समृद्धौ स्वास्थ्ये प्रगतौ वा कारणं····अपितु राज्ञः सुव्यवस्थाऽपि।····एतदेव मां पीडयति यदेतादृशस्य बलाढ्यस्य साम्राज्यस्य रक्षकोऽप्यमात्यराक्षसो यवनानामाक्रमणस्य विषये किमित्यौदासीन्यं भजते,····किमिति च गजनिमीलिकया वस्तुस्थितिमवधीरयन् समग्रस्य भारतवर्षस्य रक्षणार्थं परिकरं न बध्नाति?······ अपि नाम स्वीकुर्वन् ममानुरोधं राजनीतिकुशलोऽमात्यवरेण्यः पापानां यवनानां समूलोच्छेदनाय कृतसंनाहो भवेत्'? इति।

विचिन्तयन्नेव चैवं कार्यसाफल्याशाप्रमुदितमानसः, सततं प्रवसन्, प्राप शीघ्रमेव····अपरदिङ्मुखं चुंबति प्रभाकरे····देशविदेशेषु विख्यातां, पञ्चक्रोशविस्तीर्णां, क्रोशत्रयायामां, गंगाशोणयोः संगमतीरे सुप्रतिष्ठितां विशालया संगमजलपरिपूर्णया क्रूरग्रहादिजलचरदुर्लंघनीयया परिखया रक्षितां, तदन्तर्गतेन शूरमागधसैनिकदुराक्रमणीयेन गगनभेदिना विविधभयंकरायुधभीषणेन प्राकारेण परिवेष्टितां, मगधराजधानीं पाटलिपुत्राख्यां,—या खलु संगमजलप्रवहन्तीभिर्विविधप्रदेशसमागताभिर्विस्तीर्णाभिः नौकाभिः सदा परिवेष्टिताऽऽसीत्, यत्र विविधदेशेभ्यः वाणिज्यव्यवसायेन संप्राप्ताः परकीयाः—निरीक्ष्य सर्वाणि सुखानि अनायासलभ्यानि – नागरिकत्वेन सुखं न्यवसन्, यस्याश्चाखिलभुवनविख्यातं यशः बलाढ्यानामपि रिपूणां मनसि भयं धनलोलुपानां वणिजां हृदि विपुलतरद्रव्यार्जनलालसां विविधसुखोपभोगतृप्तानामपि विलासिनां मनसि तदपूर्वसौख्यसागरपुनर्निमज्जनेच्छां, विख्यातपाण्डित्यप्रकर्षणाञ्च विदुषामन्तःकरणे तदपूर्वविद्वज्जनसमागमेच्छामुत्पादयति स्म।

आर्यश्चाणक्यस्तु···अवलोकितानेकप्रख्यातनगरोऽपि····तद् अपारैश्वर्यशालि महानगरं दृष्ट्वा किञ्चिद्—विस्मितः सुतीक्ष्णखड्गधारिसैनिकरक्षितेन महद्द्वारेणान्तःप्रविश्य स्पष्टतरवृत्तान्तेन नगरसौन्दर्येण व्याहृतचित्तः रथ्यासु स्वैरं पर्यटन्, प्रहतसूर्यास्तसंसूचकपटहरवेण सहसा प्रबोधित इव, निवासस्थानमन्वेषयन्, जनसंमर्दसम्पर्कं परिहरन्, पथिकजनसुलभाः राजकीया विशाला धर्मशाला विहाय संगमसमीप एव

वर्तमानं, निर्मलजलकणवाहिना शीतलेन समीरणेन पवित्रीकृतं महादेवायतनमेकं विजनप्रायं वीक्ष्य तत्र स्ववसतिं कल्पयामास। विहितसायंस्नानाह्निकादिश्च सुलभैः कन्दमूलफलादिभिर्विहितक्षुत्प्रतीकारः शान्तेन मनसा शयनमधिशिश्ये।

अधिशयान एव च चिन्तयितुमारेभे—'अमात्यराक्षस एव मगधसाम्राज्यस्य शासनधुरां वहन् सर्वेष्वपि महत्त्वशालिषु कार्येषु कर्तृत्वं भजते। तस्यैव च मातृभूमिभक्तिं निशम्याहं मगधेष्वागतः। तत् श्वः तमेव दृष्ट्वा, पञ्चनदीयानां यवनदुराचारत्रस्तानां दयनीयामवस्थां तस्मै निवेद्य, स यथा यवनोच्छेदं प्रतिपद्येत तथा प्रयतिष्ये। अङ्गीकृते तु तेन महति तस्मिन् कर्त्तव्ये, सम्राट्, परिपालयन् स्वामात्यस्य वचनं, बलाढ्यं स्वसैन्यं यवनाक्रमणायाऽऽदिशेत्। अतः प्रथमं तावत् राक्षस एव साक्षात्करणीयः, इति।

निर्णीय चैवं प्रशान्तेन मनसा सुष्वाप।

अथापरेद्युः पश्चिमाशामवलंबमाने रजनीनाथे, प्रबुध्यमानकमलपरिमलजडेषु संगमजलशीतलेषु मंदं मंदं वहत्सु प्राभातिकेषु समीरणेषु, समारब्धदेवतार्चनवाद्यमानघंटारवनिनादितदशदिक्षु भव्येषु देवतायतनेषु, पूर्वाचलचुंबिदिनकरकरारक्तेषु उत्तप्तलाक्षारसचर्चितेष्विव भासमानेषु प्रासादशिखरेषु, स विप्रवरो ब्राह्म एव मुहूर्त्ते शान्तेनान्तःकरणेन विहितनित्यक्रियोऽङ्गीकृतकार्यसाफल्याय संप्रार्थ्य जगन्नियन्तारं, विस्तीर्णेन राजपथेनामात्यस्य दर्शनार्थं निवासस्थानाच्चचाल।

अवलोकयंश्च सुप्तोत्थिताया महानगर्याः शोभां, विविधविक्रेयवस्तुपूर्णान् ग्राहकजनसंमर्दवतः आपणान्, गगनचुंबिशिखरान् स्वच्छसुधोपलेपोपहसितकैलासरामणीयकान् प्रासादान्, स्वस्वकार्यानुष्ठानव्यग्रांश्च समुज्ज्वलवेषान् प्रफुल्लमुखमुद्रान् नागरिकान् प्राप अविदन्नेव दीर्घमपि राजमार्गं अनेकसशस्त्रसैनिकपंक्तिसंरक्षितं यामावस्थितमदमत्तगजघटासंकटमहाद्वारं विविधवाहनाकुलाकुलांगणं स्वर्णयष्टिधरप्रतिहारिभूषितं नानाविधराज्यकार्यव्यग्रराजपुरुषं अन्तःप्रविष्टसामन्तरथचर्याव्यग्रसेवकगणं—अपरमिव मगधेश्वरनिवासं—अमात्यवरेण्यप्रासादम्।

तद्व्यक्तित्वप्रभावितचित्तेन द्वारपालेन च मुख्येन सादरमुपसृत्य सप्रणति प्रदर्शितमार्गोऽतिक्रम्यानेकानि विविधवृत्तान्तमनोहारीणि प्रको-

ष्ठानि महार्हासनोपविष्टं गौरवर्णम् उत्तुङ्गललाटं दीर्घनासं विशालनेत्र-कमलं विस्तीर्णवक्षःस्थलं कौशेयकोत्तरीयं विविधकार्यव्यापृतैश्च उच्च-पदाधिकृतैः राजपुरुषैः परिवृतं—अमात्यराक्षसमक्षिलक्ष्यीचकार।

धीरगम्भीरेण च तपःपरिपूतेन ओजस्विना स्वरेण शुभाशीर्ददौ।

अमात्यराक्षसस्तु कार्यव्यापृतचित्तोऽपि असाधारणेन तेनाशीर्वचनेना-कस्मादाकृष्टचित्तः समवलोक्याग्रे दर्भमुष्टिं शुभ्रभस्मपंक्तिचर्चितविस्तीर्ण-ललाटफलकं परमेश्वरप्रदत्तां प्रशस्तिमालामिव शुभ्रं यज्ञोपवीतं धारयन्तं कर्त्तव्यपथपरिभ्रष्टविलासभोगमग्न-क्षत्रियजातेर्निर्भर्त्सनायावतीर्णमिव मूर्त्तं ब्राह्मं तेजः विप्रवरं विस्मितः सत्वरमुत्थाय कृतपादवन्दन आसनपरि-ग्रहाय तं विज्ञापयामास।

आर्यचाणक्योऽपि तं प्रशासकवरेण्यं साक्षात्कृत्य जातप्रत्ययः, स्वीकृत्य सत्कारं, संप्रार्थ्यामात्यवरेण्यं स्वयमासनपरिग्रहाय शनैः शनै-रवोचत्—'अमात्यश्रेष्ठ ! नाहं क्षुद्रयज्ञदक्षिणादिलोभपरवशो भवन्तमिह द्रष्टुमागतः। महती खलु मम याचना। भवान् भवतः स्वामी चोभावेव तां पूरयितुं समर्थौ। अत एव पञ्चनदीयोऽहं विहाय निसर्गरम्याणि शान्तानि तपोवनानि, परित्यज्य परमकल्याणप्रदं तपःसाधनामार्गमन-वरतं प्रवसन् भवद्दर्शनार्थमिह संप्राप्तोऽस्मि। कथमिव संसारादसारात् विरक्तोऽपि स्वाभिमानी आर्यः परकीयाणां दुराचारान् अत्याचारांश्च नपुंसक इव सहमानः स्वसंस्कृतेः स्वधर्मस्य ग्लानावुदासीत ? भवत्स-दृशानां सुदूरप्रसृतचारचक्षुषामपि नाधुनापि प्रतीतिपथमुपयाति स्वमातृ-भूमेः संकटं इत्यहो दुर्दैवम्। यदि भवत्सदृशा बलाढ्यसाम्राज्यधुरंधरा अपि शनैः शनैः क्षीयमाणायाः स्वसंस्कृतेर्विषये ताटस्थ्यं आत्मघा-तकमङ्गीकुर्युस्तर्हि कस्यैवावलंबनमाश्रित्य सा सन्तिष्ठताम् ?········कथं खलु भवत्सदृशा अर्थशास्त्रपारंगता अपि यवनानां कपटनीतिविषये परिणामभयंकरमौदासीन्यं भजन्ते ?········एतदेव क्षत्रियजातेरवधीरण-मनाथाया इवाऽऽर्यभूमेः संकटञ्चासन्नप्रायं ताटस्थ्येन द्रष्टुमसमर्थोऽहम् अद्य भवतः सभायामुपस्थितः शनैः शनैः निखिलमपि भारतवर्षं ग्रसितुं बद्धपरिकराणां यवनानां पापानां समूलोच्छेदनार्थं सर्वातिशायि मागधं क्षात्रं सामर्थ्यं याचे'—इति।

अमात्यराक्षसस्तु तामिमामत्यन्तानपेक्षितां तस्य विप्रवरस्याभ्यर्थनां निशम्य विस्मितचित्तः क्षणमात्रं विचारमग्नः सादरं प्रत्यवदत्—'द्विज-

श्रेष्ठ ! यदि भवत्सदृशास्तपोनिधयोऽपि विहाय निवृत्तिपथमेवं कर्त्तव्योद्बोधनभारमुररीकुर्युस्तर्हि नियतमेवाऽऽर्यभूमेरस्याः परिरक्षणे समस्ता क्षत्रियजातिर्बद्धपरिकरा भवेत्। ......का कथा मगधसाम्राज्यस्य ? ममापि खलु मगधसाम्राज्यसेवां वंशपरम्परागतां कुर्वतः सततमशान्तमेव मानसं यवनदुराचारान् चारनेत्रैः अहर्निशं पश्यतः। ....अहमपि जानाम्येव यवनानां मगधसाम्राज्याभिलाषाऽऽयासितमनसां कूटनीतिव्यापारान्। .... ममापि परिणामभयंकरं यवनाक्रमणसंकटं प्रतिदिनं विचारयतः समुत्सुक एवान्तरात्मा तेषां समूलमुन्मूलनार्थम्। ........किन्तु........मगधसाम्राज्यशासनभारात् स्वामिन औदासीन्याच्च एतावत्कालपर्य्यन्तं, वाञ्छन्नपि बहु, महदेतत् कार्यं कर्त्तुं नैव प्राभवम्। ........मूर्त्तं तपोनिधिमिव भवन्तं संप्रेषयता परमेश्वरेणाऽऽदिष्टोऽस्मि नूनमेतन्मातृभूमेः प्राणसंकटं निवारयितुम्। ....तद् विहाय साम्राज्यप्रशासनधुरां योग्येषु सचिवेषु, कृत्वाऽपूर्वं सेनासंनाहं,........मगधेश्वरं यवनाक्रमणाय प्रवर्तयिष्यामि। ....हम्........ विदितचरमेव स्यात् द्विजश्रेष्ठस्य........यत् मगधेश्वरः स्वभावत एव शान्तिप्रियः............प्राक्तनोपनतसुखोपभोगप्रवणचित्तश्चेति। ........स खलु......बहुभिः......बहुवारं प्रार्थित एवैतादृशस्य महतः कार्यस्य धुरं स्वीकुर्यात्। ...अतो....यदि न कश्चित् प्रत्यवायस्तर्हि साक्षात्करोतु द्विजश्रेष्ठः स्वयमेव मगधसम्राजम्। आर्यस्य तपोभासुरां मुद्रां निःस्पृहं वर्तनञ्चावलोक्याऽऽदरप्रह्वः सोऽपि स्वयमङ्गीकरिष्यति आर्यस्यानुरोध सर्वथोचितम्। ......तथा च सति....कार्यसंसिद्धिः शीघ्रतरैव निश्चिता।.... प्रतिदिनं अपराह्णे सम्राट् स्वयं सरस्वतीसभागृहे समुपस्थितो विद्वज्जनानामाशीर्वचनानि स्वीकरोति। ......तेषां चर्चाः शृणोति। दक्षिणाश्च तेभ्यो ददाति सबहुमानम्। अवसरे तस्मिन् आर्यः तं द्रष्टुं शक्नोति' इति।

आर्यश्चाणक्योऽपि 'एतादृशः कठिनस्य कार्यस्य स्वीकृतिः साक्षान् मगधेश्वरेणैव दातुं शक्या'—इति ज्ञात्वा........अमात्यविज्ञप्तिमोमित्यंगीकृत्यानुगच्छन्तं तं स्वासनग्रहणाय संप्रार्थ्य ततो निरगच्छत्।

स्वनिवासं प्रत्यागतश्च........कृत्वा क्षुधोपशमनं......अग्नय इव राजानोऽपि यं कमपि मध्यस्थमाश्रित्यैव साक्षात्कर्त्तव्या इति तावल्लोकनीतिः। .... तथाऽप्यहमत्र नूतनोऽपरिचितश्च। ........न कोऽपि मामिह जानाति। अमात्यवरेण्यस्यैव माध्यस्थ्यमवलंब्य मगधेश्वरं पश्यतो मे तु कार्यहानेरेव प्रबलतरा संभावना। अथवा का नाम अत्र मध्यस्थ-

स्याऽऽवश्यकता ? न खल्वत्र मम वैयक्तिकः कश्चित् स्वार्थः—यदर्थमहं मगधेश्वरं द्रष्टुमिच्छामि। सनातनधर्मस्यार्यसंस्कृतेश्च परिरक्षणार्थमेवेमे मम प्रयत्नाः। अपि नाम राजसभापण्डिता मात्सर्यविमोहितमतयोऽत्र कार्यविघ्नं करिष्यन्ति ?····अथवा यद्भावि तद्भवतु नाम। मगधेश्वरस्तु द्रष्टव्य एव' इत्यादि यावच्चिन्तयति तावदुदगात् संसूचयन् मगधेश्वरस्य वामकुक्षिशयनादुत्थानं महान् पटहध्वनिः।

आर्यचाणक्योऽपि·········'अनया कालकलया नूनमास्थानमण्डपं गतो भवेन्मगधेश्वर' इति कलयन्, स्वीकृतकार्यसिद्धये संप्रार्थ्य परमेश्वरं, विविधदुश्चिह्नोद्वेजितोऽपि 'सर्वथा श्रेयो विधास्यति भगवान् चन्द्र-शेखर' इत्यात्मानं पर्यवस्थापयन्, सरस्वतीसभागृहगामिना मार्गेण विस्तीर्णेन गन्तुमारेभे।

असामान्यप्रभावशालिनीं तस्याऽऽकृतिं विलोक्य परं चकितैरपरिचितैरपि सादरमभिवंदितश्च नागरिकैः·········प्रापः·· ····लोहकवचावृतसर्वाङ्गैः खड्गभीषणहस्तैरसिताश्वाधिरूढैर्विग्रहवद्भिर्यमदूतैरिव मागधसैनिकैः संरक्षितं, आगृहीतकनकवेत्रलतैः सितवेषैः सितोष्णीषैर्विग्रहधारिभिर्देवतांशैरिव परिहारिभिराकुलाकुलं, विविधप्रदेशसमागतैरनेकशास्त्रपारंगतैर्विविधभाषाभाषिभिर्विचित्रवेषभूषैः, शरीरिभिर्महायज्ञैरिव भूतिभासुरैः, राजकीयसंमानोत्सुकैर्विद्वद्गणैः संकुलं सरस्वतीसभागृहम्।

अदृष्टपूर्वब्राह्मतेजोऽतिरेकविस्मितेन सादरमभिवंद्योपदिश्यमानमार्गः प्रधानवेत्रधारिणा धीरगम्भीरया गत्या प्रविवेश तत्।

अवलोकयामास च पुरः·········विविधरत्नप्रभाशबलकान्ति महार्हं सौवर्णमासनमलंकुर्वन्तं, प्रोद्धूयमानसुवर्णदण्डचामरकलापं, अतिसुरभिचन्दनकृताङ्गलेपनं, शशिकरधवले मृदुले दुकूले वसानं, विषयसुखोपभोगपरिक्षामविग्रहं, मदिरारक्तक्लान्तनयनकमलं, सभामण्डपोपविष्टैर्विद्वद्भिः सादरं सकौतूहलं सभयं निरीक्षमाणं सम्राजं धननन्दम्। उदगाच्च सहसा तस्य मुखात्—

'मगधेश्वर ! भूपाल ! त्वद्राज्ये न्यायपालिते'।
'लक्ष्मीः सरस्वती चात्र चिरमास्तामिदं द्वयम्' ॥
'वर्धतां त्वत्प्रतापाग्निः शलभायन्तु तेऽरयः'।
'आर्याणां संस्कृतिं श्रेष्ठां जीव त्वं पालयंश्चिरम्' ॥

इत्योजस्वि-वचनम्।

मगधसम्राट् तु जलदनादसदृशीमकस्मात् समुदीरितां तां तपःसामर्थ्यशालिनीं वाचं निशम्य परं कौतूहलाक्रान्तः सदर्भमुष्टिं ब्राह्मतेजोराशिं तं विप्रवरं पुरतोऽवलोक्य स्वभावतो द्विजजनसंमाननाविमुखोऽपि सिंहासनादुत्थाय तं सादरं प्रणनाम। स्वसमीपवर्तिनि मृगचर्मावृते समुपवेष्टुमासने च तं विज्ञापयामास।

आर्यश्चाणक्यस्तस्येमां ब्राह्मण्यां वृत्तिमवलोक्य संतुष्टः, कृतासनपरिग्रहः, स्वीकृत्यातिथिसत्कारं मगधेश्वरेण सादरमागमनकारणं पृष्टोऽवोचत्—'राजन्! भवत्सदृशा बलाढ्या अपि भारतीयाः नृपाः स्वकर्त्तव्यं विस्मृत्य यदा, विषयसुखोपभोगमात्रासक्तचित्ताः, परकीयान्याक्रमणानि गजनिमीलकयाऽवधीरयन्तः, स्वमातृभूमेः स्वधर्मस्य स्वसंस्कृतेश्च ग्लानौ ताटस्थ्यं भजन्ते, तदा अस्मासु निवृत्तिमार्गरतेष्वपि प्रियतममेकान्तवासं परित्यज्य स्वकर्त्तव्यपालनमात्रेच्छया संसारमार्गे पुनरवतीर्णेषु क इव विस्मयस्यावकाशः? ....किं नाद्याप्यवतीर्णो मगधेश्वरस्य कर्णपथं भारतीयसंस्कृतेर्विनाशो गांधारपञ्चनदप्रभृतिषु भारतवर्षप्रदेशेषु? कथं नाम कुटिलेष्वपि यवनव्यापारेष्ववधीरणमेतत्?.......किमेतन्मन्यते मगधेश्वरो यत् न तस्य तत्–साम्राज्यस्य वा प्रयोजनं एभी राजकीयैः स्थित्यन्तरैरिति?.......न खल्वेतत् संभवति राजनीतिनिपुणे मगधसम्राजि! इमामयथार्थां भ्रान्तधारणां गूढं प्रोत्साहयद्भिः परमकुटिलैः परकीयैरेव भारतवर्षस्य स्वातंत्र्यं सौभाग्यञ्च विलोपितम्। किं नाधुनापि साक्षात्करोति मगधेश्वरो यवना मगधसाम्राज्यविनाशार्थं कथं प्रयतन्त इति?....कथमन्यथा तर्हि इयमुपेक्षा परचक्रे?....एतत् ताटस्थ्यं स्वमातृभूमेः पारदास्ये? मगधसाम्राज्यसदृशं बलाढ्यं शासनं, मगधसैन्यसदृशं रणबलञ्च लब्ध्वाऽपि महत्तमेऽस्मिन् स्वकर्त्तव्ये उदासीनं भवन्तं दृष्ट्वा दुःखायते नूनं भारतमातुः हृदयम्! अतः परित्यज्य प्रभावक्षयकारिणीमिमां विषयसुखोपभोगलालसां साक्षात्कृत्य क्षत्रियजातेः कर्त्तव्यं दुराचारिणामेषां यवनानामुन्मूलनाय परिकरं बध्नातु। प्रदर्शयतु च पुनरपि वीरगाथागीतं नन्दवंशस्य तत् क्षात्रं ते.......'।

'महत् खलूपकृतमार्येण.......परमतेजस्विना आर्यसंस्कृतेरेकमात्ररक्षकेण स्वयमिहागत्य....अपृष्टेनैव अप्रार्थितेनैव परमकल्याणकारिणमुपदेशं ददता—' सहसा आह सोल्लुण्ठं मर्माहतो धननन्दः। 'क इवास्मिन् विशालेऽपि पथपरिभ्रष्टे मगधसाम्राज्ये भवानिव कर्त्तव्यबोधदक्षः राज-

नीतिधुरंधरः स्वधर्माभिमानधनो वा ? एतल्लोकविलक्षणं मार्गप्रदर्शनं अलभमाना एव वयं एतावत्कालपर्यन्तं महत्तमस्य कर्त्तव्यस्यैतस्य पालने शैथिल्यमभजाम। अहो धन्याः स्मः वयं यैर्भवत्सदृशा मातृभूमिपरमभक्ता परोपदेशपण्डिता गुरुवर्याः····विनैव प्रार्थनां········उपलब्धाः। एक एव तु ममानुरोधः। अनुगृह्णन्तु मां मन्दमतिं विचक्षणा आर्यचरणाः स्तोकमपि प्रमाणं प्रदर्श्य यदवलम्ब्य मागधा यवनसौहार्दे संदिहीरन्। यथाहं तथैव मम प्रजाजना अपि कुटिलराजनैतिकव्यापारमूढा कल्पनाजालापेक्षया सर्वदा वस्तुस्थितिमनुसरन्तः प्रात्यक्षिकप्रमाणभूमिमेवावलम्ब्य कार्येषु उत्सहन्ते। किं क्रियताम् ? मूर्खस्वभाव एव खल्वेतादृशः।····कुतः खलु सर्वेषामस्माकं गुरुवर्याणामिव प्रातिभं सामर्थ्यं लोकविलक्षणम् ? इति।

'राजनीतौ प्रत्यक्षप्रमाण एवाभिनिवेशो मूर्खाणामेव शोभते, राजन्'—जगादार्यश्चाणक्यो धननन्दस्याऽऽशयं जानन्नपि संयम्यात्मानं,—'लोकव्यवहारे सर्वप्रमाणमूलमपि राजनीतौ निकृष्टमेव स्थानं लभते प्रत्यक्षम्। तर्कपद्धतिमेवानुसरन्ति राजनीतिकुशलाः।····किमिव चाऽविश्वसन्निव मयि सोल्लुण्ठं भाषते मगधेश्वरः ? किमिव मम विप्रस्य प्रयोजनं कृत्रिमप्रोत्साहनेन ? 'अप्यस्ति कश्चिदार्यसंस्कृतिरक्षणक्षमो भारतीयो नृपतिः' इति जिज्ञासया तीव्रया प्रेरितेन विहाय तपोवनं देश-देशान्तरेषु प्रवसता मया भवानेव केवलोऽस्य महतो भारस्य क्षम आसादितः। समर्थोऽपि भवान् स्वकर्त्तव्य उदासत—इत्यसहमानेन च स्वकर्त्तव्यपालनार्थं नोदितः'।

'एवं तर्हि आत्मनः कुतर्कजालमादर्शवादप्राणितं दर्शयितुं प्रयतते तपोधनः' प्रत्युवाच दुर्दैवविमोहितो धननन्दः।

'कुतर्कजालं········!' आरभत विप्रवरः।

'विरम, रे विप्र, अस्मात् वैफल्यमात्रपर्यवसायिनः परवञ्चनप्रयासात्। यवनशासकैः सार्धमस्माकं प्रगाढं सौहार्दमसहमानेन केनचित् क्षुद्रेण नृपेण 'यवनसंघर्षैः मगधसाम्राज्यस्य शक्तिक्षयो यदि जातस्तर्हि इष्ट एव स' इति हताशां मनसि कृत्वा गूढं प्रेरितः······कूटतपस्वी ······ त्वं मन्यसे 'कूटनीतिमूढाः खलु मागधाः। न जानीयुस्ते कपटव्यवहारमिममिति।' परन्तु कथयाऽऽत्मनः स्वामिनं 'मागधा अपि कपटव्यवहारं सुष्ठु प्रत्यभिजानन्ति' सकुत्समाह सम्राट्।

इमन्तु सर्वथाऽनपेक्षितमधिक्षेपं लब्ध्वा, तावत्कालपर्यन्तं महता प्रय-

त्तेन संयमितो मनस्विनश्चाणक्यस्य क्रोधानलः सहसा जज्वाल । उत्थाय चासनात् स ब्राह्मणः कोपाग्निस्फुलिङ्गसंततिप्रदीप्ताभ्यां विस्फारिताभ्यामारक्ताभ्यां नयनाभ्यां भस्मीकुर्वन्निव नृपं, सभयमवलोकयत्सु विस्मयजडेषु सर्वसभ्येषु, क्रोधकर्कशया वाण्या उच्चैर्जगाद 'मूढ धननन्द ! आर्यसंस्कृतेः परिरक्षणेच्छयैव केवलया विहाय शान्तमाश्रमपदं तव सभायामुपस्थितं स्वार्थभावनालेशासंस्पृष्टं ब्राह्मणं दुर्दैवोपहतमतिः साधारणसभापण्डितमिव चाटुकारिणं ......अधिक्षिपसि ।......विषयलम्पट ! स्पष्टमेव किमिति नाङ्गीकरोषि स्वस्य दौर्बल्यम् ? वंशपरम्परामात्रप्रभावेणाधिगतं एतत् सिंहासनमारूढस्त्वं नूनं कलंकयसि सम्राट्पदम् ।......विषयकर्दमलिप्तस्य मदान्धदृष्टेः क्षुद्रात्मगौरवकलुषितमतेस्तव तनुजाः निरभिमानाः गुणग्राहिणः स्वकर्त्तव्यपालनतत्पराः सुविनेयाश्च स्युरिति का प्रत्याशा ? परप्रत्ययनेयबुद्धेः क्षुद्रस्य तवाधीश्वरत्वं नूनं सद्योभाविनो नन्दवंशविनिपातस्य संसूचकम् । आर्यसंस्कृतेः पुनरुज्जीवनार्थं भवत्सदृशानां क्लीबानां नृपब्रुवाणां विनाश आवश्यक एव ।......अतः शृणु दृढामिमां मम प्रतिज्ञां 'अहं आर्यभूरक्षणाय ससुतं त्वां धननन्दं नाशयित्वाऽन्यं गुरुतमैतद्भारवहनक्षमं युवानमस्मिन्नेव सिंहासने प्रतिष्ठापयिष्यामि, इति । उक्त्वा चेत्थं निर्भीकः स द्विजवरः कोपवेगारक्तनयनो धीरगम्भीरया गत्या तस्मात् सभागृहान्निरगात् ।

तं तस्य क्रोधावेगं प्रज्वलितञ्च ब्राह्मं तेजोऽवलोक्य क्षणमात्रं विभ्रान्तोऽपि दुर्दैवविमोहितमतिर्धननन्दश्चाटुपण्डितैः 'चपलः सः जातिब्राह्मणः प्रकटीभूतयथार्थस्वरूपो भयाक्रान्तः परमकुपितमिवात्मानं प्रदर्शयन् यत्किञ्चिदपि प्रलपन् निर्गतः । नात्र प्रभोः सर्वथा प्रभविष्णोः स्तोकस्यापि पश्चात्तापस्योद्वेगस्य वाऽऽवश्यकता । विख्यातविक्रमस्यातुलबलशालिनो मगधसम्राजः स्वल्पेऽप्यपकारे तस्य ब्राह्मणब्रुवस्य किमिव सामर्थ्यम् !' इति समाश्वासितः अचिरादेव तं प्रसंगं विसस्मार ।

स्वयममात्यराक्षसोऽपि तस्मिन्नवसरे दैववशात् तत्रानुपस्थितः, निशम्य सर्वं वृत्तान्तं गूढदूतमुखात् खिन्नोऽपि प्रशासकीयकार्यबाहुल्यादचिरादेवान्यत्र व्यासक्तचित्तो बभूव ।

परन्तु......न्यक्कृतं तद् ब्राह्मं तेजः सर्वातिशायि स्वसामर्थ्यं बलवत्क्षात्रशक्तिपराजयक्षममात्मनः प्रभावं च प्रदर्श्यैव शशाम ।

—:०:—

## चतुर्थः परिच्छेदः

एवं सभाभवने धननन्दस्य क्षुद्राशयत्वं चित्तचाञ्चल्यञ्च साक्षात्कृत्य घोरापमानदहनदह्यमानमानसः, ससुतं तं नाशयित्वा तत्पदे कमपि योग्यमपरं क्षत्रियतरुणम् अभिषिच्य तन्माध्यमेन यवनोच्छेदे कृतनिश्चयः, धीरगम्भीरया गत्याऽऽश्रमपदं प्राप, कुनृपतिशासिते तस्मिन् साम्राज्ये क्षणमप्यधिकं स्थातुमसमर्थश्च अस्तंगते नन्दवंशसौभाग्य इव तादृश-ब्राह्मणापमानखिन्ने भगवति मरोचिमालिनि मूर्त्ते दुर्दैव इव पाटलि-पुत्रमुपरोधयति नैशेऽन्धकारे राजधानीतः केवलं दर्भपाणिश्चचाल स विप्रवरः।

तच्चान्वगच्छत् नन्दवंशसौभाग्यलक्ष्मीः। प्रवसंश्च चिन्तयामास— 'अहो धननन्दस्य मूर्खता! यद् व्यक्तिचारित्र्यविशेषनिरीक्षणासमर्थेन मदान्धेनाविचार्यैवाहमेवमपमानितः। सर्वथा बलाढ्यस्यास्य नन्दवंशस्य विनाशकाल एव समुपस्थितः इति तर्कयामि। कुतोऽन्यथा पञ्चनदीयस्य मम दैवसंप्रेरितस्येव देशदेशान्तरमटतो धननन्दस्य सभायामुपस्थितिः, कुतश्च प्रायः सदैव तस्य समीपमुपतिष्ठतः सदसद्विवेककुशलस्यामात्य-राक्षसस्य तस्मिन्नेवावसरे कार्यबाहुल्यादनुपस्थितिः, कुतश्च ममाऽयं प्रथमो निष्कारणः परिभवः, कुतश्चैतादृशी मम सकलनन्दवंशोन्मूलनप्रतिज्ञा? मया खलु महान् प्रतिज्ञाभारोऽङ्गीकृतो ब्राह्मतेजःपरिभवमसहमानेन। तत्पूर्तये मयेतः परमनवरतं प्रयतनीयम्। भवतु नाम मम राजनीति-वैशारद्यस्य परीक्षा। कूटनीतिप्रयोगं वृथैवाऽऽशंक्य मां सर्वजनसमक्षं तथाऽऽक्षिपन् मूर्खो धननन्दोऽवलोकयतु नाम मम सत्यमेव कूटनीतिप्रयोग-चातुर्यम्। पश्यतु नाम संसारः स्वभावशान्तमपि बाह्मं तेजः निष्कारण-मपमानितं सहसा प्रज्वलत् एकाक्यपि साधनसम्पद्विहीनमपि कथ—मात्मनः परिभवं निर्यातयतीति।'

प्रवसंश्चानवरतं नियतिवशाद्गृहीतोत्तरदिक् कतिपयैरेवाहोभिः समुल्लंघ्य मागधसाम्राज्यसीमां तत्समीपवर्तिनो निबिडवनराजिसम-

लङ्कृतान् स्वतंत्रान् पर्वतीयान् प्रदेशान् प्राप। मगधसाम्राज्यं परित्यज्यैव किंचित् प्रकृतिमापन्नो विप्रवरः स एकस्यां प्रतिनिवर्तमानगोवृन्दधूलिधूसरसायंप्रकाशोज्जलितायां ग्रामटिकायामेकां रात्रिं विश्रम्य अपरेद्युः कृत्वा क्षुत्प्रतीकारं प्रतिज्ञापूर्तिव्यापारारम्भणात् प्राक् कस्यापि महाकुलीनस्य क्षत्रियकुमारस्योपलब्धिरत्यावश्यकेति चिन्तयन् दैवेन प्रेर्यमाण इव तस्यामेव दिशि चचाल। अचिरादेव च गगनचुंबिहिमाचलोपत्यकानिवासिनां स्वमातृभूभक्तानां प्रतिकूलपरिस्थितिवशाद् विहाय क्षात्रोचितं व्यवहारं व्यवसायञ्च कृषिव्यवसायमनुशीलयतां क्षत्रियाणां गणराज्येऽन्यतमे प्रविष्टमात्मानमवलोकयामास।

समृद्धां वनश्रियं निरागसं वर्तनं सरलञ्च जीवनं तत्रत्यानां जानपदानामवलोक्य सुखितस्तत्रैवैकस्मिन्नाश्रमकल्पे लताकुञ्जे स्वनिवासमकल्पयत्।

एवं नगराजोपत्यकाप्रदेशे निभृतं वसत आपाततः शान्तस्यापि स्वप्रतिज्ञापूर्त्युपायचिन्तनव्यग्रचित्तस्य तस्यातीतानि कतिपयानि दिनानि युगकल्पानि।

एकस्मिश्च दिवसे अनुष्ठाय मध्याह्नसंध्योपासनां महतोऽश्वत्थवृक्षस्याधस्तात् निभृतं निषण्णस्य 'यावदहमिमां प्रतिज्ञां न पूरयामि तावदनाश्वस्तं मम मनः भाराक्रान्तमिव नित्यकर्मानुष्ठानेऽपि नोत्सहते। परन्तु कार्यस्याऽऽरंभणात् प्राक् कस्यचिद्-योग्यस्य क्षत्रियकुमारस्याऽऽवश्यकता यं सम्यगध्याप्य मगधसाम्राज्याधीश्वरपदे स्थापयितुं प्रयतिष्ये।....कथं खल्वहं तं लभिष्ये ?' एवमादि किमपि किमपि चिन्तयतः तस्याकस्मात् श्रुतिपथं प्राप भयचकिततारकैः स्तब्धकर्णैः मृगकदंबकैः सविस्मयमाकर्णितः संत्रस्तपतत्रिरवोपबृंहितो मृगयाकोलाहलः।

अचिरादेव चोत्सुकमनसस्तस्य दृष्टिपथमवतीर्णौ द्वौ मृगयाकुतूहलिनौ—एको वल्कलावृतकायः कोदण्डधारी काकपक्षधरो दशवर्षवयस्को, बाल्येऽपि तेजस्वितया महाप्रमाणतया च शरीरयष्टेर्युवेव भासमानः, अपरश्च प्रौढवयाः लौहकवचावृतसर्वाङ्गतया समुद्भिन्नश्मश्रुजालावृतमुखतया च जंगमं तमः-पुञ्जमिवानुकुर्वन्, मदोन्मत्त आरक्तनयनो यवनसैनिकः—एकमेव बलाढ्यं सूकरमनुधावन्तौ।

मृगयावलोकनकौतूहली च आर्यश्चाणक्यो यावत् तदनुधावनमवलोकयति तावदेवोभाभ्यामपि युगपदेव विमुक्ताभ्यां बाणाभ्यां स सूकरो निहतः।

अथ निहतवराहजिघृक्षया तयोरुभयोर्मध्ये महान् विवादः प्रादुर्बभूव। तञ्च तस्य कोमलस्य सौम्यदर्शिनः क्षत्रियकुमारस्य तेन कृतान्तान्तेवासिनेव भयानकेन वन्यमहिषेणेव परिपुष्टगात्रेण विशालवक्षसा यवनेन सममसमविवादं संप्रेक्ष्याकृष्टचित्तश्च स विप्रो यावत् किञ्चित् विचारयति तावदेव तौ उच्चैः कलहायमानौ द्वन्द्वयुद्धेन निर्णयमिच्छन्तौ, कञ्चित् साक्षिणमन्वेषयन्तौ, अश्वत्थवृक्षस्याधस्तात् निषण्णस्य तस्यैव समीपमाजग्मतुः। निवेदयित्वा च सर्वं कलहकारणं तं द्वन्द्वयुद्धे साक्षीभवनार्थं विज्ञापयामासतुः।

द्विजवर्यस्तु तस्य क्षत्रियकुमारस्यौजस्विनीं मुद्रां, क्षात्रबलदर्पितामपि गुरुजनसमक्षं विनयशालिनीं वृत्तिं, स्वाधिकाररक्षायां प्राणनिरपेक्षमभिनिवेशं, बलाढ्यतरप्रतिपक्षिणा सहोपस्थितेऽपि समरप्रसङ्गेऽविचलितं धैर्यमवलोक्य कौतुकचकितस्तस्य निश्चयदार्ढ्यं परीक्षितुं जगाद—'वत्स ! त्वमसि अद्यापि बालः। एष च त्वत्प्रतिपक्षी यवनः सैनिकः त्वदधिकतरबलसम्पन्नस्त्वदनिष्टमनायासेनैव कर्तुं समर्थः। अतोऽस्य क्षुद्रस्य सूकरस्य कृतेऽलं समरप्रसङ्गेन। प्राणा हि सर्वापेक्षयाऽधिकतरं प्रियाः। नयतु नाम कलहप्रियोऽयं यवनः क्षुद्रं सूकरमिमम्। त्वन्तु सौम्य संरक्ष स्वात्मानमेव। आत्मानं हि सदा गोपयतः सिद्धयः सान्निध्यं भजन्ते इति विचक्षणा इति'।

स क्षत्रियबालकस्तु तस्येदं शमोपदेशपरं भाषणं निशम्य किञ्चिदारक्तनयनकमल उच्छ्वसितवक्षः-स्थलानुमेयसंयमितक्रोधवेगो वक्रीभूतभ्रूलताभीषणललाटपट्टः सविनयमपि निश्चयदृढं प्रत्युवाच—'विप्रवर्याः ! चातुर्वर्ण्यरक्षका भूत्वा भवन्त एव मामित्थमुपदिशन्त्यहो मम दौर्भाग्यम् ! नपुंसकस्य इव दासीभूय जीवनापेक्षया मरणमेव ससंमानमधिकं श्लाघनीयमिति मन्यते क्षत्रियजातिः। तस्यामुत्पन्नोऽप्यहमार्यः कथमिव क्षुद्रप्राणापहारभियाऽऽत्मना विद्धं लक्ष्यं यवनाय दास्यामि ? यद्यस्ति तर्हि अस्तु नामायं मदपेक्षया प्रौढतरो बलवत्तरो वा। किमनेन ? क्षत्रिया हि स्वमानधनसंरक्षणं स्वकीयं सर्वातिशायि कर्त्तव्यमिति गणयन्ति। कथमिवैतदुपेक्षितं गुरुवर्यैः ? तत्रापि मत्प्रतिपक्षी कश्चनान्यः क्षत्रियकुमारोऽभविष्यत् तर्हि कदाचित् अहन्तेन सह नाकलहायिष्ये। एते तु यवनाधमाः प्रथमत एवोद्दण्डाः मददुर्विदग्धा गान्धारान् भारतवर्षस्यान्यांश्च प्रदेशान् भेदजापैर्विजित्याधुनाऽस्माकं हिमालयोपत्यकाप्रदेशेष्वपि स्वाधिपत्य-

विस्तारं कर्तुं प्रयतन्ते। तदुन्मूलनेच्छया रात्रिंदिवं प्रयतमानस्य गणशासकस्य पितुर्मे प्रतापभानोस्तनयस्य मम लक्ष्यमेतदपहृत्य कश्चिद् यवनः कुशली गच्छेद् इत्येतदसंभाव्यमेव। स्वप्राणापेक्षया स्वमानधनमेव मेऽधिकं रक्षणार्हमिति।

तस्येदं स्वाभिमानोज्ज्वलं यवनविद्वेषि प्रत्युत्तरं निशम्य परं सन्तुष्टो विस्मितश्च स विप्रः साक्षित्वेन व्यवहर्तुमंगीकृत्य 'तथास्तु' इति तयोः शस्त्रग्रहणमनुमेने।

अथ प्रवृत्तमात्रे तयोरुभयोर्द्वन्द्वयुद्धे विद्युल्लताचपलः स क्षत्रियकुमारः केवलेन चर्मणाऽऽवृतोऽपि, वयसा नातिप्रौढोऽपि, शौर्येण द्वितीयोऽभिमन्युरिव, विफलीकृत्य प्रतिद्वन्द्विनः कपटप्रहारं, बलाढ्यमपि लौहकवचावृतसर्वाङ्गमपि स्वबलाभिमानदुर्विदग्धं यवनमेकेनैवाऽऽकस्मिकप्रकारेण खड्गाघातेन तडित्पातदुःसहेन लुलाव। अपातयच्च तत् वटविटपिविशालं यावनं कलेवरं धरणीतले।

निर्जित्यैवं स्वप्रतिपक्षिणं स क्षत्रियकुमारः, राघव इव निहतमहाराक्षसः, विजयश्रीस्मितविकसन्मधुरमुखकमलो द्विजवरं सविनयं प्रणनाम—'कृपया क्षन्तव्यो मम भवदुपदेशातिक्रम' इति वदन्। आर्यश्चाणक्यस्तु तस्य महाकुलीनत्वद्योतकैः सुलक्षणैः प्रागेव प्रभावितः, तत्रापि तस्य यवनविद्वेषं मातृभूमिस्नेहं द्वन्द्वयुद्धनैपुण्यं विनयातिशयञ्च वीक्ष्य नितान्तं संतुष्ट आशीर्भिरभिनंद्य तं कुलवृत्तान्तमपृच्छत्।

'विप्रवर्य!'—स हि प्रत्यवदत्। 'मम पिता वृद्धः प्रतापभानुर्नातिदूरवर्तिनः स्वल्पस्य गणराज्यस्याधिपतिः। श्रुतं खलु मयाऽनेकशः पितुर्मुखात् - सः पञ्चनदीयनृपतेः पुरूरवसः स्नेहोत्कर्षभाक् मुख्यः सामन्त आसीत्। परस्परविद्वेषं संवर्द्ध्य भारतवर्षमाक्रमद्भिर्यवनैस्तस्मिन् बलाढ्ये नृपे पराजिते दास्यदुःखमसहमानो मम तातः स्वामिभक्तैः स्वसैनिकैः सह विहाय तं प्रदेशं इह आगतः······एतद्गणराज्यं स्वल्पं स्थापयामास। यदि नाम विप्रवर्याणां मयि स्वल्पोऽपि अनुग्रहस्तर्हि संमान्यतां पितुर्मे निवासः। आर्यसंस्कृतेः परमाभिमानी वृद्धो मे पिता मूर्त्तिमद्ब्राह्मं तेज इव भवन्तमतिथिमुपलभ्य परं हर्षमावहेत्। वयमपि सर्वे भवदनुग्रहेण धन्यधन्या भवन्तं यथाशक्ति सेविष्यामहे। सुदुर्लभो हि सज्जनसमागम इति।'

सामुद्रिकशास्त्रविचक्षण आर्यश्चाणक्यस्तु 'महालक्षणोपपन्न एषः महाकुलीनस्यैव कस्यचिन्नृपतेर्वंशजो भवितुमर्हति । न सामान्यस्य कस्यचित् सामन्तस्य । प्रतिकूलदैववशात्तु भवितव्यमनेनात्राऽऽगतेन । भवतु.... अहं स्वयमेवास्य निवासस्थानं गत्वा यथार्थं वृत्तान्तं ज्ञास्यामि.... .. कस्यायं कुतस्त्योऽयं.. ...कथमिहागत इति । बलवान् खलु ममापरिचितस्यापि निःसंगस्यापि बालकेऽस्मिन्, स्वसुत इव, पक्षपातः । अदृष्टपूर्वमप्येनमवलोक्य स्नेहार्द्रमिव स्निह्यति मम मानसम् । अपि नाम प्रतिज्ञापूर्तिमिच्छतानुकूलेन दैवेनायं मत्समीपे प्रेषितो भवेत् ?' इत्यादि किमपि किमपि विचारयन्नेव शनैः शनैस्तेनोपदिश्यमानमार्गस्तत्पितरं साक्षात्कर्त्तुं चचाल ।

संप्राप चाचिरादेवातिगहनवनराजिमध्यस्थितं सर्वतः परिभ्रमद्खड्गधारितरुणसैनिकपरिरक्षितं स्वस्वकर्त्तव्यव्यापृतसामान्यजनं प्रतिनिवर्तमानगोवृन्दमनोहरं गणराज्यस्थानम् । तेजस्विना केनचिद्भूदेवेन सहागच्छन्तमक्षतशरीरं तं युवानं प्रेक्ष्य हर्षोल्लसिताभिः इतस्ततः क्रीडन्तीभिः बालिकाभिः यवनपराजयमनुमीयोत्फुल्लवदनकमलाभिः, वनदेवताभिरिव गृहीतबालभावाभिर्मनोहारिणीभिः, विहाय क्रीडाकौतुकं ससंभ्रमं प्रधाव्य निवेदितः स वृद्धः सामन्तो यवनद्वन्द्वयुद्धप्रसंगश्रवणात् प्रभृति बालकस्यानिष्टशंकयाऽऽकुलस्तयोः स्वागतार्थं बहिरागत्य स्वबालकं विजयिनमक्षतविग्रहञ्चावलोक्य परां मुदमुवाह। प्रणनाम च भक्तिप्रह्वो विप्रवरम्। सोऽपि तस्य वार्द्धकविक्लवस्यापि तेजस्विनीं स्वाभिमानशालिनीं मुद्रां विप्रेषु समादरञ्च वीक्ष्य नितान्तं संतुष्टस्तमाशीर्वचनैरभिनंद्य, तेनोपदिश्यमानमार्गो, गणराज्यमुख्यालयस्थितानि तानि तान्यायुधस्थानानि व्यायामशालाश्च विलोकयन्, स्वीकुर्वन् सस्मितं साशीर्वचनञ्चाऽऽश्रमवासिनां सभाजनानि, मुहूर्तमलंचकारातिथिगृहं विनयावनतेन तेन वृद्धेन सामन्तेन सह विविधाः कथाःकुर्वन् कृततदातिथ्यस्वीकारः ।

एतेन समयेन परिणतो दिवसः। वनात् प्रतिनिवर्तमानैर्धूलिधूसरितसर्वांगैर्वत्सावलोकनौत्सुक्येन सत्वरं प्रधावद्भिर्गोवृन्दैराकुलाकुलान्यभवन् गोस्थानानि । पश्चिमाशावलंबिरक्तदिनकरकरनिकरसम्पर्करुचिरा आश्रमतरव आलंबितरक्तवल्कला इव रुरुचिरे। अथ सुदूरमार्गाक्रमणश्रमातिरेकेण क्लान्तं प्रविशन्तमिव पश्चिमजलनिधिं श्रमापनोदाय दिवसमणिं

प्रणम्य विहितसायंसंध्योपासनः, तेन क्षत्रियकुमारेण सादरमुपायनीकृतं धारोष्णं स्वादु गोदुग्धं तथाऽतिमधुराणि वन्यानि फलानि गृहीत्वापनीतक्षुधो, मधुरं शीतलं वननिर्झरसलिलं पीत्वाऽपनीतश्रमः, समुदितपूर्णचन्द्रचन्द्रिकास्नाते इवाखिल आश्रमस्थाने, विश्रान्तदोहनध्वनिषु शान्तेषु गोस्थानेषु, एकदेशोपविष्टेषु प्रारब्धरोमन्थमन्थरमुखेषु निद्राजडनयनेषु मृगकदम्बकेषु, वननिर्झरझंकारवाहिषु प्रफुल्लकुमुदामोदमन्दगन्धिषु मंदं मंदं वहत्सु निशामुखसमीरणेषु, याममात्रखण्डितायां तस्यां यामिन्यां, विविक्ते विस्तीर्णे शिलाखण्डे समुपविष्टः आर्यश्चाणक्यः समीपोपविष्टं विनयप्रह्वं तं वृद्धं सामन्तं जगाद—'सम्पूर्णेऽपि भारतवर्षे स्वैरं पर्यटता मया नावलोकितं भवतामिव स्वमातृभूमिप्रेम। आकृतिरेव भवतां व्यञ्जयति महाकुलीनत्वम्। कुतः खलु भवन्तः ? कुतश्चायं वीरपोतः ? गुणेषु भवतः अनुकुर्वतोऽपि तस्याकृतिरन्यसदृशीव मे प्रतिभाति। अस्य विलक्षणा कान्तिः; स्वल्पवयसोऽपि असामान्यं शौर्यं, विनयशीलस्यापि स्वाभिमानशालि वर्तनं,……निष्कलंका मातृभूमिभक्तिः, जाज्वल्यमानो यवनविद्वेषः साम्राज्यलाभसंसूचकानि च सुलक्षणानि स्फुटं व्यञ्जयन्त्यस्य महद्राजकुलीनत्वम्। तत् कथयन्तु भवन्तः सर्वं वृत्तान्तम्। महन्मे कौतूहलम्' इति।

स वृद्धः सामन्तोऽपि तस्याभ्यागतस्य विप्रवरेण्यस्य क्षत्रियकुमारेऽनुकूलग्रहातिशयं वीक्ष्याऽऽह विनयनम्रः—'विदितमेव स्याद् द्विजश्रेष्ठस्य भारतीयेषु पारस्परिकं कलहं सुनिपुणं समुत्पाद्य गान्धारान् पञ्चनदीयांश्च भारतीयप्रदेशान् स्वायत्तीकुर्वतो यवनसम्राजः सैन्यसागरं दुःसहवेगं दृढं प्रतिकुर्वतः पञ्चनदीयस्य राज्ञः यशः। अहं खलु सामन्तानां तस्यैकतम आसम्। दुर्दैवात् तु पराजिते स्वामिनि यवनदासत्वमंगीकृत्य कथमपि स्वराज्यं प्रशासति, अहमेतादृशमपमानं सोढुमसमर्थो विहाय स्वामिनं कतिपयैः स्वामिभक्तैरनुयायिभिः सह स्वप्रदेशं परित्यज्यान्यस्वाभिमानिस्वतंत्रनृपाश्रयमन्वेषयन् यदृच्छया प्रदेशमिमं संप्राप्तः। नैसर्गिकानुकूलावस्थाभिराहृतचित्तोऽत्रैव निवासमकल्पयम्।……शनैः शनैः युवभिरनेकैः यवनदुराचारसंत्रस्तैरागत्य मिलितैः संवर्द्धितमेतत् कटकं मे गणराज्यस्वरूपं प्राप्नोत्'।

'एष्वेव दिवसेषु आक्रम्य पञ्चनदप्रदेशान् यवनाः पुरातनीं स्वनीतिमनुसरन्तस्तत्सीमासंलग्नानिमान् हिमाचलोपत्यकाप्रदेशान् अपि

समाक्रमितुं प्रायतन्त। तेषाञ्चैतादृशान् प्रयत्नान् दृष्ट्वा क्रुद्धाः सर्वे जानपदाः एकीभूय स्वस्वातंत्र्यसंरक्षणार्थं विविधान् उपायान् वारंवारमचिन्तयन्। एतदन्यतमाया एव जातिप्रमुखसभायाः प्रतिनिवर्तमानोऽहं एकदा, अपगते गगनमण्डलाद् भगवति सहस्रांकिरणे, कालनेमिक्रमं सूचयतीव पूर्वदिशि समुदिते नक्षत्रनाथे, सुनिबिडतया वृक्षपंक्तेरुदयकोमलैश्चन्द्रकिरणैरनालोकितमेव गृहग्रामपथं नातिपरिचितं सावधानतयाऽनुसरन्-अकस्मादश्रृणवमस्फुटं कस्यचिद्बालकस्य करुणं क्रन्दनध्वनिम्। श्रुत्वा च तं तस्मिन् निर्जने प्रदेशे तस्याश्च प्रगाढसंध्यावेलायां 'कुतोऽस्याऽस्मिन् देशे समये च समुद्भूतिरिति' विस्मयाऽऽक्रान्तमनसा स्वभ्रान्तिनिविवारयिषया पुनः पुनस्तत्र सावधानतया कर्णमदाम्'।

'संजातनिश्चयश्च तमन्वेषयन्, स्वीकृत्य पाटलिपुत्रगामिनं मार्गं अग्रे गच्छन्……अचिरादेवैकस्य महतः स्वोत्तुंगशाखासंभारविच्छादितगगनमण्डलस्याधिपतेरिव तस्य वनस्य महावृक्षस्याधस्तात् समायां भूमौ शिशिरकरनिकरैरिव घनीभूतैः पीयूषफेनसमूहैरिव विस्तारितैः निर्मिते शुभ्रे वस्त्रे निहितं…… अतिनिविडवृक्षपर्णसंभारभेदनक्षीणक्षीणैश्चन्द्रकरैरनतिप्रकाश्यमानमपि सुस्पष्टासामान्यतेजसं, आक्रोशन्तं बालकमपश्यम्। समुपजातदयश्च स्वयमपुत्रकोऽकस्माल्लब्धं तं बालकं गृहीत्वा महता वात्सल्येन वक्षसि न्यदधाम्'।

'सोऽर्भकोऽपि चिरपरिचिताप्तजनसंस्पर्शश्वस्त इव विहाय क्रन्दनं हसन् क्रीडितुमारभत। 'निर्जने क्रूरश्वापददुःसञ्चारेऽस्मिन् गहने विपिने सुकोमलमेतादृशं सुलक्षणं विलक्षणतेजःप्रभाभासुरं बालकमेकाकिनं तथा परित्यज्य गच्छतोः पित्रोरहो क्रौर्य्यम्!' इत्युद्विग्नः, 'अहो मे सौभाग्यं यज्जनपदप्रमुखसभायाः प्रतिनिवर्तमानोऽहमद्यादृष्टसामर्थ्योपदिश्यमानमार्ग इव विहाय समीपतरगामिनमध्वानमनेन दूरगामिनाऽध्वनाऽऽगत इमं सुलक्षणं बालकं साक्षान्मृत्युमुखान् मोचयितुं प्राभवम्। सर्वथा प्रभविष्णु बालकस्यास्य सुदैवमेवात्रकारणं' इति विचिन्तयन्, 'अतृप्तपितृहृदयस्य ममाधन्यस्याहो चिरात् पुत्रलाभ' इति हृष्टः, 'कस्येव धन्यस्य पुरुषवरस्यायं पुत्रको भवेत्? मन्दे चन्द्रातपेऽस्पष्टं दृश्यमानानि लक्षणान्येवास्य व्यञ्जयन्ति महाकुलप्रभवताम्। न खलु साधारणकुलसंभूतानां सम्भवन्ति लक्षणान्येतादृशानि। नूनं महद्विपत्तिग्रस्तैरेवास्याऽऽप्तजनैरयमेवमनाथ इव परित्यक्तो भवेत्। आकृतिरेवास्य

संसूचयति—महान्तमपि विपत्सागरं समुत्तीर्यायं श्रेष्ठां पदवीं स्वजीवने प्राप्स्यतीति। अस्तु नाम। सर्वथा देवताः स्वस्ति विधास्यन्ति। अहन्तु सौभाग्यप्रदत्तमिमं स्वपुत्रमिव पालयन् लालयन् संवर्धयन् स्वकर्त्तव्यं पालयिष्यामि' इति संप्रधार्य क्षुद्व्याकुलं वक्षसि विलगन्तं तं पितृवत् सस्नेहं समादाय त्वरितगतिः स्वगृहग्राममगच्छम्'।

'चिरपिपासितमातृहृदया मम भार्याऽपि तं देवसंप्रेषितं स्वपुत्रकमेव मन्वाना महता वात्सल्येन नन्दिन्या अमृततुल्येन दुग्धेन तं पोषयामास। मदनुयायिनोऽपि तं तेजस्विनं बालकं नूतनोदितं बालार्कमिव वर्धमान-प्रभाभासुरं दृष्ट्वा कौतुकस्पृष्टमानसाः स्वगणराज्यस्य भाग्योत्कर्षमदूर-वर्तिनममन्यन्त'।

'एवं गच्छति काले शुक्लपक्षशशांक इव मम गृहे वर्धमानो बालि-शालापमुखरोऽकारणहासप्रफुल्लवदनकमलः स्वच्छन्दमितस्ततः परि-भ्रमन् अचिरादेव चक्रवर्त्तिसुलक्षणांकितैः स्वचरणकमलचिह्नैरुटजाजि-राण्युट्टंकयितुमारभत। चिराल्लब्धस्य भाविनः स्वनेतुः सौन्दर्यं प्रभाव-शालित्वं निर्भीकहृदयत्वञ्चावलोक्य विस्मयमानाः प्रमोदमानाश्च मदनु-यायिनस्तमादरेणानुरागेण च संमानयन्ति स्म'।

'एवं क्रमेण परिवर्धमानः स बालकः स्ववृद्धपितुरानन्दैकविश्राम-स्तुल्यवयोभिः समानवृत्तान्तैः स्वानुरक्तैरितरबालकैः परिवृतः सर्वेष्वे-वोपान्तवर्त्तिषु हिमालयोपत्यकाप्रदेशेषु निर्मलगिरिनिर्झरमण्डितेषु यथेच्छं भ्रमितुमारभत। प्रकृत्यैव निर्भीकः स्वभावेनैव निःशङ्कश्च स क्रूरवन्य-श्वापदसंचारभयंकरास्वपि निविडवृक्षराजिवनान्धकारास्वपि महतीष्व-टवीषु स्वैरं परिभ्रमन् वन्यानि त्रासदानि श्वापदानि जघान। इमाञ्च तस्य निसर्गप्रबलां क्षात्रवृत्तिमवलोकयता मया स यथासमयमुपनीतः क्षात्रविद्यायां समुपदिष्टश्चाचिरादेव पूर्वाभ्यस्त इव विविधायुधनैपुण्यं लीलयैवाऽऽत्मगतं चकार। धनुर्विद्याधुरंधरो लीलयैवातिदूराण्यपि दुर्लक्ष्याण्यपि लक्ष्याणि बाणैर्विव्याध। बाहुबलयापरिमेयानपि तालवृक्षान्, बिसतंतूनिव, हसन्नेवैकेनैव खड्गप्रहारेणालावीत्। क्रूरवन्यवराहादि-प्राणिनोऽनुसरंश्च नेषदपि बिभाय'!

'अद्यैव नूनं विप्रवरेण दृष्टं तस्य शौर्यं क्षात्रं तेजः निर्भीकत्वञ्च। एकाकिनैव तं क्रुद्धं वराहमनुसरता स्वाधिकारसंपिपादयिषया च तेन

यवनदानवेन सह युध्यमानेन न गणित आत्मा न वा संस्मृता वयं तन्निहितप्राणवृत्तयः······· केवलं स्वभावोदग्रात्मनः क्षात्रवृत्तिरेवानुशीलिता।'

'यवीयस्येव वत्से प्रादुरभवन् प्रायः सर्वं एव प्रशासकगुणाः। सर्वानपि समानवयसो बालकानेकीकृत्य स्वयं तेभ्यः तत्तत्कर्त्तव्यान्यादिदेश ·····तेषु तेषु कार्येषु च प्रायुंक्त। तेऽपि तदाज्ञावशंवदास्तन्निर्देशान् शिरसा स्वीचक्रुस्तदिच्छाञ्च न स्वप्नेऽप्युल्लंघयामासुः।'

'एतत् खलु दृष्टचरमस्मिन् संसारे यन्नियत्या लोकोत्तरकार्यसम्पादनार्थं जगतीतलेऽवतारितानां पुरुषवराणां बाल्यादेव तास्ताः विशिष्टाः प्रवृत्तयो विलक्षणाश्च गुणा दृग्गोचरीभवन्ति तादृशविशिष्टकार्यसम्पादनानुकूलाः। इमं सामान्यतो–दृष्टं नियममनुसृत्य····ननु वत्से यवनविद्वेषो बाल्यादेव परां कोटिमधिरूढो दृश्यते। परकीयैर्यवनैः कूटनीतिमवलम्ब्य भारतीयेषु नृपेषु परस्परं कलहं समुत्पाद्य कथं बलाढ्योऽपि मम स्वामी पराजितः, कथमधुना पारदास्यगर्तनिपतितानां गान्धाराणां पञ्चनदीयानाञ्च तैस्तैरुपायैर्मानखण्डना क्रियते, कथञ्च संप्रति स्वसाम्राज्यविस्तारार्थं तैः सूक्तासूक्ता उपायाः स्वीक्रियन्त इत्येतत् सर्वं ममानुयायिभिः सहकारिभिश्च निवेद्यमानं सततं शृण्वतस्तस्य प्रत्यहं वृद्धिमेव प्राप्नोति परकीयविद्वेषवह्निः'।

'विद्यमाना अपि सर्वथाऽनुकूलाः परिस्थितीस्तिरस्कुर्वन्तो, यवनानां कूटनीतिव्यापारांश्च गजनिमीलकयाऽवधीरयन्तो मगधेश्वरसदृशा बलाढ्या अपि भारतीया नृपाः स्वमातृभूमेः पारदास्ये स्वसंस्कृतेश्च ग्लानौ परममौदासीन्यं भजन्त इति खिद्यत एव वत्सेन'।

'महाकुलीनानामेव संभवत्येतादृश्याकृतिः, एतादृशी प्रगाढा मातृभूमिभक्तिः, एतादृशी निसर्गसिद्धा प्रभविष्णुता च। नियतं कल्याणिना महाराजवंशसमुदभूतेन भवितव्यम्। अपि नाधिगतमल्पमपि चिह्नं भवता···सामन्तवर्य! तस्यां पूर्णचन्द्रायां निशायां वत्सेन सह····यत्तस्य कुलवृत्तान्तमंशतोऽपि संसूचयेत्'तम् अपृच्छत् आर्यश्चाणक्यः।

'अहो! स्मारितोऽस्म्यार्येणैकस्य विस्मृतप्रायस्य प्रसंगावशेषस्य। अनुकंपार्द्रे मयि सकौतूहलं निरीक्षमाणे तस्मिन्नर्भकेऽकस्मान्मे दृष्टिपथमागतमासीदेकं रत्नप्रभाभासुरं सौवर्णं यवीयसि तस्य हस्ते निबद्धं रत्नखचितं मणिबन्धनम्। तच्च मया विस्मितेन 'कदाचिदेतत् वत्सस्य

गूढकुलवृत्तज्ञाने उपकारि भवेत्' इति चिन्तयता सुरक्षितं स्थापितमस्ति। अप्यवलोकयिष्यति तद् गुरुवर्यः ? महन्मम कौतूहलं.....' इति वदन्नेव स वृद्धः सामन्तः स्वावासगृहं गत्वा सहितस्तेनानुपदमेवागच्छत्।

आर्यश्चाणक्यस्तु तन्मणिमयं बंधनं तस्यां दुग्धधवलायां चन्द्रिकायां सुचिरं निरीक्ष्य सहसा हर्षोत्फुल्लश्चिन्तयामास—'अहो मे सौभाग्यम् ! अहो भवितव्यता ! परमकठिनप्रतिज्ञापूर्तयेऽनवरतं विविधानुपायांश्चिन्तयतः, सुयोग्यं क्षत्रियं कुमारञ्चान्वेषयतो मम हस्ते स्वयं निपतितोऽयं राजकुमारः ! दृष्टमेव मया एतच्चिह्नं तस्य धननन्दस्य रक्षाबन्धने। नूनं कुमारेण तर्हि धननन्दस्य पुत्रेणैव भवितव्यम्। धननन्दस्य पुत्रः.....मगधसाम्राज्यस्य भावी स्वामी.....अनाथ इव.....श्वापदमुखादिव कथङ्कारमासादितः ? नूनं किमपि गूढं कारणमत्र। ज्ञास्यामि तदचिरादेव। इममेव कुमारं दैवसंप्रेषितं सम्यक् विविधशास्त्रपरिचितं कृत्वा राजनीतिपारंगतञ्च विधाय मागधसिंहासने चाभिषिच्य स्वप्रतिज्ञा पूरणीया। अस्य मगधराजकुलीनत्ववार्त्ता तु किञ्चित्कालपर्यन्तं गोपनीया एव' इति। अवोचच्च तं वृद्धं सामन्तं 'यद्यप्यहं मणिबन्धनं प्रत्यभिज्ञातुमसमर्थस्तथाप्यन्तरात्मा मम कथयति.......सामन्तवर्य........नूनमयं क्षत्रियपोतो महाकुलप्रभव इति। अहो सौभाग्यम् ! प्रतिकूलदैववशान्निर्जने वने तथाऽसहायः परित्यक्तो भवतो दृष्टिपथे निपतितः, न कस्यचिद् भयानकस्य वन्यश्वापदस्य। बाल्यात् प्रभृत्येनं संवर्द्धयन् भवानेवास्य वास्तविकः पिता। अन्यस्तु जनक एव केवलम्।.......यद्यपि भवान् एनमायुधेषु परं प्रावीण्यं नीतवान् तथापि दुर्गमेऽर्थनीतिशास्त्रेऽयमद्याप्यनभ्यस्तः। राजकीयेषु व्यापारेषु च अर्थनीतेः कीदृशं महत्त्वं...........तत्तु भवान् जानात्येव। अतः यदीयन्ते प्रबलेच्छा–सा च तथेति दृढो मम विश्वासः–यदयं तव पुत्रको महत् पदमारोहतु अस्मिन् संसारे......समुच्छेदयतु यवनान् अस्याः पुण्यभूमेः....प्राप्नोतु च महद्यशः आकल्पान्तस्थायि इति तर्हि विजित्य तत्—सहवासलोभं तद्धितेच्छयैव केवलया प्रेर्यमाणः.......समर्पय त्वमिमं मह्यमध्यापनार्थम्। अहं ह्येनं सर्वेषु शास्त्रेषु सर्वासु कलासु नीतिषु च पारंगतं विधायोन्नतां पदवीं प्रापयिष्यामि।'

स वृद्धः सामन्तस्तु तस्य तपस्विनो विप्रस्य भाषणं निशम्य स्वपुत्रस्योत्कर्षं समुत्प्रेक्ष्य च प्रहृष्टान्तःकरणोऽपि तद्वियोगकल्पनाकातरमानसः न सहसाऽनुमुमुदे।

वारंवारमुद्बोधित एव च 'वैयक्तिकस्वार्थापेक्षया मातृभूमेर्हितमधिकं गरीय' इति मनसि कुर्वाणो मुकुलीकृतवेपमानहस्तोऽन्ते विप्रवरं सगद्गदं जगाद – 'नूनं मम मत्पुत्रकस्य च सौभाग्येनैव भवान् स्वयमिहाऽऽगतः। कुतोऽन्यथा भवत्सदृशानां तपस्विनामिहागमनम्? ममापि खलु वत्सस्य सुयोग्याध्यापनव्यवस्थाचिन्तया प्रतिदिनं ग्रस्त एवासीदन्तरात्मा। जगन्नियन्तुस्तु कृपया भवता स्वयमिहागत्य कार्यभारमंगीकुर्वता महान् मम चिन्ताभारो दूरीकृतः। भारतभूमिसंकटनिवारणं भारतीयानां सर्वप्रथमं कर्त्तव्यम्। तदर्थमहं प्राणाधिकमपि पुत्रकं समर्पयितुं संनद्धः। अद्य प्रभृति भवानेव अस्य पिता। भवानेव एनं यथेष्टं शिक्षयतु। कार्ये चाभिमते योजयतु।'

आहूय च तस्मिन्नेव समयेऽनतिदूरवर्तिनं किञ्चित्कार्यव्यापृतं कुमारमवदत्—'वत्स! अद्य प्रभृति त्वं मया विप्रवरेण्येभ्य एतेभ्यो विद्याध्ययनार्थं समर्पितोऽसि। एते ते गुरवः। नातिक्रमणीया त्वया वत्स! एतेषामाज्ञा स्वप्नेऽपि। आप्तजनवियोगक्लान्तमपि नियम्यात्मानं सततं स्वगुरोराज्ञा अनुवर्तमानोऽधिगच्छ सर्वाः विद्याः। परमेश्वरस्त्वामनुगृह्णातु, योजयतु च महत्तमेषु कार्येषु'।

स क्षत्रियकुमारोऽपि विद्याग्रहणोत्सुको विनीतमस्तकोंऽगीचकार स्वपितुराज्ञाम्।

अथ द्वितीयेऽहनि आर्यचाणक्यस्य प्रतिज्ञापूर्तेरारंभं द्रष्टुं समुत्सुक इवोदयाचल–शिखरमारोहति भगवति सहस्रकिरणे, स्वप्रियस्य क्षत्रियकुमारस्य गुरुगृहगमनवार्तां निशम्येव चकितचकितमितस्ततः परिभ्रमत्सु मृगकदम्बकेषु, परित्यज्यान्यानि कार्याणि भाविवियोगदुःखितेषु कुमारं तैस्तैः प्रकारैः संमानयत्सु सहवासिषु कुमारेषु अनुष्ठितप्रातःसंध्यादिनित्यकर्मकलापोऽङ्गीकृतकार्यप्रहृष्टमानस आर्यश्चाणक्य आशीर्वचनैरभ्यर्च्य तं वृद्धं सामन्तं, समाश्वास्य कोमलैर्वचनैर्विरहव्याकुलं कुमारस्याप्तजनं, आबाल्यसहसंवासिबन्धुजनवियोगदुःखाकुलेनापि स्ववृद्धपितृ-विरहसंतप्यमानेनापि धीरगम्भीरमनुगम्यमानः क्षत्रियकुमारेण तेन तस्मात् स्थानात् चचाल।

—:०:—

## पञ्चमः परिच्छेदः

एवं दुर्वहप्रतिज्ञापूर्त्यनुकूलेन भाग्येन साक्षादुपायनीकृतमिव तं महाकुलीनं शूरं विनयान्वितं क्षत्रियकुमारं लब्ध्वा सोत्साह आर्यश्चाणक्यः तस्माद्गणराज्यान्नातिदूर एव हिमालयस्याधित्यकायां सकलकलं वहन्त्या मरुद्वत्यास्तीरे कल्पिताश्रमस्तत्र तं कुमारमध्यापयितुमारभत। वृद्धसामन्तेन च निवेदितं तदुपलब्धिवृत्तान्तं मनसि कुर्वाणः 'नूनमयं तस्यां निशीथिन्यां चन्द्रेण स्वचन्द्रिकया गुप्त' इति समुत्प्रेक्षमाणस्तस्य 'चन्द्रगुप्त' इत्यन्वर्थकमभिधानं चकार।

प्रत्यहं नियते ब्राह्मे समये उत्थाय विहितशौचाचारं विद्याग्रहणसमुत्सुकं तं चन्द्रगुप्तं विविधानि न्यायमीमांसाधर्मशास्त्रादीनि शास्त्राणि विविधाः कलाः गूढं राजनीतितन्त्रं कुटिलान् नीतिप्रयोगांश्च अध्यापयन् विद्वद्वरः स आर्यश्चाणक्यः प्रतिक्षणं संतोषमेवालभत, न कदाचिदपि असंतोषम्। विविधशास्त्रपारंगतोऽध्ययननिरतः सुयोग्यपात्रलाभप्रमुदितो महत्त्वाकांक्षी गुरुः ज्ञानतृषितोऽध्यापननिरलसोऽप्रमादी महत्त्वाकांक्षी शिष्य······ इति सुदुर्लभे समागमे किमिवाश्चर्यं यदुभावपि परस्परसंतुष्टौ स्वस्वकर्त्तव्यपालननिरतौ च भवेताम्?

एवं समतिक्रान्तेषु कतिपयेषु वर्षेषु प्रतिदिनं अधिकाधिकशस्त्रनैपुण्यं शास्त्रपरिचयं राजनीतिपाटवञ्चाधिगच्छन्तं कुमारं चन्द्रगुप्तमवलोक्य स द्विजवर एकदाऽचिन्तयत्—'ग्रान्थिकमेव केवलं पाण्डित्यं राजनीतौ निष्फलमेव। प्रात्यक्षिकेणानुभवेनोपोद्बलितस्य तस्य साफल्यसंभावना। अपि च यदि प्रतिज्ञापूर्त्यर्थं कुमारो मागधसाम्राज्याधीश्वरपदे स्थापनीयस्तर्हि तस्य सहकारिणोऽपि शूराः शस्त्रविद्यायां तथा राजनीतौ सुशिक्षिताः स्वामिभक्ताश्चावश्यमेवापेक्षिताः। यथा हस्तपादं विना शरीरं किञ्चिदपि कर्त्तुमसमर्थं तथाऽनुयायिबलं विना तुच्छस्यापि राज्यस्याधिगमः, अधिगतस्य च पालनमशक्यप्रायम्। किं पुनर्बलाढ्यस्य मगधसाम्राज्यस्य? अतः शीघ्रमेव कुमारस्य सहकारिणोऽपि सम्पादनीयाः

बाल्यात् प्रभृति सहसंवर्धिताः सहशिक्षिता एकचित्ताः सुखदुःखेष्व-भिन्नवृत्तयोऽनुरागिणो जनाः यथा प्रतिकूलतमेष्वपि प्रसङ्गेषु सहकारिणो भवन्ति, न तथा केवलं धनदृष्टयः। तस्मात् कुमारस्य सहकारित्वेन ये शूरास्तरुणाः संपादनीयास्ते तस्य बालसुहृद एव युक्ताः !'

विचार्य चेत्थं एकदा तं वृद्धं सामन्तं दूतमूखेनाऽऽहूय, तस्मै स्वाभि-लषितं निवेद्य, तत्साहाय्येनेतरतरुणान् तथाऽन्यानपि सुयोग्यान् वनवा-सिनो यून एकीकृत्य तानपि यथोचिताध्यापनेन संस्कर्त्तुं प्रारभत। हिमालयोपत्यकाप्रदेशेषु यानि राज्यानि क्षुद्रबलान्यासन् तानि समाक्रमितुं शक्तिलाभायादौ तत्रत्येभ्यः जानपदेभ्यः नियतं करद्रव्यं सम्पाद्य तेषां रक्षणार्थं सुसम्पादितां सेनां निर्ममौ।

क्रमशश्च चतुर्विधैरुपायैर्विधाय स्वल्पं परन्तु सुसंघटितं नूतनं राज्यं, तत्र च प्रतिष्ठाप्य कुमारमधिपतित्वेन संजातसंतोष आर्यश्चाणक्यो भूयो-भूयस्तमुपादिदेश।

'ज्ञातमेव वत्सस्य राज्यस्य सम्पादनं न तथा दुष्करं यथा सम्पादितस्य रक्षणम्। तस्य च कृतेऽर्थशास्त्रस्याध्ययनं तदनुसरणञ्च नितान्तमाव-श्यकम्। तस्य मूलसिद्धान्तान् सुचिरमभ्यस्य स्थिरं विचार्य यः प्रत्यक्षा-ऽऽचरणेऽनुसरेत् स राजा प्रथममल्पसामर्थ्योऽपि नातिचिरादेव चक्रवर्ती भवेदित्यत्र नास्ति संदेहलेशोऽपि। केवलं धनार्जनोपायसंदर्शकं शास्त्रमिति हि नार्थशास्त्रमित्यस्याभिप्रायः। प्रत्युत—'अर्थस्य सर्वैरपि वाञ्छितस्य सुखपूर्वकजीवनोपायस्य, शास्त्रं = बोधकं' इत्यर्थोऽपि मम संमतः'।

'एतदुक्तं भवति-जीवाः सर्वेऽपि सुखेन जीवनं यापयितुमिच्छन्ति। तत् कथं नाम शक्यं स्यादित्येतदनेन शास्त्रेण प्रतिपाद्यते। अलब्धस्य लाभः, लब्धस्य परिपालनं, परिपालितस्य वृद्धिः, वृद्धस्य तीर्थे निक्षेप इत्येते चत्वारोऽस्य शास्त्रस्य मौलिकाः सिद्धान्ताः। एतानेव सिद्धान्ता-नवलंब्यार्थशास्त्रं—अनर्जितस्यार्जनं, अर्जितस्य हानेः परिरक्षणं, परि-रक्षितस्य तैस्तैरुपायैर्वर्द्धनं, वर्द्धितस्य च योग्येषु कार्येषु विनियोजनं समुपदिशति'।

'तत्रापि मानवस्य स्वाभाविकानुवंशिकगुणावगुणपरिवर्द्धनसंयमन-प्रभवित्री विद्या प्राथम्यमर्हति राज्यशासनव्यवस्थाम्। सुयोग्यविद्यादान-मवगणय्य प्रजानां शारीरिकं तथाऽऽर्थिकमेव सामर्थ्यं परिवर्द्धयन् राजा

निःसंशयमेव तत्प्रगतिप्रतिरोधक एव भवेत्। मानवं हि विद्यैव केवला, तत्कर्त्तव्यं समुपदिशन्ती, इतरपशुभ्यो विशेषयति। यथार्थविद्यासंस्कारहीनो मानवसमाजो भयानकवन्यपशुभ्योऽप्यधिकं भयप्रदः'।

'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिरिति चतस्रो विद्याः। तत्र त्रयी मानवसमाजस्य पशुसंघभिन्नस्य कर्मक्षेत्रविभागोपदेशेन व्यवस्थापिका। कर्त्तव्यमुपदिशन्त्या अस्या अभावे मात्स्यन्यायमनुसृत्य प्रवर्तमाना मानवाः पशुभ्यो नातिरिच्येरन्। एतदुक्तं भवति प्रतिव्यक्ति कर्मण्यवस्थिते मत्या शक्त्या परिस्थित्या वा बलिष्ठा मानवाः स्वबान्धवान् अशक्तान् पीडयेयुः। तेऽपि संस्थया बलिष्ठतराः स्वात्मसंरक्षणार्थं संघीभूय तान्, इति प्रवृत्ते परस्परसंघर्षेऽशान्तिरव्यवस्था चाऽऽपतेताम्। अतः कर्मणां व्यवस्थाऽपरिहार्या। कृतायान्तु तस्यां परस्परसहकार्यपेक्षणात् पारस्परिकसौहार्दार्द्रान्तःकरणाः परस्परसहकारित्वेन प्रगतिं कुर्वन्तो मानवसमाजे शान्तिं व्यवस्थां प्रगतिञ्चावतारयन्ति। अतः सर्वविनाशिनः परस्परसंघर्षस्य निवारणार्थं कर्मव्यवस्था, तदापादिका च जातिव्यवस्था सामाजिकव्यवस्थाया उपकारकेऽङ्गे। तयोश्च प्रतिपादयित्र्यास्त्रय्याः आवश्यकता स्वतः स्पष्टा'।

'एवमेव समाजस्य पोषणार्थं द्रव्यबलस्यात्यन्तं भवति खलु अपेक्षेति वार्ताप्यपेक्षते। वार्तया हि संपादितं धनं समाजस्य पोषणे विनियुक्तं तत्प्रगतौ सहायीभवति—इत्यत्र कस्य नाम वैमत्यम्? अनयोर्द्वयोर्विद्ययोर्व्यवस्थाप्रसारार्थं दण्डनीतिरपि शासकेनापेक्ष्यते। मानवो हि स्वभावेन दुराचारानुकूलः। केवलं दण्डभीत्यैव विहायात्मनः स्वाभाविकप्रवृत्तिं सदाचारपथमनुसरति। तस्करो हि समुद्यतदण्डं राजपुरुषं पश्यन् यथा स्वकर्मणो निवर्तते न तथा विदुषो ब्राह्मणस्य सदुपदेशात्। किमन्यदत्र कारणं? ऋते दण्डनीतेः? इमां दण्डनीतिं सम्यक् पालयन् शासनाधिकृतः संमाननार्हः। नान्यः। समुद्यतदण्डो धर्मशास्त्रानुज्ञातमेव मार्गमनुसरन् प्रजापालनदक्षः शासकः संस्कृतेः सभ्यतायाः कलानां शास्त्राणां विविधानामुद्यमानाञ्चोत्कर्षे निमित्तीभवति। दण्डभयरहिते पारस्परिककलहक्षीणसामर्थ्ये परचक्रनिवारणासमर्थेऽव्यवस्थिते समाजे त्रयीवार्ते जीवितुमपि न शक्नुतः। तस्माद्यथा सुक्षेत्रे समुप्तस्य तथांऽकुरितस्याऽऽम्रवृक्षस्य पश्वादिभ्यो रक्षणार्थं कण्टकशाखावरणमत्यावश्यकं तथा त्रयीवार्तादिप्रभाविते मानवसमाजे विकसतः

प्रगतिपुष्पस्यान्यपाशवविकारेभ्यः संरक्षणार्थं दण्डनीत्यवलंबनं शासनाधिकृतस्यावश्यमेवाभ्यर्थनीयम्' ।

'परन्तु वत्स ! एष प्रशासनाधिकारस्तदधिकृतेन विचारपूर्वकमेव योजनीयः । निर्विचारं सपक्षपातमन्यायपूर्वकं वा धारितो दण्डः शासकं सपक्षं हिनस्ति । अनेके खलु बलाढ्या नृपतयोऽन्यायेन दण्डं स्वप्रजासु धारयन्तोऽन्ते प्रज्वलितेन सर्वभक्षकेण प्रजाकोपाग्निना नामशेषं दग्धाः । नापि शासनाधिकृतेन स्वशासनमर्यादा कदाप्युल्लंघनीयाः । स्वयमसद्वृत्तो हि शासकः प्रजानुरागं स्वसंमानं शासनाधिकारञ्च युगपदेव जहाति । बलाढ्यो दशमुखः, श्रूयत एवास्माभिः प्राचीनेषु पुराणादिषु, चतुर्दश भुवनानि प्रशशास । परन्तु पदमर्यादामुल्लंघ्य परदारेषु कृतमतिः सर्वमपि स्ववैभवं नाशयामास ।'

'तद्वत्स ! न्यायेन सर्वाः प्रजाः स्वस्वनियतकर्माण्यनुसृत्य यथासुखं जीवेयुस्तथा वर्तनार्थं शासकेन प्रथमं स्वयं न्यायपरेण स्वकर्त्तव्यानुरागिणा चावश्यं भवितव्यम् । यो हि शासकः स्वयं यथेच्छाचारी प्रजाजनान् तत्कर्तव्यमुपदिशति न तदुपदेशं तस्य प्रजाः समनुतिष्ठन्ति । किमन्यदत्र कारणं ? ऋते योग्यतायाः समुपदेष्टुः ? अतः शासकेन स्वयं न्यायानुरागिणा भवितव्यम् । सति च शासके न्याय्यवर्तने स्वकर्त्तव्यपालननिष्ठुरे तदधीनाः सर्वेऽपि राजपुरुषाः प्रधाना अप्रधाना वा स्वकर्तव्ये दत्तचित्ता भवन्ति । सत्येव च स्वस्वकार्यकरणक्षमे शासनयंत्रे समाजस्याभ्युन्नतिः शक्या' ।

'शासनाधिकृतस्य च, वत्स, नृपस्य यन्न्यायप्रियत्वं प्रशासनक्षमत्वञ्च तदान्वीक्षिक्याः परिशीलनादेव । अत एव शासनाधिकृतस्य सर्वस्यैवाऽऽन्वीक्षिकी विद्याऽवश्यमभ्यसनीयतामवगाहते । आन्वीक्षिकी नाम अनु पश्चात् ईक्षणं = प्रत्यक्षानुभूतेरूर्ध्वं यदनुभूतस्य विषयस्य पुनः पुनः विचारणं सा विद्याऽऽन्वीक्षिकी । एतदुक्तं भवति—यथा सामान्या पशवः स्वेन्द्रियैः पदार्थान् साक्षात्कुर्वन्ति तथा मानवोऽपि । परन्तु मानवस्यास्ति बुद्धिसामर्थ्यमधिकतरं, यत्साहाय्येन स प्रत्यक्षविषयीभूतस्य पदार्थस्य विषये पुनर्विचारणां कर्त्तु प्रभवति । पशुवत् केवलमिन्द्रियसाक्षात्कारमेव प्रमाणीकुर्वन् स्वस्य सारासारविवेकबुद्धिं योजयितुमसमर्थो नरः पशुकल्प एव राजनीतौ चात्यन्तमयशस्वी दृष्टः । आन्वीक्षिकीचतुर-

मतिस्तु शासकः तैस्तैः मार्गैः संप्राप्तान् कार्यविशेषान् स्वयं पर्यालोच्य, विविच्य च कर्त्तव्याकर्त्तव्ये विनिश्चयन् संसिद्धि लभते ।'

'कार्याकार्यविवेकोपदेशिनीयमान्वीक्षिकी नाम शासकानां दैवं चक्षुः । तदुपदिष्टं मार्गमनुसरन् हि शासकः प्रतिकूलदैवसंप्रेषितान्यपि संकटानि सुखमुत्तीर्य यशस्वी भवति । तद् वत्स ! त्वं सर्वदा सर्वेषु कार्येषु आन्वीक्षिकीमेवानुसर । एषा हि कामधेनुरिव सर्वाभीष्टसंपद्दायिनी मातेव त्वां विपद्भ्यो रक्षेत्' ।

'अनेके खलु कराः राजकार्यनिपुणस्य, प्रसंगानुकूलेन तदन्यतमेन स्वकार्यं साधयन् धीमान् सर्वदा स्वतन्त्रमात्मानमवस्थापयेत् । साधनाधीनस्य पुरुषस्य बुद्धिमतोऽप्यन्ततो गत्वा विनिपातोऽवश्यंभावी । अतः कूटनीतौ तांस्तानुपायान् योजयन्नपि त्वं स्वसामर्थ्यं तन्निरपेक्षमेव रक्षितुं प्रयतस्व' ।

'शास्त्रेषु अधीतानां राजनीतिप्रयोगाणां कूटनीतिव्यापाराणां तथा शासनप्रणालीनां प्रात्यक्षिकाभ्यासार्थमिदमत्यल्पं राज्यं विधाय मया तुभ्यं दत्तम् । यदेव परमाणौ तदेव ब्रह्माण्डे इति लौकिकन्यायमनुसरन् अस्य स्वल्पस्यापि राज्यस्य सम्यक् पालनेन शासनेन तथा वर्द्धनेनानुभवविचक्षणस्त्वमचिरादेव मागधसहस्रबलाढ्यसाम्राज्यशासनेऽपि नियतं सिद्धहस्तो भविष्यसि' ।

—एवं वारं वारं राजनीतौ कूटनीतौ धर्मशास्त्रेऽर्थशास्त्रे विविधकलासु विविधेषु शास्त्रेषु द्विजवर्येण तेनोपदिश्यमानस्य संतताभ्यासपरिपक्वमतेः निर्धूताखिलसन्देहतमःपटलस्य कुमारचन्द्रगुप्तस्यादित एव प्रखरा मतिरचिरादेव परं प्रकर्षमाससाद ।

प्रतिक्षणं स्वकर्त्तव्यं सम्यग्विचार्यानुतिष्ठता शूरेण गुणानुरागिणा तेन सुखिनः सर्वे तस्यानुयायिनस्तथान्ये वनेचरा महता सन्तोषेण तदीययशोगानं चक्रुः । सूक्ष्मदर्शी आर्यचाणक्यस्तां तस्य लोकप्रियतां शासनकुशलतां चावलोक्य परं सन्तुष्टश्चन्द्रगुप्तं समये समय उपदिदेश— 'सर्वारम्भा तण्डुलप्रस्थमूला इति सुप्रसिद्धां व्यवहारनीतिमनुसृत्य द्रव्यसंग्रहोऽवश्यं कर्त्तव्यः । द्रव्यबलं विना मागधसहस्रबलाढ्यसाम्राज्यप्राप्तीच्छास्माकं नियतमफलैव संतिष्ठेत' इति । इममुपदेशं मनसि धारयन् स चतुरश्चन्द्रगुप्तोऽर्द्धमात्रं स्वराज्यस्यायात् व्ययीकृत्योर्वरितमर्द्धं

राज्यकोषे न्यधात्। परन्तु तस्यात्यल्पतया संकल्पिते महति कार्येऽपेक्षित-मनल्पं द्रव्यबलं कथंकारं सम्पादनीयमिति रात्रिंदिवं चिन्तयामास।

एवं गच्छति काले एकदा महति प्रत्यूषे कतिपयैः सैनिकैस्तथा मित्र-वरैः सह राजा चन्द्रगुप्तो मृगयया मनो विनोदयितुं नगराजोपत्यकाशायि गहनमरण्यमेकं प्रविवेश। तत्र च नानाविधान् पशून् हत्वा एकं महान्तं वराहमनुसरन् दूरं ययौ स्वानुयायिभ्यः। स च बलिष्ठो वराहो महता वेगेनानेकानुच्चावचान् प्रदेशान् कुटिलकुटिलांश्च गिरिनिर्झरान् समु-ल्लंघ्यारण्यानीं प्रविवेश। अतिगहनलतासंतानदुर्भेद्यवृक्षराजिप्रविष्टं तं कुण्ठितगतिनाश्वेनानुसर्तुमसमर्थश्चन्द्रगुप्तो गगनमध्यारूढललाटंतप-रवि किरणसंतप्तोऽतिदूरधावनपरिश्रान्तादश्वादवतीर्य समीपवर्तिनि प्रवहद्-गिरिनिर्झरजलशीतले महति शिलाखण्डे विश्रामार्थमुपविवेश। अपूर्व-वनश्रीदर्शनाकृष्टहृदयो वराहपलायनखिन्नान्तःकरणोऽपीतस्ततो गगन-चुम्बिनीर्महतीस्तटीः सकौतुकमवलोकयन् अकस्मादेकस्यास्तटया अध-स्तात् शिलाखण्डान्तरितमपि गहनवृक्षराजिपल्लवान्तरनिपतन्मध्याह्न-दिनकरकरविद्योतितमेकं विवर्णं महद्भाण्डमपश्यत्। कौतूहलाक्रान्त-हृदयश्च समुत्थाय तत्समीपे गत्वा तस्य भाण्डस्य परितः वर्तमानाः शिला दूरीचकार। दूरीकृतमात्रासु शिलासु तद्भाण्डं स्पष्टतरं दृग्गो-चरोबभूव। उद्घाटिते च तन्मुखे महता प्रयत्नेन तदन्तःस्थापितो महान् सौवर्णमुद्राराशिः स्वप्रभया तन्नयनेऽभिबभूव। तमवलोक्य विस्मितः सः सत्वरमदूरप्राप्तान् स्वानुयायिनः समाहूय तेभ्यस्तं द्रव्यराशिं दर्शयामास। तेऽपि कौतूहलचित्तास्तं सर्वमेव तटीमूलप्रदेशं सुगूढनिक्षिप्त-स्वर्णमुद्राभाण्डपूर्णं तर्कयन्तस्तम् अखनन्। अलभन्त चागणितान् द्रव्य-राशीन्। तच्च सर्वं द्रव्यं राजा चन्द्रगुप्तोऽश्वैरतिवाह्य स्वकटके निर्मि-तेषु गूढेषु गर्तेषु तेष्वेव भाण्डेषु सुगोपितं विधाय स्थापयामास। आर्य-चाणक्योऽपि तं द्रव्यसम्भारं परमेश्वरप्रदत्तं भाविकार्यसंसिद्धिसूचकं कृपाप्रसादं मन्वानः परां मुदमुवाह।

राजा चन्द्रगुप्तस्तस्माद् द्रव्यसंभारादर्द्धमंशं व्ययीकृत्य बलाढ्यतरां सेनां विधातुमार्यचाणक्यं विज्ञापयामास। परन्तु राजनीतिविचक्षणः स विप्रवरस्तदीयां तां विज्ञप्तिं नांगीचकार। अवोचच्च—'अलब्धस्य लाभ-स्तावदनुकूलेन दैवेनैव सम्पादितः। लब्धस्य परिरक्षणमान्वीक्षिकीप्रवी-णस्त्वं समाचरिष्यसीत्यत्र न संदेहः। एवं तर्हि लब्धस्य परिरक्षितस्य

च वृद्धिः कर्त्तव्यतामापतति। सा च क्षात्रोपायावलंबनेनेति, तदर्थं सैन्यबलपरिवर्द्धनमत्यावश्यकमिति च निःसंशयम्। तथापि वर्तमानां राजनैतिकावस्थामवलोकयतो मे दण्डनीतेरपेक्षया भेदनीतेरेव प्रयोगः प्रशस्यतरः प्रतिभाति। सद्योऽधिगतराज्यस्य तद्द्रव्यबलोपार्जितापि नूतना सेना परितो वर्तमानानां यवनराज्यानां महतः मागधसाम्राज्यस्य चाक्रमणे न केवलमपर्याप्ता भवेद् अपितु विफल एतादृशः प्रयोगस्तेषामस्मद्-हितकारिणीं सोपहासामस्मदुपेक्षावृत्तिं दूरीकृत्य तानस्मत्-समूलोच्छेदने प्रोत्साहयेत्। बहुशः खलु पठितम् इतिहासपुराणादिषु यदशक्तप्रयुक्तो दण्डः स्वकार्यसाधनेऽसमर्थः सन् स्वप्रयोक्तारमेव हिनस्ति... इति। अतः सम्भवत्सु भेदाद्युपायेषु दण्डनीतेः यावच्छक्यमनवलंबनमेव श्रेयस्करमिति वृद्धाः। यदि तु निर्मितापि सेना कार्यवैफल्याशंकयाऽस्मिन्नुद्यमेऽस्माभिः न प्रयुज्यते तर्हि सा उद्यमाभावात् स्वयमेव कलहं कुर्यात्। नाशयेच्च सकलमेव कार्यम्। रजोगुणप्रधाना क्षत्रियजातिर्हि यदि स्वोचिते विजयकर्मण्यप्रयुक्ता तर्हि स्वकीयैरेव सह कलहायमाना स्वसामर्थ्यं संक्षिणोति इत्यपीतिहासेषु दृष्टचरम्। तस्माद् विरमास्मात् विशालतरसेनानिर्माणसंकल्पात्। इममुपलब्धं द्रव्यराशिञ्च स्वकार्यानुकूलनियतिप्रदत्तं न्यासमिव रक्षन् 'योग्य कालं प्रतीक्षस्व' इति।

सोऽपि गुरोर्योग्यतां बुद्धिविभवञ्च जानन् तदाज्ञां शिरसाङ्गीचकार।

एवमतिक्रामत्सु दिवसेषु आर्यचाणक्य एकदा ब्राह्मे मुहूर्त्ते समुत्थायात्मनैव संप्रधारयामास—वत्सश्चन्द्रगुप्तः सर्वथा चक्रवर्तिलक्षणसम्पन्नः सुशिक्षितो राजनीतौ कुशलः न्यायानुरागी स्वप्रजाजनहितसाधनदक्षश्च वर्तते। तस्य सहकारिणोऽपि दिष्ट्या प्रामाणिकास्तदनुरक्ताश्च। एतत् स्वल्पमप्युपत्यकाराज्यं न्यायेन परिपालयन् वत्सः प्रशासनचातुरीमेव प्रकटीकरोति। नियत्या प्रदत्तः सुमहान् द्रव्यनिधिरपि निभृतमवस्थापितः। एवं सुव्यवस्थितासु सर्वासु परिस्थितिष्वनुकूलासु, मया स्वप्रतिज्ञापूर्तयेऽवश्यमेव प्रयतनीयम्। सम्पन्ना हि सर्वाः प्राथमिकसिद्धयः। इदानीमंगीकृतस्य महतो भारस्य निर्वहणार्थं के नामोपाया योग्याः, के वा मार्गा अनुसरणीयाः, के वा सहकारित्वेनोपादेया इत्येतद् विचारणीयम्। तत्र मगधसाम्राज्यतुल्यबलं बलाढ्यं राज्यं शस्त्रबलेन विजेतुं न कुमारस्य पर्याप्ता शक्तिः। नातिचिरबद्धमूलो हि वत्सश्चन्द्रगुप्तो मगधसाम्राज्यमाक्रामन् तेन धननन्देन जीवग्राहं गृहीतः

समरभूमौ वा शायितो मम सर्वमेवोद्यमं विफलयेत्। यद्यपि शनैः शनैस्तानि क्षुद्राणि राज्यानि क्रमशो विजित्य परिवर्द्धितसामर्थ्यस्य चन्द्रगुप्तस्य समरभूमावपि विजयो नासंभवी। तथापि तत्र महानवधिरपेक्षितः। प्रतीक्षासहिष्णुश्च मम परिभवाग्निर्यावच्छक्यं शीघ्रमेव स्वोपशममपेक्षते। बलप्राप्तो विजयोऽपि न मे रोचते। यद्यपि शास्त्रे लोके चानेके राजानः बाहुवलेनैव केवलेन पराभूय स्वप्रतिस्पर्धिनः कृतकृत्याः श्रूयन्ते दृश्यन्ते च तथापि नायमसन्दिग्धः पन्थाः। नाप्यत्र राजनीतिपाटवम्।

'उक्तं हि—

'साम्ना दानेन भेदेन जयमिच्छेद् बलेन च'।
'बलेन विजयं कांक्षन् पशुभ्यो नातिरिच्यते'॥ इति।

'साम्नो दानस्य वा प्रयोगोऽस्मिनुद्यम अशक्यप्राय एव। भेदस्तु सम्भवी। स च मे रोचते। सुप्रयुक्तो हि भेदो यथा स्वप्रयोक्तुर्बुद्धिमत्तायाः परिचायकः यथा वा समुद्दिष्टकार्यसाधको न तथान्ये। परन्तु यत्र भेदः प्रयोक्तव्यस्तत्रत्यां विविधां परिस्थितिम् अदृष्ट्वैव दूरस्थितेन भेदविधानमशक्यम्। भेदो हि भेद्यस्थलाभ्यन्तरिकसूक्ष्मपरिस्थित्यवलोकनानन्तरं विचारपूर्वकञ्च नियतं फलदायी भवति। यद्यपि चारचक्षुषा भेद्यपक्षस्याभ्यन्तरिकस्थितिं जानन्ति कूटनीतिज्ञास्तथापि प्रामाणिकाः स्वकार्यकुशलाश्च चाराः कुत इहारण्ये? तस्मात् मयैव कृतवेषपरिवर्तनेन तत्र पुनर्गन्तव्यम्। अन्यापदेशेन निभृतं वसता च राज्यशासनयंत्रदूषकाणि तानि तानि भेदस्थलानि सुनिपुणं परीक्षणीयानि। न च तेषामत्यन्तमसम्भवमुत्प्रेक्षते। श्रुतं हि मया मगधसम्राजो धननन्दस्य नातिन्याय्यशासनेन प्रजाजना असंतुष्टा अपि राजनीतिनिपुणेनामात्यराक्षसेन कथञ्चित् प्रशमिताः क्रान्तये नोत्सहन्ते इति। यद्यप्यहं तस्मिन् सरस्वतीभवने सर्वजनसमक्षं नन्दवंशोच्छेदं तथोच्चैः प्रतिज्ञाय निर्गतः तद्राजधान्यां प्रतिज्ञातोऽनिष्टं लभेय इति प्रबला सम्भावना तथापि अतीतेषु एषु संवत्सरेषु को नु मां कृतवेषपरिवर्तं प्रत्यभिज्ञातुं प्रभवेत्? अथ च यदि एतादृशदुर्दैवाघातशङ्कया तूष्णीमेवावस्थीयते तर्हि प्रतिज्ञापूर्तिरेवासंभाव्या। यद्भावि तद् भवतु नाम। उद्योगस्तु कर्तव्य एवेति।'

विचार्य चेत्थं स दृढसंकल्पो द्विजः पाटलिपुत्रं पुनर्जिगमिषुश्चन्द्रगुप्तं निशीथिन्यामेकान्तेऽविचलितेन मनसोपदिदेश—'वत्स! अहं श्व एव

स्वप्रतिज्ञापूर्तिसमुद्योगाय मगधराजधानीं गमिष्यामि। त्वं मम पश्चात् सर्वाण्यपि कार्याणि सावधानेन चेतसा कुरु। अत्रत्या ये वनेचरास्तथान्ये तव सहकारिण: सन्ति तेषां रक्षणे विशेषतो दत्तचित्तो भव। एते वनेचरा एव त्वां संकटसमये—रघुवीरं वानरा इव—सर्वथानुसरिष्यन्ति वत्स ! प्राय आज्ञापालनेऽशिक्षिता एव जना प्रभवन्ति न सुशिक्षिता:। सुशिक्षितानां जनानां हि चेत: प्रतिक्षणं नवीनवितर्कजालव्यापृतं वात्योत्थितकल्लोलातिचंचले सागरजल इव नौ: उद्दिष्टाधिगमनेऽसमर्थमेव प्रायो दृष्टम्। यथा हस्तियूथे एक एव यूथप: तथाऽशिक्षितानां जनानां शासने बुद्धिमान् एक एव नायक: पर्याप्त:। तदितस्तत: प्रवसत: स्वेच्छाचारिण इमान् वनेचरान् भूमिदानादिना संगृह्यैतानेवाज्ञापालनदक्षान् सैनिकान् कुरु। अहन्तु मगधराजधानीं गत्वा निभृतं तत्र वसन् गूढकूटनीतिप्रयोगान् प्रयुञ्जान: आक्रमणीयस्य राज्यशासनयंत्रस्य भेदस्थानानि अवलोकयिष्यामि। तेष्वनुकूलतमञ्चाश्रित्य सर्वमेव शासनयन्त्रं दूषयिष्यामि येन तदधिग्रहणं त्वत्कृतेऽल्पश्रमसाध्यं भविष्यति। मदीया गूढा दूतास्त्वां मम कुशलं निवेदयेयुरेव'—इति। राजा चन्द्रगुप्तोऽपि तदाज्ञावशंवद: सर्वं तत्तथेति स्वीचकार।

—:*:—

## षष्ठः परिच्छेदः

अथापरेद्युरेव स द्विजवरो ब्राह्मे मुहूर्ते मरुद्वतीतीरवर्तिनस्तस्मात् स्थानान्मगधराजधानीं गन्तुं प्रातिष्ठत । प्राप च कमण्डलुमात्रहस्त एकमात्रशिष्यानुगम्यमानः कृतवेषपरिवर्तः कतिपयैरेवाहोभिरविदन्नेव दीर्घमपि पन्थानं भाविकार्यपद्धतिचिन्ताव्यग्रमनस्कतया पूर्ववदेवैश्वर्य-शिखरविराजमानां पूर्ववदेव स्वसामर्थ्यविश्वस्तां समासन्नानां महतां राजकीयपरिवर्तनानामनभिज्ञां मगधराजधानीम् ।

दृष्टपूर्वाञ्च तां प्रविश्य 'क्वेदानीं निभृतमवस्थातव्यं यत्र वसतः राजकीयपरिस्थितेर्निरीक्षणमपि शक्यं स्यात्, जनानाञ्च कार्यविघाति कौतूहलमपि नोद्भावितं स्यात्' इति विचारयति तस्मिन् द्विजवरेऽकस्मादेको मुण्डित-मस्तकः रक्तवस्त्रधारी कमण्डलुपाणिः कश्चन क्षपणकस्तस्य पुरस्तादा-गच्छत् । अनमच्च तं नूतनागतमिव निवासस्थानार्थिनं समुत्प्रेक्ष्य 'णमो भन्दताय, णमः संघाय' इत्युच्चैर्गदन् ।

कर्मठश्चातुर्वर्ण्याभिमानी आर्यचाणक्यस्तु वेदाप्रामाण्यवादिनं तं क्षपणकं वीक्ष्य तिरस्काररेखालाञ्छितो न किञ्चिदपि प्रत्युवाच । परन्तु चतुरमतिः स बौद्धयतिः तर्किततदीयभावनः पुनरुवाच 'विप्रश्रेष्ठ ! स्व-वैदिकधर्माभिमानमुररीकृत्य तवायं बौद्धधर्मानुयायिनो मे तिरस्कारोऽस्थाने एव । नाहं त्वां धर्ममुपदेष्टुं प्रवृत्तः । भवान् अस्यां नगर्यां सद्य एवागत इति तर्कयित्वा त्वां समुचितवासस्थानविषये किञ्चित् कथयितु-काम आसम् अस्मि च । यदि नाम मदीये विहारे नास्ति तव वासस्येच्छा तर्हि तत्समीपवर्तिनि शिवालये त्वं निवासं कर्त्तुमर्हसि येन त्वां प्रति-दिनं द्रष्टुं शक्नुयाम् । सुविद्यः खलु दृश्यसे । उत्सुकं चिरान्मम चेतो भवतां सनातनवर्णाश्रमधर्मस्य मौलिकान् कतिपयान् सिद्धान्तान् ज्ञातुम् । दुर्लभो हि विद्वज्जनसमागम' इति ।

द्विजवरेण्यस्तु तस्येदं भाषणं निशम्य मनसि चकार—'नाहमस्मिन्नगरे वेदप्रामाण्यमुररीकृत्य यज्ञादीननुष्ठातुमागतः । नापि वादविवादप्रसङ्गेन

विद्वत्सभासु सनातनवैदिकधर्मस्य सर्वश्रेष्ठत्वं व्यवस्थापयितुम् । अहर्निशं मनसि दहतः परिभवाग्नेरुपशमनार्थमेव प्रयतमानस्य हि मम कुत एतादृशावान्तरविषयचिन्ता ? अतः 'अयं नास्तिकधर्मानुयायीति न कदापि मम सौहार्दार्हः । स च चातुर्वर्ण्याभिमानी निर्विवेकमनुग्राह्य—' इति पक्षपातः सर्वथाऽयुक्त एव । राजनीतौ नास्ति धर्मस्य विचारः । केवलं स्वोद्दिष्टपूर्तये यानि यानि खलु साधनानि नितान्तमपेक्षितानि तेषां सर्वेषां संग्रहं विधाय स्वोद्दिष्टं साधयेद् धीमान्—इति राजनीतेः प्रथमः सिद्धान्तः । राजनीतौ हि कदाचित् सोदरोऽपि विप्रतीपकारी हन्तव्यो भवति । चाण्डालोऽपि स्वानुकूलः संग्राह्यः । एते बौद्धधर्मानुयायिनस्तैस्तैरुपायैः स्वधर्मस्य प्रसारार्थं चेष्टमानास्तदननुकूलान् वैदिकधर्मानुरक्तान् नृपान् द्विषन्ति । तदर्थञ्च नृपतिर्हितप्रतिकूलवर्तिनो जनान् संगृह्णन्ति । बहुशः खलु दृष्टमिदं मया देशाभ्यन्तरे प्रवसता । तत् कदाचिदस्य विहारे मगधाधिपानिष्टाकांक्षिणां व्यक्तिविशेषाणां परिचयः सम्भवी । नातिनिवृत्तिपरा खल्वस्य चित्तवृत्तिः । तस्मादस्य विज्ञप्तिः स्वीकरणीयैव' इति ।

विचार्य चेत्थं स 'स्वीकृतो भवत्प्रणय' इति तं क्षपणकं संभाव्य, तमनुसरन् संगमतीरप्रदेशवर्तिनि बौद्धविहारसमीपावस्थिते शिवायतने क्लृप्तनिवासः स्नानादिकं नित्यकर्मानुष्ठायात्मनैव भाविकार्यपद्धतिं विचारयन् तथैव तस्थौ । नातिचिरमेवमवस्थिते च तस्मिन् तस्य क्षपणकस्य शिष्यः 'भिक्षुश्रेष्ठो भवतामागमनं सादरं प्रतिपालयति' इति निवेदयामास । तेनोपदिश्यमानमार्गश्चार्यचाणक्यो विहारं प्रविश्य, तदागमनप्रीतेन तेन भिक्षुणा महतादरेण सत्कृतः, सुखमास्थितः, स्वस्थचित्तः, यदृच्छयेव विविधान् प्रायः राजकुलसंबद्धान् वार्तालापान् कुर्वन् मगधाधिपस्य तदन्तःपुरवासिनीनां ललनानाममात्यमण्डलस्य चेतिवृत्तं विविधान् राजकुलाभ्यन्तरिकभेदांश्च महता चातुर्येणाधिगतवान् । कूटराजनीतिप्रयोगानभिज्ञस्तु शिशुमतिः स भिक्षुस्तस्य विप्रस्य राजकुलीनपरिचयप्राप्तयौत्सुक्यं वीक्ष्य 'नूनमयं दक्षिणाकामो विप्रः प्रभावशालिनां मगधनृपसंबन्धिनां परिचयं वाञ्छति'—इति मन्वानः, श्रेष्ठैः राजसंबन्धिभिः सह स्वसौहार्दस्य परिचयदानेऽप्युत्सुकः सविस्तरं तमश्रावयत् । सर्वञ्च तं राजकुलवृत्तान्तं निःस्पृहस्येव शृण्वतः आर्यचाणक्यस्य मनसि प्रधानामात्यसेनापत्योः राक्षसभागुरायणयोर्मनोमालिन्यं महत्त्वं परमाससाद ।

अनेन समयेनाविरतप्रवासक्लान्त इवारक्तमलिनकान्तिर्भगवान् सहस्रकिरणः श्रमपरिहरणेच्छया गगनमण्डलादवतरन् पश्चिमसागरे ममज्ज। आरक्तीकृतप्रासादशिखरा सर्वतोभासिनी सायंप्रभास्तंगतं प्रभाकरं पतिव्रतेवानुगच्छन्ती क्वापि ययौ। गगनवितानाद् बलादपहृतस्य दिनमणेरधो निपतिताः प्रकाशपुञ्जा इवारक्तप्रभाः प्रदीपाः सर्वत्राभासन्त। अश्रूयत च सहसा सूर्यास्तसंसूचको युगपत्प्रहतानेकवाद्यनिनादोपबृंहितः प्रासादकुक्षिषु प्रतिध्वनिगम्भीरः पटहध्वनिः। श्रुत्वा च तमार्यचाणक्यः सायंसन्ध्यावन्दनकालं समासन्नमवलोक्य स्वनिवासं जिगमिषुः तत्क्षण एवागतां वृद्धां भद्रवेषां नारीमेकामवलोकयामास। 'किं खल्वस्य भिक्षोः प्रयोजनमनया राजान्तःपुरपरिचारिकयेव दृश्यमानयास्मिन् समये व्यग्रमिवागतया' इति कौतूहलचित्तश्च पूर्ववदेवासने तस्थौ। भिक्षुस्तु चिन्ताम्लानमुखीं त्वरितागमनपरिश्रान्तां तां वीक्ष्योवाच—'भद्रे वृन्दमाले! कुशलं कच्चित् तव स्वामिन्या मुरादेव्याः? चिन्तामग्नेव दृश्यसे। कथमिवाद्य अस्यां संध्यावेलायां ससम्भ्रममागतासि?'

वृद्धा वृन्दमाला तु भिक्षोस्तत् स्नेहार्द्रं वचो निशम्य किञ्चिदाश्वस्ता नाम दीर्घं निःश्वस्य प्रत्युवाच—'कुतः कुशलं मम स्वामिन्याः······ अहर्निशं परिभवाग्निना दह्यमानायाः? तत्रापि भाविनः कुमारसुमाल्ययौवराज्याभिषेकमहोत्सवस्य घोषणां निशम्यापारदुःखसागरमग्ना अधिकतरप्रज्वलितेर्ष्यादहनदह्यमानमानसा दैनंदिनानि दैहिककार्याण्यपि साग्रहमस्माभिरनुनीयमानैवातिष्ठन्ती, सदैवानलंकृतविग्रहा, भूमिविलुण्ठनधूसरांगी, सततनिपतदश्रुबिन्दुभिः क्लिन्नमुखकमला, 'हा मन्दभागिनि मुरे! व्यर्थं खलु त्वं जातासि। या हि त्वं किरातराजवंशे समुत्पन्ना, मगधाधिपतिना सप्रणयं परिणीता, परमकारुणिकेन परमेश्वरेणान्यराजपत्नीनामविगणय्य प्रार्थनाः प्रदत्तमपि सुलक्षणं पुत्रकमीर्ष्यालुकपटपटु-सपत्नी-जनदुर्नीतिजालाद् रक्षितुं न शेकिथ तस्यास्तव निःसाराया वंध्यासमायाः किं वृथाजीवितेन? हा वत्स! जातमात्र एव निष्पापस्त्वं नृशंसैरत्याचारिभिर्बलाज्जनन्याः दुर्बलायाः स्नेहमयादंकादपहृत्य प्राणैर्वियोजितोऽसि। हा पुत्रक! कीदृशस्येव महापातकस्य परिणतिरियं मम-यज्जनन्याः सुखादेवं वञ्चिताऽस्मि। अहो बलाढ्यस्यैश्वर्यशालिमगधसाम्राज्याधीश्वरस्य ज्येष्ठेनापि पुत्रेण त्वया निरपराधमेव सोढाः नारकीया यंत्रणाः। यैश्चेदं नराधमैरकारणवैरिभिर्महापातक-

मिदमनुष्ठितं तेषां निर्यातनमविधायैव जीवनं कथमिव मम, त्वन्मातुः, शोभते। अहो नैष्ठुर्यमश्रुतपूर्वसदृशमेतेषां कपटनाटकसूत्रधाराणाम्! निष्पापमर्भकं मम तथा हत्वापि अकृतकृत्यमात्मानं मन्यमानैः 'कदाचिन्मे द्वितीयः पुत्रो भवेत्' इत्याशङ्काग्रस्तैस्तैरहं वृषलीत्वेन प्रख्यापिता! किरातवंशः खलु क्षत्रियश्रेष्ठ एव। परन्तु कर्णदंशविमोहितमतिर्मगधाधिपतिः कपटमूर्तयस्तदमात्याश्च तं वृषलत्वेन दूषयन्ति! वृन्दमाले! जातस्य वत्सस्य ममाद्य चतुर्दश संवत्सरा अतीताः। यदि सोऽजीविष्यत् तर्हि स एव युवराजोऽभविष्यत्। अहो निर्धूमं दहति मामेतत् कल्पनोपनतमपि विस्तीर्णललाटपट्टं समुन्नतसरलनासिकावंशविनयावनतकर्णान्तविश्रान्तनयनकमलसुशोभितं यौवराज्याभिषेकतिलकमण्डितं रत्नकुण्डलप्रभासितं तस्य वदनम्! अहो स्फुटति मम संततदुःखाघातजर्जरं हृदयम्! अहमेव मूढा या किमप्यकुर्वन्ती वैरनिर्यातनाय केवलमनुशोचन्ती स्वदुर्दैवं······एतत् कालपर्यन्तं तूष्णीं स्थिता। नातः परं तूष्णीं स्थास्यामि। निरपराधं हतस्य मम वत्सस्यात्मा उत्तेजयतीव मामशब्दं तदपकारिणो दण्डयितुम्। यैरिदं नृशंसैर्महापातकमनुष्ठितं तेषां भीषणं देहदण्डं निष्पाद्यैवेयं मुरा शान्ततापा भविष्यति। सर्पिणी सुनन्दा स्त्रैणबुद्धिर्मगधाधीशश्चानुभविष्यतः नूनमचिरादेव निरपराधं विमानितायाः निष्कारणं लुण्ठिताया मातुः क्रोधप्रहारम्, इत्यादि किमपि किमपि प्रलपन्ती भ्रान्तेव दीनेव समुद्विग्नेव क्रुद्धेव मुषितेवाहतेव खण्डितेवाविष्टेव अस्वस्था समयं यापयति। यदि नाम काचित् साम्राज्ञ्याः दासी सम्राजः छत्रधारिणी वा, मम स्वामिन्या इमं प्रलापं निशम्य साम्राज्ञ्यै सम्राजे वा निवेदयेत् तर्हि आदित एवाधिक्षेपविषयीभूतायास्तस्याः प्राणसंकटमेवोद्भवेत्। सुपरिचित एव भवान् अन्तःपुरराजकारणकूटव्यापारैः। एतामेवापदमनवरतं समुत्प्रेक्षमाणाया मम न दिने न निशीथे स्वास्थ्यं लभतेऽन्तरात्मा। अत इयं मेऽबलाया भवत्पादपद्मयोर्विनता विज्ञप्तिर्यत्--यथा भवान् एतां दासीं स्वसदुपदेशदानेनानुजग्राह तथा मदीयां हतभाग्यां स्वामिनीमपि अनुगृह्णातु। एतदर्थमेवाहमस्मिन् समये भवत्सेवायामुपस्थितास्मि।'

तदेतत् वृन्दमालाया निवेदनं निशम्य स भिक्षुः दीर्घं निःश्वस्य प्रतिजगाद—'भद्रे! कथमिवान्यथा भविष्यति कालत्रयदर्शिनो भगवतस्तथागतस्य वचनम्? 'गृहकलहाग्निनाऽयं वंशो नामशेषीभविष्यति' इति खलु तस्य वाणी। तदयं प्रज्वलन् गृहकलहाग्निः क्रमेण वर्द्धमानः

सर्वमपि राजवंशं भस्मीकरिष्यति इति मम विश्वासः। अस्तु का गतिः? त्वन्तावत् स्वस्वामिन्या रक्षणे विशेषतो दत्तचित्ता भव। यथा चान्याः अन्तःपुरपरिचारिकाः स्वामिन्यास्तव कोपवचनानि न शृणुयुस्तदन्तर्ज्वलन्तञ्च कोपाग्निं न जानीयुस्तथा कर्त्तुं प्रयतस्व। अहमपि विचार्य निशि विविधचित्तप्रशमनोपायान् श्व एव मम शिष्यस्य हस्तेन पत्रं विसर्जयिष्यामि'।

निशम्य चेदं भिक्षुश्रेष्ठस्य वचनं किञ्चिदाश्वस्तहृदया सा वृद्धा परिचारिका भक्त्या तं द्विजवर्यञ्च नमस्कृत्यान्तःपुराय प्रतस्थे।

आर्यचाणक्यस्तु तटस्थ इव तत् सर्वं सूक्ष्मतयावलोकयन् अपि स्वैरमिव अज्ञ इव भिक्षुं जगाद—'भिक्षुवरेण्य! अहमस्मि दृषद्वतीतीराश्रमनिवासी याजनाध्यापनादिब्राह्मणोचितकर्त्तव्यपालननिरतो विप्रः। सर्वत्र प्रसृतां मगधाधीश्वरस्य कीर्तिं निशम्य चिकीर्षितकन्याविवाहसहायसम्पादनेच्छयात्रागतोऽस्मि। इदानीमेव समुद्भवन्तीं राजगृहकलहवार्तां श्रुत्वा संजाता मम मनसि एकाभिलाषा। इच्छामि अनुष्ठातुमनिष्टग्रहशान्तिविधिम्। धनलाभोऽपि मम ब्राह्मणस्य तेन भवेत्। नृपतिगृहकलहोऽपि नूनं शाम्येत्। (सानुनयमिव तत् कथयतु भवान्। केयं वृद्धा दासी। केयं मुरा देवी। तस्याः पुत्रकस्य वधः केन किमर्थं कदा कथं वा कृतः इति। महत् खलु मे ब्राह्मणस्य कौतूहलम्'।

स तु तस्येमां विज्ञप्तिं निशम्य 'नूनमयं दक्षिणाकामो जातिब्राह्मण' इति मत्वा स्मेरवदनः प्रत्युवाच—'द्विजश्रेष्ठ! एवमातुरो न भव। सफलीभविष्यति ते मनोरथः। अस्ति खलु मे सम्राट्कुलेऽपि परिचयः। अथवा (सगर्वं) गुरुशिष्यसम्बन्धः। का कथान्येषां महाकुलानाम्। सा वृद्धा दासी या सद्य एवेहागतासीत् वृन्दमालाभिधा मुरादेव्याः द्वितीयं हृदयम्। इयं मुरादेवी तु मगधसम्राजो धननन्दस्य भूतपूर्वं प्रेमपात्रं किरातराजस्य कन्या। सा खलु अद्वितीयलावण्याकृष्टहृदयेन मगधाधिपेन बहोः कालात्पूर्वं परिणीता यथासमयं सम्राजः प्रथमं पुत्रं सुषुवे। स च राजपुत्रेषु ज्येष्ठतमः। सम्राजः प्रियतमाया भार्यायाः पुत्र इति युवराजो भवेत्—इति भीत्या अन्याभिः सपत्नीभिः उच्चपदाधिकृतानां राजपुरुषाणां केषाञ्चित् साहाय्येन जातमात्र एव नृशंसस्य कस्यचित् सेवकस्य माध्यमेन घोरे वन्यप्राणिभयंकरे विपिने मृत्युमुखं प्रापितः। एतन्मात्रेणासतुष्टाभिश्च ताभिः पुत्रान्तरसंभवनिवारणेच्छया सा हृत-

भाग्या वृषलीत्वेन ख्यापिता। समुत्पाद्य च तैस्तैरुपायैः सम्राजोऽवकृपां ......उपेक्षिततमेऽन्तःपुरैकदेशेऽवस्थापिता। एवं परिभूतायास्तस्याः महान् कालो व्यतीतः। परन्तु समासन्नः राजकुमारस्य सुमाल्यस्य यौवराज्याभिषेकस्तस्या एतावत्कालपर्यन्तं प्रसुप्तप्रायं परिभवदुःखाग्नि प्रतिक्षणमधिकमेवोद्दीपयति एतदेव वृन्दमालया तयागत्येह अद्य निवेदितम्। सा हि मम शिष्या। वाञ्छति च मदनुग्रहं स्वामिन्यामपि। अस्तु। यद्भावि तत्तु न केनापि अन्यथा कर्त्तुं शक्यते। तथापि भगवतस्तथागतस्योपदेशामृतवर्षणेनाभागिन्या दुःखाग्निमुपशमयितुं प्रयतिष्ये।'

एवं निःस्पृह इव राजान्तःपुरभेदान् यावच्छक्यं विज्ञायार्यचाणक्यो मुहूर्त्तमात्रं विविधाः महाकुलान्तरसंबद्धाः कथाः कृत्वा अन्ते सायं सन्ध्यावन्दननिमित्तेन स्वनिवासं प्रत्याजगाम।

तत्र चानुष्ठितनित्यकर्त्तव्यः विहितक्षुत्प्रतीकारः निराकुलेन मनसा व्यतीतदिनव्यापारान् पर्यालोचयन्, आद्य एव दिवसे स्वतः समुपस्थितां स्वप्रतिज्ञापूर्तिसाधनसामग्रीं विचिन्त्य सन्तुष्टो भाविकार्यपद्धतिं निर्धारयन्, चिन्तयामास—'अहो दैवस्यानुकूलता! प्रथम एव दिने मम स्वकार्योपयोगिनी महती साधनसम्पदधिगता। सुनिपुणं परीक्ष्यमाणे निखिलेऽपि राजकुले मुरा एवेयं मम साध्यप्राप्त्यर्थमनुकूलतमा संलक्ष्यते। स्वपुत्रनाशक्रोधदंदह्यमानमानसा परिभवदहनदग्धकोमलभावना चेयं स्वपराभवनिर्यातनार्थं मया यथोपदिश्येत तथा नूनं वर्तेत। कोपान्धा हि नारी, पादपीडिता सर्पिणीव, विधूय धर्म्याधर्म्यविवेकम्, अविचार्य कार्याकार्यं प्रतिहिंसाभावनोदग्रा, निर्घृणं निर्दयं चेष्टत इति दृष्टचरम्।

'नूनमिमां वृन्दमालामेव हस्ते कृत्य मुरया सह परिचयो विधेयः। एषा वृद्धा दासी क्रियमाणस्य मन्त्रबीजावापस्य मुख्य आधारः। स्वभावसरला स्वामिन्या दुःखदाहमवलोकयितुमसमर्था सेविकेयं मुरायाः कृते यत् किमपि कुर्यात्। अतो मम परिचयविधानं देव्या सह तत्कृते नातिदुष्करम्। नूनमयं भिक्षुः श्वस्तां बोधार्थमाह्वयेत्। तस्याश्च प्रतिगच्छन्त्याः मार्गे एव यदृच्छयेव परिचयो घनतरः सम्पादनीयः। तथा सति हि कार्याण्यग्रिमाणि अनायासेनैव भविष्यन्ति।'

'अथ योऽयं व्यापारो मेऽभीप्सितः स अस्मै भिक्षवे निवेदनीयो न वा? नैव निवेदनीयः। अयं हि स्वधर्मप्रसारैकमात्रलक्ष्योऽनेकविधशिष्यगणपरिवृतोऽधिकतरलोकख्यातिलोलुपो मंत्रमिमं प्रमादतो भिन्द्यात्।

तथा च सति जीवनसंशय एव समुद्भवेत् कार्यसंसिद्धिस्तु दूर एव। नास्ति चेतः परं विधास्यमाने कार्येऽस्य भिक्षोः सहकार्यस्यावश्यकता। वृन्दमालामाध्यमेन मुरादेव्या साकं परिचये मम सम्पन्ने तद्हस्तेनैवाहं सर्वमपि कार्यजातमग्रिमं कारयिष्यामि।'

'अपि च बलाढ्यं मगधसम्राजं धननन्दं समुच्छेद्य तत्स्थाने स्वमातृ-भूमेः अभिमानिन आर्यसंस्कृतिसंरक्षणार्थं बद्धकंकणस्य वत्सस्य चन्द्र-गुप्तस्य प्रतिष्ठापनार्थं प्रयतमानस्य मम यद्यपि वैयक्तिकाभिभवनिर्यात-नेच्छोपोद्बलिका तथापि श्रेष्ठसनातनवैदिकधर्मसंरक्षणं मगधसाम्राज्या-धीश्वरमाध्यमेन यवनानां भारतभूमेः समूलमुच्छेदनञ्च मम मूलतोऽभीप्सितम्। सनातनधर्मस्येयं रक्षणेच्छा सफलीभूता स्वभावत एव बौद्ध-धर्मप्रभावन्यूनीकरणे पर्यवस्येत्। बौद्धधर्मानुरागी चायं भिक्षुः नैतत् स्वप्नेऽपि वाञ्छेत्। अतो मन्त्रगुप्तिरेव कल्याणकारिणी। वृन्दमाला-परिचयपर्यन्तमेवानेन सह स्नेहसम्बन्धो रक्षितव्यः'।

—:*:—

## सप्तमः परिच्छेदः

अथ आर्यचाणक्यकूटनीतिपाटवकौतूहलत्वरमाणान्तःकरणेन भगवता सहस्रकरेण बलान्निवार्यमाणेव निशातिचक्राम। परिभवकोपप्रदीप्तविप्रमुखमण्डलनिभेऽल्पोदिते बालसूर्ये समाप्ताह्निकः स्वप्रतिज्ञापूर्त्येकध्येय आर्यचाणक्यो यदृच्छयेव भिक्षोर्विहारं ययौ। ददर्श च तत्र तं पत्रलेखनकर्मणि व्यग्रम्। भिक्षुस्तु कार्यव्यापृतोऽपि विप्रस्य स्वयमागमनेन संतुष्टः तं प्रणामादिना सत्कृत्यासने समुपावेशयत्। समाप्य च तत् पत्रलेखनमचिरादेव स्वशिष्यप्रमुखं समाहूय 'एतत् वृन्दमालायै निभृतं देयम्' इत्यादिशत्।

तदानीमेवार्यचाणक्यो यदृच्छयेवासनात् समुत्थाय तमुवाच—'भिक्षुवर्य! अहं ह्यतीत एव दिवसेऽत्रागतः। अपरिचितोऽस्मि युष्माकं महानगर्याः शोभया। समस्तभारतवर्षविख्यातं खलु मगधसाम्राज्यम्। तस्य राजधानी महानगरीयम् अपारैश्वर्यशालिनी अमरावतीमपि समुपहसन्ती स्यादेव। अपरिचितोऽहमेकाक्येवात्र यथेच्छं पर्यटितुं न प्रभवामि। अतो यदि न किञ्चिदत्याहितं, यदि न भवतः कार्यस्य स्वल्पोऽपि व्याघातः तर्हि अनेन भवतः शिष्यवरेण समं गत्वाहमपि नगरशोभामवलोकयितुमिच्छामि।'

सरलमतिस्तु स बौद्धयतिः सस्मितं तत्सहगमनमनुमुमुदे। सञ्जातसंतोषः आर्यचाणक्यो भिक्षुशिष्येण सह तेन नगरीं प्रस्थितो तटस्थ इव विविधैर्मिषैः राजकुलसम्बन्धिनीरेव वार्ता अकरोत्।

तेन च प्रसंगेन स शिष्यस्तमकथयत् 'विप्रवर! यद्यप्येतत् मगधसाम्राज्यं निखिलेऽपि भारतवर्षे बलाढ्यतमं तथाप्यत्रत्याभ्यन्तरिकी परिस्थितिः परस्परद्वेषसंकीर्णा सूक्ष्मदृष्टेर्निरीक्षकस्य दृक्पथमवतरत्येव। अस्याधिपः धननन्दः दुर्व्यसननिमग्नः स्वैराचारः सदाचारनियमान् उल्लंघ्यैव प्रायो वर्तते। अनुसरति च निरपवादं समीपवर्तिनां दुराचारिणां कूटराजनीतिकानामापातमनोरमाणि वचनानि। तेन प्रायः सर्वे एव प्रजाजना विरक्ताः। केचन प्रबला राजपुरुषाः धनाढ्या वणिक्श्रेष्ठाश्च

सुगूढबद्धविद्वेषा अनुकूलमवसरं प्रतिपालयन्तः राजक्रान्तावेव दृढनिश्चयाः। केवलं स्वामिभक्तस्य अथवा नन्दवंशभक्तस्य अमात्यवरेण्यस्य शासनपाटवं धननन्दस्य स्थिरतायां कारणम्। स्वयममात्यप्रमुखोऽपि अन्तःपुरमात्र-निवासिनः स्वामिनो विषये न तथा सन्तुष्टः। तथापि वंशपरम्परासेवित-स्वामिवंशसेवार्थं बद्धमिवात्मानं मन्यमानस्तं सेवते। नूनं सौभाग्यशाल्येव धननन्दः य एतादृशं शासनचतुरं स्वकर्तव्यपालनदक्षं स्वामिभक्तं पुरुषं मुख्यामात्यत्वेन लेभे। यदि हि राक्षसोऽत्र नाभविष्यत् तर्हि एतद्बलाढ्यं साम्राज्यम् इतः पूर्वमेव नामशेषमभविष्यत्। नूनं यावदयममात्यः सम्राजं सेवते तावदस्य राज्यस्य विनाशोऽशक्यप्राय एव'।

एवंप्रायं राजकुलसम्बद्धं वार्तालापं कुर्वन् स विप्रवरो भिक्षुणो-पदिश्यमानमार्गो विविधकार्यव्यग्रनरनारीजनसंकुलं राजधानीहृदय-प्रदेशं प्रविश्य गगनचुम्बिविविधप्रासादैश्वर्यविलोकनमुषितहृदय इव तत्तत्प्रमुखस्थानपरिचयमहोभाग्यतयेव प्राप्नुवन् क्रमेण सम्राजः प्रासादस्य समीपमाजगाम। प्रविश्य तु तं विविधकार्यव्यग्रराजपुरुष-संकुलं स भिक्षुस्तं जगाद—'द्विजश्रेष्ठ! भवता तावदत्रैव स्थातव्यम्। अहं कतिपयक्षणानन्तरमेव प्रत्यागमिष्यामि एतत् पत्रं दत्त्वा। अहं खलु चिरादत्र गतागते कुर्वन् राजपुरुषाणामत्रत्यानां परिचितोऽस्मि संवृतः। अनवलोकितपूर्वस्य भवतस्त्वत्र संचारस्तेषां नूनं संशयमुत्पाद-यिष्यति।'

तस्य तद्वचः श्रुत्वा विस्मित इवार्यचाणक्यः प्रत्युवाच—'अहन्तु सुष्ठुतया जानाम्येवास्मिन् पत्रे भिक्षुश्रेष्ठेन किं लिखितमिति। अद्य प्रातरेव मया सह गूढं मन्त्रयित्वा तेनैतत् लिखितम्। अपि च नाहं त्वया सह राजान्तःपुरे प्रवेष्टुमत्युत्सुकः। किमिव मम तपोवननिवासिनः प्रयोजनं तेन? परन्तु अनवलोकितपूर्वापूर्वसाम्राज्यैश्वर्यविलोकन-विस्मितमतिं कुण्ठितबुद्धिमपरिचितं पांसुलपादमेकाकिनं मां वराक-मिहानाथमिव तिष्ठन्तं दृष्ट्वा राजपुरुषा एते संजातसन्देहा वा सोपहासा वा नूनं मां दण्डयिष्यन्ति। अतोऽहं त्वया सहैव गमिष्यामि यत्र कुत्राप्यत्र' इति। तस्येदं भीतस्येव विस्मितस्येव व्याकुलम् अनुरोधातुरं भाषणं निशम्य स्मेरमुखः स भिक्षुः 'न हानिः काऽपि' इति तत्सहगमनमनुमुमुदे।

अतिक्रम्य चानेकानि कल्पनातीतवैभवविस्तारमनोहारीणि भुव-

नान्तराणीव विशालानि नानाविधकार्यंजातव्यापृतान्तःपुरिकाजनसंकुलानि राजान्तःपुरप्रासादप्रकोष्ठान्तराणि चिरपरिचिततया रक्षाधिकृताभिः सशस्त्राभिः महाप्रमाणाभिः राजसेविकाभिः कुत्राप्यप्रतिषिद्धसंचारो, विस्मितेनेव मुषितेनेव लुण्ठितेनेवार्यचाणक्येनानुपदमनुगम्यमानः प्राप संकेतितं स्थानविशेषं यत्र तदागमनं प्रतिपालयन्ती सा वृद्धा वृन्दमाला तमवलोक्य समुपजाताश्वासा भिक्षुवरेण्यसंप्रेषितं पत्रं सबहुमानं स्वीचकार। वाचयित्वा च तत्सन्देशं लघूभूतचिन्ताभरेवाब्रवीत्—'गुरोराज्ञां पालयन्ती नियतमेवाद्य सायंकाल आगच्छामि ।'

उक्त्वा चेत्थं गृहीत्वा तत् पत्रम् अन्तःपुरविभागे विलीना बभूव। स शिष्योऽपि स्वनुष्ठितगुर्वादेशः प्रतिगन्तुं मनश्चकार। तमनुगच्छन् स द्विजवरश्चिन्तयामास—'एतावत्समयपर्यन्तं सर्वथानुकूलमेव सर्वं घटितम्। सम्प्रति तु अगत्वा स्वनिवासं, मार्गमध्य एव, यत्र कुत्रापि केनचिन्मिषेण स्थित्वा, दिवसञ्च यापयित्वा, सायं समये विहारं गच्छन्ती सा वृद्धा दासी एकाकिन्येव मार्ग एव यदृच्छयेव द्रष्टव्या। बीजावापश्च शनैः शनैः प्रारम्भणीयः'।

विचार्य चैवं तेन भिक्षुशिष्येण सह मार्गमाक्रमन् दृष्टिपथ आपतितं गगनभेदिशिखरं मन्दमारुतोद्धूयमानारक्तपताकमनवतरघंटानिनादमुखरितदशदिशं मन्दिरमेकं समुद्दिश्याज्ञ इव तमपृच्छत्—'कस्या देवताया नु मन्दिरमेतद्भव्यम् ?' इति। अहिंसानुरागी स बौद्धधर्मानुयायी तु प्रश्नमिममाकर्ण्य पिधाय कर्णौ हस्ताभ्यामुद्वेगाक्रान्त इव जगाद 'शान्तं पापम्'! शान्तं पापं। एतत्तु चण्डिकायतनम्। ( सजुगुप्सं ) अत्र खलु बलीक्रियन्ते प्रतिदिनं सहस्रशो दीना निरपराधा अजा निर्दयैः निर्घृणैः पाषण्डैर्महापापिभिश्चण्डिकोपासकैः। अलं तावदेतया वार्तया। कथाप्येषां हिंसकानां पापकारिणी।'

आर्यचाणक्यस्तु नातिप्रभावित इव तस्यैतेनोद्वेगातिरेकेण कौतूहलपरवश इव तं प्रत्युवाच—'भिक्षुश्रेष्ठ! त्वमसि बौद्धधर्मानुयायी परमोपासकोऽहिंसाव्रतस्य। अतस्तवेदं भगवत्याश्चण्डिकाया उपासनायामौदासीन्यं तथा बलिदानविधौ समुद्वेगश्च स्थान एव। अहन्तु यद्यपि तथागतधर्माकृष्यमाणहृदयस्तथापि सनातनार्यधर्मानुयायी एवाद्यावधि। अतो मम भगवतीदर्शनं नातिविरुद्धम्। अस्माकं प्रदेशे च चण्डिको-

पासनस्य प्रचारः सार्वत्रिकः। अतो मार्गभ्रंशेऽत्र भगवत्याः पद्धतिविशेष-मनुसृत्य पूज्यत एतत् खलु साक्षाद् द्रष्टुमिच्छामि। (सादरं) प्रधानं पुरातनञ्चैतद्देवायतनं दृश्यते। (सानुरोधमिव) तत् स्वीकुरु ममेमा-मभ्यर्थनाम्। अत्रैव कुत्रचिद् अनुपालयन् मे प्रत्यागमनं तिष्ठ। अहमनुपदमेवात्र प्रत्यागमिष्यामि। चिरयति वा कथंचिन्मयि स्वैरं विहारं प्रतिनिवर्तस्व। अहन्तु एकाकी अपि पृष्ट्वा पृष्ट्वा जनान् दृष्टपूर्वेण मार्गेण स्वनिवासमागमिष्यामि।' 

वदन्नेव चेत्थमौत्सुक्यवशादिवाप्रतिपालयन् तस्य प्रतिवचनं स चतुरो विप्रः झटिति तन्मन्दिरं प्रविवेश। स भिक्षुस्तु वराकः तमनुसर्तुम-समर्थो बहिरेव मन्दिरस्य तिष्ठन्, 'कथं नाम चिरयति ब्राह्मणोऽयं' इति चिन्तयन्, अन्ते श्रान्तगात्रः क्लान्तचित्तो विहारमगच्छत्। आर्यचाण-क्यस्तु तस्मिन्नेव देवायतने दिवसं सकलं यापयितुं कृतनिश्चयो, भ्रमन् कक्षान्तरेषु भावुकजनकृतसंमर्देषु स्वैरं स्वैरं तदीयान्तर्वर्तितडागे कृतमध्याह्नाह्निक, आरक्तैः कमलैः सम्पूज्य भगवतीं सम्प्रार्थ्य तच्छु-भाशीरंगीकृतमहत्तमकार्यं निर्विघ्नसमाप्त्यर्थं, प्राप्तेन प्रसादेन कृतक्षुधो-पशमनः कीर्तनादिकं शृण्वन् सायं समयं प्रतिपालयन् तस्थौ।

क्रमेण चास्तंगतं दिनकरमालोक्य, कृतसायंसंध्योपासनः देवतायतने सर्वतः प्रज्वलितान् सायंदीपान्नमस्कृत्य 'अनया कालकलया वृन्दमाला सा तं वसुमतिं द्रष्टुं निर्गच्छेत्' इति तर्कयन्, ततो निर्गतः, तस्या मार्गे मार्गमूढ इवेतस्ततो बभ्राम। अचिरादेव चागच्छन्तीं तां दृष्ट्वा तत्-संमुखं त्वरया महत्या गत्वा, संजाताश्वास इव तामाशीर्भिरभिनन्द-यन्नुवाच—'भद्रे! अद्य प्रातस्त्वां वीक्ष्य विहारं प्रति निवर्तमानोऽहं महच्चण्डिकायतनमेतदवलोक्य ब्राह्मणसुलभकौतूहलाक्रान्तो भिक्षुश्रेष्ठेन प्रतिषिध्यमानोऽपि दर्शनार्थमविशम्। तत्र चातिदारुणबलिहिंसावलो-कनोद्विग्नमानसो बहिर्निर्गमनद्वारमन्वेषयन्, प्रवेशजनितपापभरेणेव विमूढमतिः, मार्गपरिभ्रष्ट एतावत्कालपर्यन्तमितस्ततोऽभ्रमम्। केन-चिद्दयालुना भावुकेन देवालयात् सद्य एव बहिः प्रापितस्य विहारगामिनं मार्गं पृच्छतो मम भाग्यवशात् दृष्टिपथमागतासि। सत्यम्। अननुभूत-चरा खल्वेतादृशी मम मूढता। अथवा सुष्टु खलूच्यते—बुद्धिः कर्मानु-सारिणी इति। भद्रे! अपि नेष्यसि मामात्मना सह सुगृहीतनामधेयस्य वसुभूतेर्विहारम्? मन्ये एतावत्कालपर्यन्तमप्रत्यागतं संकटापन्नं मां

समुत्प्रेक्षमाणो दुश्चिन्तातातम्यमानहृदयः सः स्वयमेव ममान्वेषणे प्रवृत्तकल्पः स्यात् ।'

तस्यैतदाकुलाकुलं भाषणं निशम्यानुकम्पितहृदया सा वृद्धा वृन्दमाला 'नैवं भवता इतः परमस्यां महानगर्यां शठबहुलायां नितान्तमपरिचितेनावधूय सुहृत्संगतिं कौतूहलमात्रपरवशेन भ्रमितव्यम्' इत्युक्त्वा तमात्मना सह विहारं निनाय । कथयामास च सपरिहासं तं सर्वं वृतान्तं भिक्षुश्रेष्ठाय ।

एवं सम्पादिते वृन्दमालापरिचये यथेष्टां वृद्धिं प्राप्ते आर्यचाणक्य एकदा समुचितमवसरं दृष्ट्वा तां रहसि उवाच—'भद्रे ! सुनिपुणं परीक्षिताऽतुलनीया ते स्वामिभक्तिरेवाधुना मां सत्योद्घाटनाय प्रेरयति । अहन्तावत् त्वत्स्वामिन्या मुरादेव्याः सत्यमुदन्तं ज्ञातुं तद्भ्रात्रा किरातदेशाधिपेन प्रद्युम्नदेवेन गूढं प्रेषितः—इह अभ्यागत-दक्षिणाकाम-साधारण-ब्राह्मणापदेशेन वसामि । मुरादेव्या अपत्यस्यामानुषं वधं तादृशं तस्याश्च निष्पापाया अकारणं कारावासनिक्षेपं कर्णोपकर्णिकया श्रुत्वा दुःखाकुला तदीया माता स्वपुत्रं वारम्वारं स्वदुहितुः वार्तासम्पादनाय चिरात् खलु कथयामास । तस्यास्तं संततमनुरोधमवधीरयितुमसमर्थो देवोऽतिविश्वस्तं मामेकदा रहसि समाहूय आज्ञापयामास—'विप्रश्रेष्ठ ! सर्वत्राप्रतिषिद्धसंचारा खलु ब्राह्मणजातिः । अतो भवान् मगधराजधानीं गत्वा मद्भगिनीमभागिनीं केनाप्यपदेशेन निभृतं साक्षात्कृत्य, तदुदन्तमधिगम्य शीघ्रमेव प्रत्यागच्छतु' इति । तदादेशानुसारमिहागत्य निभृतं तिष्ठतो, मुरादेवीसाक्षात्कारार्थं विविधान् उपायान् पर्यालोचयतो मम दृष्टिपथे पतिता भवती, सर्वथानुकूलनियतिसंप्रेषितेव, देव्याः परमविश्वासपात्रीभूता ! नाति दुष्कर इव भाति मम त्वत्साहाय्यवशात् मुरादेव्याः साक्षात्कारः । परन्त्वेतत् सर्वं वृत्तं मया कृतानेकोपकारायापि भिक्षुश्रेष्ठाय नैव निवेदितम् । त्वयापि गोपनीयम् । अस्मिन् समये हि देवी मगधाधिपतेरुपेक्षापात्रम् । तद्यदि सपत्नीनां विदितं भवेद्यत् अहं तन्मातृकुलाद्गूढं सन्देशं गृहीत्वागतोऽस्मीति तर्हि ता इमम् उदन्तं सर्वथा विपर्यस्यन्त्यः निरपराधां तां नानाविधैर्दूषणैर्दूषयन्त्यस्तस्या महत्तरमनिष्टमापादयेयुः । अतो मम वास्तविकं कार्यं मया स्वस्वामिनीं प्राणाधिकं वाञ्छन्त्यै तुभ्यमेवैकाकिन्यै निवेदितम् । त्वयापि समयमनु-

कूलं प्रतिपालयन्त्या तस्यै रहसि निवेदनीयम्। तथा च प्रयतनीयं, यथाहं शीघ्रमेव देवीं साक्षात्कर्त्तुं प्रभवेयम्।'

वृद्धा वृन्दमाला तु वराकीं दिवानिशं शोचन्तीं स्वस्वामिनीमनुशोचन्ती तदन्तर्दह्यमानपरिभवकोपाग्नेः शमनार्थं प्रयतमाना, देवीमातृगृहात् साक्षात् समुपस्थितं कुशलसन्देशहारकं तं द्विजवर्यमुपलभ्य 'निश्चितोऽयं मम स्वामिन्या दुःखप्रशमनोपाय' इति समाश्वस्तहृदया, चिरात् खलूपनतमनुकूलदैवप्रसादं भूयो भूयो मनस्यभिनन्दयन्ती यथा तस्य गूढो देव्याः साक्षात्कारः स्यात्तथा कर्त्तुं स्वीचक्रे।

—:❀:—

# अष्टमः परिच्छेदः

एकदा च समुचितमवसरं लब्ध्वा पुटपाकप्रतीकाशपुत्रशोकक्षुभितहृदयां, भाग्यविपर्ययसंक्षीणदेहलतिकामपि लोकोत्तरसौन्दर्यकमनीयमूर्त्तिं, मेघाच्छन्नामिव चन्द्रकलां निष्कारणपरित्यागकलुषितचित्तां सपत्नीर्ष्यादहनदह्यमानां, पराभूतिमिव विग्रहिणीं, विमनस्कतया शय्यायां दुग्धधवलायां लुठन्तीं स्वामिनीं समुपसृत्य रहस्यवदत्—'देवि दुर्दशानिशान्तं संसूचयन् ते भाग्यरविरुदयाचलशिखरवर्तीव संलक्ष्यते। तद् विरम अस्मादनश्रुपाताद्रोदनात्। अशस्त्रपातादात्मघातात्। अयि! मातृगृहात्तव त्वदुदन्तलाभाय त्वज्जनन्या सुगृहीतनामधेयया देव्या मायावत्या गूढं संप्रेषितो विप्रवरः कश्चित् राजधान्यामिहागत्य निभृतमनुकूलमवसरं प्रतिपालयन् मयाऽतीतेऽहनि एव दृष्टः तद् विरम्यास्मादनिराकरणीयदुर्दैवानुशोचनादात्मदाहमात्रकारिणस्तं निभृतं द्रष्टुमर्हसि। मातृगृहागताप्तजनसाक्षात्कारो नूनं महान् लाभः, महान् संतोषः। किं न संभवति? बहोः कालादनन्तरमनुकूलीभूतं ते भाग्यं श्लाघ्यतराभिः घटनाभिस्त्वामितः परमधिकाधिकमेवाभिनन्दयिष्यति। तदनुजानीहि मां तदानयनाय।'

मुरादेवी तु निशम्यैतत् सर्वथाप्रत्याशितमातृकुलकुशलसमाचारलाभसमुत्सुकापि द्विगुणीभूतापत्यशोका सवैलक्षण्यं प्रत्युवाच—'किं मेऽपहृतपुत्राया भर्तृतिरस्कृतायाः हताशाया अधन्याया मातृकुलागतबंधुजनसमागमेन? दृष्ट्वापि तं द्विजवरं मया अभागिन्या तस्मै किं निवेदनीयम्? क इव मम सन्देशो मम वृद्धां मातरं संतोषयेत्? मातृकुलीना नूनं स्वकन्यायाः पतिगृहे जायमानमुत्कर्षमाकर्ण्य कृतकृत्यतामनुभवन्ति। नापकर्षम्। तदलमस्य दूतस्य दर्शनेन'।

एवं प्रगुणीभूतशोकावेगा च यदा पुनः पुनरनुरुध्यमानापि वारंवारमनुनीयमानापि सम्मतिं न ददौ तत्साक्षात्काराय तदा हतोत्साहा सा वृद्धा सेविका विप्रवराय स्ववैफल्यं निवेदयामास। निशम्यापि तन्नातिखिन्नः स आर्यचाणक्यः 'कार्यसिद्धये कश्चित् कालविशेषातिपातोऽ-

निवार्य इव संलक्ष्यत इत्यात्मनैव संप्रधारयन् तां प्रकटत उवाच। 'भद्रे! देव्या अयं निषेधस्तावदावाभ्यां परमार्थतया न गृहीतव्यः। विपरीत-भाग्यप्रहारोन्मूलितायाः संतापजन्यः स खलु तस्याः। स्थाने एव चायं संतापस्तस्याः। का खलु स्वाभिमानिनी कामिनी सपत्नीभिरमानुष्या रीत्या हृतमनपराधं स्वार्भकमहर्निशमनुशोचन्ती सपत्नीपुत्रमनधिकारिणं यौवराज्येऽभिषिच्यमानमाकर्ण्य संतप्तहृदया न भवेत्। तस्माद् धैर्यमव-लम्ब्यावाभ्यामनुकूलतरः सन्धिः प्रतिपालनीयः। त्वया च योग्यमवसरं लब्ध्वा देवी पुनः पुनर्विज्ञापितव्या—'भवन्मातृगृहादागतो भवद्दर्शनाय च कृतदृढनिश्चयः स विप्रः इहैव नगरे निभृतं तिष्ठन् भवत्या अनुज्ञां प्रतिपालयतीति'। अहमपि देव्याः प्रतिकूलदैवप्रभावं तैस्तैरनुष्ठानैर्न्यूनी-कुर्वन् अत्रैव निभृतं स्थास्यामि'।

सा वृद्धा वृन्दमालापि तस्येममुपदेशमेवमेतदिति स्वीकृत्य तस्य निवासात् प्रतिनिवृत्ता स्वामिनीं तैस्तैरुपायैः प्रकृतिस्थां विधातुं प्रयत-माना, तस्या अनुज्ञां लब्धुमनुकूलतरमवसरं प्रतिपालयन्ती तस्थौ। एवं मुरादेवीपरिचयसम्पादनार्थं तांस्तान् उपायान् पर्यालोचयतः समये समये गुप्तचरैः संदेशहारिभिरानीतैश्चन्द्रगुप्तसुशासनवृत्तान्तैर्द्विगुणीभूतोत्साह-शक्तेः स्वप्रतिज्ञापूर्त्यनुकूलसाधनसम्पत्सम्पादनलग्नचित्तस्यार्यस्य चाणक्यस्य सपत्नीकूटकपटापहृतं स्वपुत्रकमेवानुशोचन्त्याः स्वमातृगृहा-दागतं सन्देशहारकं विप्रवरं साक्षात् कर्त्तुमप्यनिच्छन्त्याः आसन्नप्रा-ययौवराज्याभिषेकमहोत्सवप्रमुदितान्तःकरणानामन्तःपुरिकाणामामोदभरं दृष्ट्वा दृष्ट्वाधिकतरमेवासूयाग्नौ शलभायमानाया मुरादेव्याश्च व्यती-तानि कतिपयानि दिनानि।

अथैकदा सन्ततपुत्रशोकसंक्षीयमाणकोमलमातृहृदयावलोकनखिन्न इवास्तंगते भगवति सहस्रकिरणे, निरपराधनिष्ठुरसपत्नीजनविद्वेष-कालुष्येणेवान्धतमसाच्छादितासु दशदिशासु आसन्नतरनन्दवंशदाह-संसूचकैरिव प्रभाभासुरैः रत्नदीपैरुत्सार्यमाणेषु राजप्रासादकक्षान्धकारेषु, कृतस्वस्तिवाचनेषु निर्गच्छत्सु राजपुरोहितेषु, वातायने पुरुषप्रमाणे समुपविष्टा वृन्दमालयैवैकाकिन्या मन्दं मन्दं वीज्यमाना पचेलिमप्राक्तन-प्रभावप्रेरितेव, सनिःश्वासं सनिर्वेदमुवाच मुरा 'वृन्दे! निर्विण्णास्मि नितरामनेन सांसारिकानुभवेन दुःखबहुलेन। नास्ति नूनमधन्याया मम भागधेये सांसारिकसुखलेशोऽपि। यदि हि सोऽभविष्यत्, नैव मे सुलक्षणः पुत्रकोऽन्तःपुरकूटनीतिभक्ष्यीभूय पञ्चत्वमगमिष्यत्, अपि तु बलाढ्यस्यास्य

साम्राज्यस्य यौवराज्यपदे सम्प्रत्यवस्थास्यत्। कस्मिंश्चिदतीते समये सम्राजः परमप्रीतिविषयीभूताया मम इदं—स्वप्नेऽप्यनुत्प्रेक्षितपूर्वं—दुःसहोपेक्षाविषयत्वमपि व्यञ्जयत्येव मेऽगाधं भाग्यदारिद्रयम्। अनायत्ते तु भागधेये किं क्रियताम्। प्राक्तनं हि सर्वथा प्रबलं निर्बलं जीवं स्वेच्छयास्मिन् संसारे भ्रामयति। न जाने-जन्मान्तरेषु कियान् पापसञ्चयः कृतो मया यं खलु फलोन्मुखं चिरादनुभवामि। सर्वमेतत् पर्यालोच्य मया विनिश्चितम् इत ऊर्ध्वं संन्यस्तकामेन मनसा शान्तेन सम्भावितभावमाराधनीयो भगवान् चन्द्रशेखरः। सेयमाराधना यद्यस्मिन्नेव जन्मनि फलदायिनी तर्हीष्टमेव तत्। यदि न तर्ह्यपि न काचिद् हानिः। यतः प्रभृति मम पुत्रकस्तैर्नृशंसैरपहृतः नास्ति मम काचिदपीच्छा सांसारिकसुखोपभोगस्यावशिष्टा। तदित ऊर्ध्वं प्रतिदिनं सायंकालेऽन्तःपुरारामममध्यमलङ्कुर्वतो भगवत आयतनं गत्वा दीनानाथशरण्यमेव शरणीकरिष्यामि'।

वृद्धा दासी तु स्वामिन्याः शोकापनोदने संक्षीयमाणोत्साहा आकस्मिकमेतत् तन्मनोभावपरिवर्तनमवलोक्य नितरां हृष्टा, 'इयं भगवदाराधनाभिरुचिरनुदितपूर्वास्याः शोकं सन्तापमसूयाभावञ्च नियतमपनेष्यति' इति विभाव्य सोत्साहं प्रत्युवाच—'कल्याणोदर्का नूनं स्वामिन्याः प्रवृत्तिरियम्। भक्तिपूर्वकमनन्यभावञ्चाराधितो भगवान् चन्द्रमौलिः स्वभक्तमनोरथान् पूरयति इति पठितं मया इतिहासपुराणादिषु। इष्टदेवतात्मनिवेदनेन मानसिकशान्तिलाभस्तु सर्वेषामनुभवसिद्धः। अतः प्राक्तनशुभकर्मसम्पत्प्रभावप्रदर्शितमिमं प्रपथमनुसृत्य सफलीकर्त्तव्यं स्वजन्म स्वामिन्या। अहमपि प्रतिसायं स्वामिनीमनुगच्छन्ती सर्वं पूजासामग्र्यादिकं सर्वदा सन्नद्धं करिष्यामि'।

अपरेद्युरेव च प्राप्ते सायंसमये भालचन्द्राराधनामार्गसम्प्रवृत्तदेव्यभिनन्दनायेवोदिते बालचन्द्रे प्रवहत्सु शीतलेषु नृपान्तःपुरारामविकसितविविधकुसुमपरिमलवाहिषु निशामुखसमीरणेषु फेनधवलं हंसपक्षतिकोमलं कौशेयदुकूलद्वयं वसाना, सद्यःस्नाता, स्नानार्द्रमुक्तघनकेशपाशपरिचुम्ब्यमाननितंबमण्डला, गृहीतपूजापात्रया सौम्यवेषया वृन्दमालयानुगम्यमाना मुरा भगवन्तं पूजयितुं ययौ। यथाविधि सभक्तिभावं पूजयित्वा सकरुणभावञ्च प्रार्थ्य तं शान्तेन मनसा प्रत्याययौ।

एवं व्यतीतेषु कतिपयदिवसेषु शनैः शनैर्निराकुलीभवद्हृदयामीशानु-

राधनानुरञ्जयच्चित्तां च निरीक्ष्य स्वामिनीं समाश्वस्ता वृन्दमाला सुवार्तमिनामार्यचाणक्याय निवेदयामास।

स तु इमं मुरादेवीमनोभावपरिवर्तनवृत्तान्तं निशम्य नातिप्रमुदितो मनस्येवमकरोत्—'मदीयस्य प्रतिज्ञापूर्तिमार्गस्य मौलिकस्तावदाधारो मुरादेवीयम्। अपहृतपुत्रशोकसंतप्तहृदयां निष्कारणपरित्यागग्लानिकलुषितचित्तामिमां नारीं हि प्रथमतः स्वपक्षपातिनीं विधाय, तन्माध्यमेन कुमारं राजकुले प्रवेश्य तैस्तैर्गूढैरुपायैर्नन्दवंशोच्छेदं मगधसाम्राज्यसिंहासने तस्य स्थापनञ्च कर्त्तुमिच्छामि। इयन्तु दासी तस्याः कोपशमनवृत्तान्तं गृहीत्वाद्य समुपस्थिता। यदि नामेयं मुरा सत्यमेव शमपरायणा वैरनिर्यातनपरावृत्ता भवेत् तर्हि तत्साहाय्यमपि कपटाचरणे मदीप्सितं दुर्लभं भवेत्। अथवा—माता बलापहृतहतपुत्रशोकं विस्मरेत् इत्यशक्यप्रायमेव। मन्ये वैराग्यमेतत् क्षणिकं विजित्य स तस्या वैराग्निः पुनरपि द्विगुणतरप्रभावोद्रेकं ज्वलिष्यति। मयापि अत्र नेतः परमुदासितव्यम्। बीजावापात् प्रागेकदा इयं कथञ्चिदपि केनाप्यपदेशेन साक्षात्करणीयैव। संकल्पितस्य मम कार्यस्य साफल्यं वैफल्यं वा प्राथमिकावस्थायामेव बह्ववलंबते। यदि हि सामान्यनारीवेयं चञ्चलस्वभावा भवेत् तर्हि मदीयं कार्यं सम्यक् प्रारब्धमपि कदाचित् क्षणिकावेशवशीभूता विफलीकुर्यात्। यदि तु विलक्षणनारीव गम्भीरस्वभावा तर्हि हस्तगतैव मम कार्यसिद्धिः। अतोऽस्याः कार्यसिद्धेरनुसरणात् प्राक् एकवारमियं निभृतं द्रष्टव्यैव। यदि सा गूढमंत्रधारणयोग्या तर्हि मंत्रभेदः करणीयः अन्यथा स्वदुरूहप्रतिज्ञापूर्त्तयेऽन्यैव कापि पद्धतिः समाश्रयणीया'।

विचिन्त्य चैवं हृष्ट इव तुष्ट इव प्रकटमवादीत्—'भद्रे! अनेकशः कृतप्रयत्नापि त्वं नैव सफलीभूता नाम देवीसमक्षं मामुपस्थापयितुम्। अस्तु का गतिः। अतीतानि मे बहूनि दिनानि निभृतमत्र देवीदर्शनावसरं प्रतिपालयतः। अधुना तु त्वया निवेदितेन देवीहृदयपरिवर्तनवृत्तान्तेन समाश्वस्तोऽहं स्वदेशमिममेव शुभं वृत्तान्तं हरन् गन्तुमिच्छामि। तद्भगवन्तं चन्द्रशेखरं पूजयितुं देवायतने समुपस्थितामेव देवीं निभृतं साक्षात्कृत्येतो गमनात् प्राक् कृतकृत्यो भवितुमिच्छामि। तत् कथय—कस्मिन् समये देवी भगवन्तं पूजयितुं प्रायः देवालयमागच्छति। कस्मिंश्च स्थानेऽवस्थितेन मया सा निपुणमवलोकयितुं शक्या?

प्रतिश्रुतक्षुद्रकार्यपरिपालनासामर्थ्यलज्जिता सा वृद्धा दासी तु तस्य विप्रस्य स्वस्वामिभगिनीदर्शनौत्सुक्यं समवलोक्य द्विगुणीभूतादरा प्रत्युवाच—'द्विजवर्य ! त्वद्दुर्दैवसमुद्विग्ना स्वामिनी मातृसन्देशहारकमपि भवन्तं नैवानुगृह्णाति दर्शनप्रदानेन भूयो भूयः प्रार्थ्यमानापि तदर्थम्। किं क्रियताम्? भवच्चिन्तितया तु पद्धत्या तद्दर्शनं भवत्कृते सुतरां सुलभम्। प्रत्यहं सायं समय उद्गच्छति पटुपटहध्वनौ स्वामिनी भगवन्मन्दिरं प्रविशति मदनुगता। तस्याः पूजासमये द्वादश रुद्रपाठका ब्राह्मणा मयैव स्वामिन्या आज्ञामनुसृत्य स्तोत्रपाठं प्रतिदिनं भिन्ना भिन्ना देवतायतनान्तर्गृहे नियुज्यन्ते। यद्यस्ति भवतः देवीदर्शनस्यैतादृशी प्रबलेच्छा तेषामन्यतमो भूत्वा तत्रैव स्तोत्रं पठन् अद्यैव अवलोकयितुमर्हति स्वामिनीम्'।

आर्यचाणक्यश्चैतच्छ्रुत्वा सफलीभूतदेवीपरिचयप्राप्तिमनोरथमात्मानं मन्यमानो, यथेच्छदक्षिणाप्राप्तिसम्भवप्रमुदितमिवात्मानं प्रकटयन् आशीर्भिः प्रभूताभिः वृन्दमालाम् अभिनन्द्य गृहगमनाय विससर्ज। स्वयञ्च सर्वं दैनिककार्यकलापं परिसमाप्य, सायं समयं प्रतिपालयन् स्वकार्यसिद्ध्यनुकूलविविधोपायचिन्तनव्यग्रचित्तो दिनं यापयामास।

अथ मुरादेवीदर्शनसमुत्कांक्षितेन विप्रवरेण तेनापसार्यमाण इव गगनांगणात् पश्चिमाशामवलम्बमाने सूर्ये, सायंपूजातुराराधकजनापूर्यमाणशंखध्वनिपूरितदशदिशान्तरेषु विविधेषु देवतायतनेषु, अस्तंगतं भगवन्तं सहस्रकिरणं प्रोद्घोषयत्सु राजप्रासादशिखरेभ्यः पटुरवेषु पटहेषु, आर्यचाणक्यः प्रत्यग्रचर्चितभस्मभासुरविस्तीर्णललाटपट्टो, धौतधवलदुकूलद्वयं वसानो, दक्षिणेन हस्तेन रुद्राक्षमालां वहन्, जपचलदधरोष्ठः, नियते समयेऽन्तः पुरारामध्यमलङ्कुर्वतः स्वच्छस्फटिकशिलाखण्डविनिर्मितस्य शिवायतनस्य प्रज्ज्वलितघृतदीपप्रभालोकितं सभामण्डपं प्रविश्य जपपाठकानामन्यतमो भूत्वाचिरादेव तत्रागच्छन्तीं सकुसुमपूजासनाथहस्तया वृन्दमालयानुगम्यमानाम् अनलङ्कृतदेहलतिकामपि सन्ततपुत्रशोकक्षीयमाणामपि भर्त्रुपेक्षापात्रतयोदासीनामपि लोकविलक्षणलावण्यशालिनीं विग्रहधारिणीं क्षीणां चन्द्रकलामिव चन्द्रचूडाराधनायागताम् असामान्याकृतिमप्रत्याख्येयविशेषां मुरादेवीं साक्षाच्चकार।

ताञ्च लोकदुर्लभतेजोऽतिरेकशालिनीमवलोक्य स्वभावतः गम्भीरप्रकृतेरपि, साक्षात्कृतविविधलोकवृत्तान्तस्यापि तस्य समुद्भवन्मनसि—

'अहोऽनुकूलता दैवस्य ! एतादृशीं हि नारीं साधनत्वेन प्रयुञ्जानस्य मम कार्यसिद्धिः सुनिश्चिता । अहो मूर्खस्य धननन्दस्य यत्किञ्चनकारिता ! तेन खल्वेतादृशी महाकुलमात्रसंभाव्योदया नारी विश्वस्यापवादे ईर्ष्याकुलितक्षुद्रसपत्नीजनोत्थापिते विवेकशून्येन निर्विचारं परित्यक्ता ! वत्सश्चन्द्रगुप्तः शोभनाकृतिः विनयान्वितः सुलक्षणः स्वाभिमानी बुद्धिमांश्चेति नात्र ममेतः परं स्वल्पमप्याश्चर्यम् । एतादृश्या हि पुत्रः कथमिवान्यथा भवितुमर्हति ? मन्ये चिरादुपचीयमानस्य तद्दुर्दैवस्यैवायं प्रभावो यत् स धननन्द एतादृश्या असाधारणीं प्रीतिमनुभूयापि क्षुद्रान्तःपुरकूटनीतेर्भक्ष्यीभूयेमां तथा परित्यक्तवान् । एतदस्या क्षीणमपि करुणगम्भीरमपि क्लान्तप्रभमपि वदनं सुनिपुणं परीक्षितं स्फुटं व्यञ्जयत्यस्याः निर्धूमम् अन्तर्ज्वलनमनभ्रपातमविच्छिन्नक्रन्दनमकुठारघातं हृदयविदारणम् । एतदस्या भगवत्प्रार्थनानिमीलितनयनकमलाया उत्तुङ्गं ललाटफलकं संसूचयति-स्वाभिमानधनं स्वभावम् । एतादृश्यश्च नार्यः स्वपुत्रघातसदृशं परिभवं विस्मरन्तीति लोकशास्त्रविरुद्धमेतत् । नूनमियमस्या वैराग्यवृत्तिः परिभवनिर्यातनानुकूलां क्षीणक्षीणामपि संधिकलामासाद्य पुनः प्रज्वलितेन प्रचण्डेनेर्ष्याग्निना दग्धा नितरां विलीयेत । एतादृशी अपरिमेयगांभीर्याभिमानधना स्वभाववृत्तिः पुरुषेष्वपि तावत् कतिपयेष्वेव संलक्ष्यते । किं पुनश्चंचलचित्तास्वबलासु ? अतो नास्ति खल्वत्र बीजावापिकार्यवैफल्याशंका स्वल्पापि ।'

विचिन्त्य चैवं तटस्थ इव स्तोत्रपाठव्यग्र इवानुकूलमवसरं प्रतीक्षमाणोऽवतस्थे । यदा च सा सकरुणभावमाराध्य भगवन्तं चन्द्रशेखरं ततो गन्तुं प्रातिष्ठत शंखध्वनिगम्भीरया वाण्या जगाद 'देवि ! भक्तजनवत्सलोऽयं भगवान् चिरसंकल्पितान् तव मनोरथान् अचिरादेव सफलीकरिष्यति । विनाशं यास्यन्ति तेऽरयः' ।

मुरा देवी तु अकस्मात् कर्णगोचरीभूतां धीरगम्भीरां तेजस्विनो ब्राह्मणस्य तां निगूढमनोरथसंस्पर्शिनीं समाश्वासयित्रीं भविष्यवाणीं निशम्य चकिता किञ्चित्प्रत्यावृत्ता स्वसमीप एव तिष्ठन्तं ब्राह्मतेजोभासुरं गौरवर्णं महाप्रमाणकायं प्रदीप्तलोचनं विप्रवरमवलोक्य भक्त्या प्रणनाम । ययौ चान्तःपुरम् ।

अपरेद्युश्च स्वैरमिवापृच्छत् किञ्चित् कार्यव्यापृतां वृन्दमालां— 'अतीव तेजस्वी खल्वासीत् स विप्रवरो येनाहमतीते सायं समये भगवत्-

पूजनात् प्रतिनिर्वतमाना शुभाभिराशीर्भिस्तथानुगृहीता। तत्कल्पं तेजो भगवदनुगृहीतानामेव सम्भवति। अपि जानासि तं?'

सापि चतुरा योग्यमिममवसरं प्राप्य प्रहृष्टा प्रत्युवाच—'स्वामिनि! स एव विप्रदूतो यस्तव मातृगृहात् कुशलजिज्ञासयात्रागतः। मन्मुखेन तव दर्शनं भूयो भूयो विनयपूर्वकं प्रार्थितवान्। प्रनष्टाशश्च सः अचिरात् किरातराजधानीं प्रतिजिगमिषुर्माम् अतीतेऽह्नि त्वद्दर्शनानुग्रहार्थं स्तोत्रपाठार्थं नियुक्तवती। तत्र च (सकौतुकं) त्वां साक्षात्कृत्य स्वामिभक्तिभावनोद्वेलितः स्नेहगद्गदं तथाशीर्वचनानि ददौ।

मुरा तु आदित एवादृष्टपूर्वब्राह्मतेजसा प्रभाविता स्वमनोरथानुकूलाशीर्वचनश्रवणाश्वस्तहृदया तं विप्रवरं साक्षात् मातृगृहात् कुशलजिज्ञासयागतं दूतं विज्ञाय 'किमिति मया शोकविमूढया प्रागेवेतः स दर्शनादिना न संभावित'—इत्यात्मानमुपालभमाना वृन्दमालामुवाच—'ब्राह्मः प्रभाव इव मूर्तिमान् स विद्वान् विप्रः सर्वानपि संमानान् निःसंशयमर्हति। मद्विरहकातरया वृद्धया जनन्या ममोदन्तं ज्ञातुं प्रेषित इति चाधिकतरमेव सम्मानार्हः। मया तु वारंवारमनुनीयमानयापि स्वदुर्भाग्यशोचनविमूढधिया नैतावत्कालपर्यन्तं सत्कृतः। इमाञ्च त्रुटिम् अविलम्बमेव दूरीकर्त्तुं समुत्सुकं मम मानसम्। तत् श्व एव सायं पूजनात् प्रतिनिवर्तमाना तं विप्रवरं पूजागृहेऽस्मिन् द्रक्ष्यामि। अतस्त्वं ससम्मानमिहाहूय तं सुस्थितं कुरु'।

वृद्धा वृन्दमाला तु स्वामिन्यास्तामाज्ञां शिरसा स्वीकृत्य 'मातृकुलकुशलवृत्तान्तलाभो नूनं अधिकतराश्वासप्रद एव स्यात्'—इति हृष्टा आर्यचाणक्यस्य निवासं गत्वा तस्मै तां सुवार्तां निवेदयामास। प्रार्थयामास च तं यथासमयमागन्तुम्।

आर्यचाणक्योऽपि परमनोभावज्ञानविचक्षणः प्रागेवानुमिते निमंत्रणे नात्युत्सुक इव तदत्यन्तमभीष्टं निमन्त्रणं स्वीचकार। विसर्जयामास च तां वृद्धां दासीं सभाजयित्वाशीर्वचनैः।

—:❀:—

## नवमः परिच्छेदः

अथ अपरेद्युः अस्ताचलशिखरचुंबिनि भगवति सहस्रकिरणे आरक्तकरसंस्पृष्टेषु सौवर्णद्रवानुलिप्तेष्विवाभ्रंकषेषु प्रासादशिखरेषु उच्चरत्पूजाजयघोषमुखरितेषु कोणाभिहतध्वनत्पटुपटहझल्लरीध्वनिलहरीनिनादितदिगन्तेषु सद्योर्भूषितेष्टदेवताविग्रहदर्शनलाभोत्सुकभावुकजनपर्याकुलेषु देवतायतनेषु आर्यचाणक्यः सायंसन्ध्यादिकं नित्यकर्मानुष्ठाय शनैः शनैः नृपप्रासादं प्रस्थितः मार्गेऽङ्गीकृतकार्यसंसिद्धिसूचकानि तानि तानि शुभचिह्नानि पश्यन् अव्यग्रचित्तः क्रमेणान्तःपुरमहाद्वारं प्रापत्।

ब्राह्मतेजःप्रभावितैः रक्षाधिकृतैः राजपुरुषैरप्रतिषिद्धप्रवेशो विशन्नेवानेकविधवाहनसंकुलं प्रथममन्तःपुराभ्यन्तरिकप्रांगणम् अक्षिलक्ष्यीचकार तत्र तदागमनं प्रतिपालयन्तीं वृन्दमालाम्।

नियते समये आगतं तं वीक्ष्य प्रहृष्टा सा वृद्धा सेविका झटिति समुपसृत्य प्रणम्य सविनयं, तं विज्ञापयामास—'विप्रवर! भगवतः कृपया आदित एव न्यूनीभूतशोकावेगा मम स्वामिनी मातृगृहादागतं भवन्तं दृष्ट्वा प्रशान्तचित्ता भवेत् इति मम दृढो विश्वासः। मातृगृहं हि नारीणां परमप्रेमास्पदम्। तद्भवानपि कृपया तन्मातृकुलकुशलवृत्तान्तं तथा वर्णयतु यथा तस्याः क्रमशः संक्षीयमाणः शोकावेगः स्वल्पोऽपि नावशिष्येत। प्रकृत्यैव परमोदारा सा भवन्तं प्रभूतया दक्षिणया सम्मानयिष्यति।'

तस्या अभ्यर्थनामिमां निशम्य स विप्रः, अवर्द्धयित्वा मुरायाः संतापं नास्ति मम प्रतिज्ञापूर्तेरल्पापि आशा इति सुष्ठु जानन्नपि, प्रकटं तस्यास्तमनुरोधं स्वीचकार। तयोपदिश्यमानमार्गश्चातिक्रम्य विविधवृत्तान्ताननेकान् प्रकोष्ठानन्तःपुरस्य पूजाशालां प्राप। संततप्रज्वलद्धूपवल्लरीसुवासितायां देदीप्यमानघृतदीपालोकभासितायामविरलगोमयलेपोपलेपननिर्मलपवित्रभूतलायां तस्याञ्च निर्मले मृगासने तं समुपवेश्य वृन्द-

माला—'आर्य ! देव्यागमनपर्यन्तं भवानत्रैव तिष्ठतु । अहं तस्यै भवदागमनं निवेदयामि—इति संप्रार्थ्य त्वरितगतिस्ततोऽन्यत्र ययौ ।

कतिपयक्षणानन्तरमेव स विप्रो भगवच्चन्द्रशेखरपूजनात् सद्यः प्रत्यागतां, वृद्धया तया सेविकयोपदिश्यमानमार्गां, धीरगम्भीरगतिमपि प्रतीयमानौत्सुक्यभावां मुरादेवीं पूजाशालायां प्रविशन्तीमवलोकयामास । अनुजग्राह च तां समुचितैराशीर्वचनैः ।

सापि कृतप्रणतिः सविनयं नातिदूरवर्तिन्यासन उपविवेश । विज्ञापयामास च मन्द्रस्वरं 'अविगणय्य महत्कष्टमतिदूरादागतेन भवता मातुः कुशलवृत्तान्तहारिणा वारंवारं दर्शनदानार्थमनुनीयमानाप्यहं स्वदुर्भाग्यानुशोचनविमूढमतिर्भवतो विज्ञप्तिमेतावत्कालपर्यन्तं न स्वीकृतवती इति लज्जिता भवन्तं विज्ञापयामि—क्षाम्यतु ममायमपराध इति । मम खलु दारुणघनशोकविमूढचित्ताया एव त्रुटिरेतादृशी संजाता । अन्यथा का खलु नारी मातृगृहादागतं बन्धुजनं द्रष्टुं नेच्छेत् ? महान् खलु कालोऽतीतो मातरं भ्रातरञ्चावलोक्य इह आगताया मम ! अपि तयोः कुशलम् ? अपि स्मरतस्तौ मामभागिनीम् ? भवांस्तु इतः प्रतिनिवृत्य विदितसर्वसत्यवृत्तान्तोऽपि तत्कथनेन मा तयोः मनःशान्तिं विलोपयतु । मम खलु हतदैवायाः........'—, वदन्त्येवेत्थञ्च दारुणं स्वदुर्दैवविपाकं स्मृत्वा प्रोद्वेलच्छोकसागरा अधोमुखी अश्रुसन्ततीरनवरतं विसर्जितुमारभत ।

चतुरश्चाणक्यस्तु बन्धुजन इव स्नेहार्द्राभ्यां नयनाभ्यां स्नपयन्निव धीरगम्भीरया च वाण्या समाश्वासयन्निव तां प्रत्युवाच—'देवि ! कुशलं खलु तव जनन्याः । सुगृहीतनामधेयस्य देवस्य च । देव्या हि निभृतमहं त्वत्कुशलजिज्ञासया संप्रेषितः अतस्त्वं मां स्वभ्रातरमेव विद्धि । भ्रातुश्चेदं सर्वप्रमुखं कर्त्तव्यं यत् स भगिन्या सुखान्यभिनन्दयेत् दुःखानि च दूरीकर्त्तुं चेष्टेत । अतस्त्वं विधूय स्त्रीस्वभावसुलभं संकोचं निःशंकं निवेदय ........किन्नु खलु तव शोककारणं यद्वशात् प्रत्यहं शुष्यन्ती त्वमसि लावण्यमात्रशेषा संवृत्ता' ।

मुरादेवी तु तस्य स्नेहसिक्तं वचः श्रुत्वा प्रगुणीभूतदुःखावेगा चिरं रुरोद । अनवरताश्रुपातसह्यशोकभरा च स्खलिताक्षरमस्फुटवर्णं कथं कथमपि आरभत कथयितुं स्वदुर्दैववृत्तान्तम्—'विप्रवर ! कथमिवाहमभागिनी वदेयं स्वदुर्भाग्यविलसितानि निर्लज्जा । जानात्येव भवान् पुत्रो

नाम मातुर्द्वितीयं हृदयम् । एभिश्च क्रूरैर्नृशंसैः सुलक्षणो निष्पापः पुत्रको मे जातमात्र एव कपटेनापहृतः निर्जने च घातितः । अहञ्च पुत्रान्तर-जननशंकितहृदयैः पापैस्तैस्तादृशसम्भावनानिराचिकीर्षया मिथ्यादूषणो-द्भावनेन स्वभर्तुः तिरस्कारविषयीकृता । यैश्च नराधमैरहमेवमीर्ष्या-मात्रवशाद्घातिता तेषां प्रबलानां स्वल्पमप्यपकर्त्तुमक्षमाहं वराकी······ एतदेव कृपणं दौर्बल्यं मामहर्निशं दहति । ( घर्घरस्वरं ) पृच्छतीव मां प्रतिनिशं पुत्रकस्य मे दिवंगतस्यात्मा—'अयि मातः ! यैर्नामाहमेवं निरपराध एव हतः अप्यपक्रियते तेषां किमपि भवत्या ? इति । परन्तु किं करोमि दुर्भाग्यमात्रसाहाय्या ?'

आर्यचाणक्यस्तु प्रवर्द्धयन् तदन्तर्दह्यमानं कोपानलं सान्त्वनामिषेण प्रत्युवाच—'कस्या नाम मातुः एवममानुषया रीत्या घातितेऽर्भके संतापो न भवेत् ? का नाम पतिव्रता निरपराधमेव स्वपत्युस्तिरस्कृतिविषयतां लम्भिताहोरात्रं न दह्येत परिभवाग्निना ? ममापि निःसंगस्य ब्राह्मणस्य मनसि हठादुद्भवति प्रतीकारेच्छा कुकर्म एतादृशं निशम्य ! तन्नियम्य दुर्निवार्यमपि शोकावेगं सविस्तरं कथय·······कैर्नाम पापपरायणैरीदृश-मधमं कर्मानुष्ठितम् ? कथं वा कृतम् ? किमिति वा ? कया रीत्या त्वद्वैरप्रतिशोधस्य संभावना ? इति ।'

साक्षात् स्वमातृगृहादागतस्य तेजस्विनस्तस्य विप्रस्य समाश्वासकं वचस्तन्निशम्य समुपजातविस्रम्भा मुरा सर्वमतीतं स्वदुर्दैववृत्तान्तं महता कष्टेनाकथयत् । अपृच्छच्च निष्पापस्य तदर्भकस्य तथा घातकैः पापैः सह तस्या मरणान्तं वैरं योग्यं न वेति ।

चतुरः स विप्रः श्रुतपूर्वमपि तं वृत्तान्तमश्रुतपूर्वमिव सावधानेन मनसाकर्ण्य परमविस्मयान्वित इव, अननुभूतपूर्वखेदभराक्रान्त इव, स्वगतमिव, मुरां श्रावयन्नुवाच—'अहो राजपत्नीनामीर्ष्यालुत्वं यत् सर्वथा निरपराधिनं स्तन्यपायिनं बालकं यममुखं प्रापयन्तीभिस्ताभिः परलो-कान्न भीतम् ! अहो अमात्यराक्षसस्य यत्किञ्चनकारित्वं यच्छ्रुतवतापि एतादृशं जघन्यं काण्डं राजान्तःपुरघटनासु तादृशं ताटस्थ्यमुररीकुर्वता तेन हत्याकारिणो न दण्डिताः ! अहो मगधेश्वरस्य तुच्छाशयत्वं यद्वृथा-निन्दासमुद्भूतेषु पामरजनप्रमादेषु विश्वसता तेन स्वयं प्रत्यक्षीकृतं देव्या अनन्यसाधारणं प्रेम न मनसि कृतम् ! सुनिपुणं विचार्यमाणेऽस्मिन् कपटनाटके सर्वस्यैवास्यापराधस्यान्तिममुत्तरदायित्वं धननन्दस्यैव पर्य-

वस्यति । 'आत्मा वै पुत्रनामा' इति हि श्रुतिः । अतः स्वपुत्रं घातयतः अन्यैर्वा हन्यमानं तमवधीरयतः पितुः आत्महत्यापातकमेव शास्त्रसम्मतम् । नास्ति च तत्समं पातकमन्यत् । तदवश्यमेव तस्य प्राणान्तप्रायश्चित्तेन भवितव्यम्' ।

अवदच्च तां 'देवि ! एतादृशमश्रुतपूर्वंसदृशं दुःखभारं निःशब्दं निःसहायमुद्वहन्त्या त्वया नूनं सामान्यनारीदुर्लभं चित्तगाम्भीर्यं दुःखसहिष्णुत्वञ्च प्रकटीकृतम् । सुनिपुणं खलु परीक्ष्यमाणेऽस्मिन् परिभवे प्रतीकारस्तु सुशक्य एव समुपलक्ष्यते । परन्तु सर्वस्यैतस्य पापनाटकस्य प्रधानोऽभिनेता तव पतिरेव । तस्मिंश्च त्वत्प्रज्वालिते वैरप्रतिशोधवह्नौ शलभायिते वैधव्यदुःखं कथमिव त्वया सह्यं·······एतत् शान्तेन चित्तेन विभावय । एतादृशे हि संकटसंकीर्णे प्रतिशोधमार्गेऽविचार्यं निक्षिप्तमेकमपि पदं विपत्परम्परायै पश्चात्तापसंतत्यै च भवति' ।

मुरा तु बहुवारमात्मनैव विविधान् वैरनिर्यातिनोपायान् पर्यालोचयन्त्यादित एव पतिहननमनिवार्यांगत्वेन प्रतिशोधस्यांगीकृतवत्यासीत् । अतः आर्यचाणक्यस्य, आपाततः सदिच्छया, वस्तुतस्तु तन्मानसिकप्रतिक्रियापरिचयप्राप्त्याकांक्षया,—प्रेरितमुपदेशं तत्क्षण एवावधूय, प्रत्युवाच 'विप्रवर ! एतस्मिन्नपि विषये मया सुचिरं विचार्य निश्चितः पन्थाः । यः खलु पतिः सर्वसाधारणसदसद्विवेकबुद्धिशून्यः पुत्रस्य निरपराधस्य घातं ताटस्थ्यमिषेणानुमोदते स पतिरेव न । निष्पापपुत्रभक्षकपतिदर्शनदुःखान्नूनं वैधव्यदुःखमेव सुसहम् । नार्याः पतिपरिग्रहो हि सन्तानफलक एव । यदि नाम तस्य फलस्य भक्षकः पतिरेव तदा किं तेन जीवितेन ? अयं मे पतिर्नूनं बिडालवत् सन्तानभक्षकः शत्रुरेव परमार्थतः न पतिः । शत्रोश्च शासनं सर्वाणि शास्त्राणि अनुमोदन्ते । किञ्च स्तन्यपायिनं मम पुत्रकं जीवग्राहं गृहीत्वा तथा घातयता, मां च पुत्रशोकदह्यमानां निरपराधां कारागारतुल्येऽन्तःपुरैकदेशे निक्षिप्य चिरमुपेक्षमाणेन मगधेश्वरेण तेनाहमधुनापि विधवाकल्पा कृतैव । तद्घोरमिदं वैरं निर्यातयन्ती वस्तुत एव विधवा किमिति न भवेयम् । अस्तु नाम मम पतिहत्याकृतं घोरं नारकीयं दुःखम् । सह्यतरमेव तन्नूनं भविष्यति एतस्मादप्रतिकृतात् पुत्रहननसन्तापात्' ।

ततस्या दृढकठोरनिश्चयद्योतकं प्रत्युत्तरं निशम्य समुपजातविश्वासोऽपि स द्विजवरः पुनरपि तन्निश्चयदार्ढ्यं परीक्षितुं प्रकटं जगाद

'देवि ! तर्कसंगत इव प्रतिभाति तव विचारः। परन्तु प्रतिशोधभावनोद्दीपितया त्वया नैतद्विचारितम् — एतादृशेनोभयलोकविरुद्धेन वैरनिर्यातनेन कस्तव लाभः। यदि नाम ते पुत्रकोऽस्मिन् धरातले यत्र कुत्राप्यजीविष्यत्तर्हि दारुणोऽयं तव वैरिशासनप्रयासोयुक्तोऽभविष्यत्। परन्तु तस्यास्तित्वे एव संदिग्धे, नूनमयं निष्प्रयोजनक इव विचारपथेऽवतरन् — न्यूनीभूते आवेशे, मर्मदाहके दारुणे पश्चात्ताप एव पर्यवस्येत् — इति महती सम्भावना।'

अविरतवचस्येव तस्मिन् प्रत्युवाच दह्यमानलोचना मुरा—'नास्त्येव मम कोऽपि भाग्यहीनाया लाभः।.....ऋतेऽहर्निशं प्रज्वलतः शोकाग्नेः शमनात्। अपरञ्च यद्यपि वत्सस्य मम पापैरपहृतस्य बहवः संवत्सरा अतीताः तथापि न क्षणमात्रमपि मुञ्चति दुर्बलं मम मातृहृदयं दुर्दमनीयामाशां यन्मे पुत्रको दीनानाथशरण्येन तेन परमेश्वरेण तस्यामापदि संरक्षितो विस्तीर्णेऽस्मिन् धरातले कुत्रापि वर्द्धत एवेति। ( सोत्कण्ठं ) यदि नामाहं तस्य स्थितिं ज्ञास्यामि तर्हि प्राणविनिमयेनापि तं मगधसाम्राज्याधीश्वरपदे प्रतिष्ठापयितुं प्रयतिष्ये। कुतो ह्यस्मात् प्रशस्यतरो वैरनिर्यातनप्रकारः ?'

पुरुषेष्वपि दुर्लभं तन्निश्चयदार्ढ्यं परिभवासहिष्णुत्वञ्चैकस्यां ललनायामवलोक्य विस्मितश्चाणक्यस्त्वेवं मनस्यकरोत् —'अहो विचित्रचरित्रत्वं नारीणाम्! राजप्रासादनिवासलालिता सुकोमलेयं ललना क्व; क्व चेदं वज्रकठोरहृदयत्वम्!.... अहो पुत्रवात्सल्यं नारीणाम्! सत्यमेवैताः पत्युरपेक्षया पुत्रमेवाधिकतरं वाञ्छन्ति। कथमिवान्यथा पुत्रहननिर्यातननिश्चयोदग्रेयं पतिमपि हन्तुमिच्छेत् ? अहो मातृहृदयस्य दुर्दमनीयाशावादिता यद्वशान्निश्चितप्रायमरणस्यापि स्वापत्यस्य जीवन इयमद्यापि दृढविश्वासा! अस्तु तावत्।.... स्वकार्यसाधनदृष्ट्या विचारे क्रियमाणे प्रतिभाति — इयं वैरनिर्यातनेच्छयैव केवलया स्वपत्युः हनने न तथा बद्धपरिकरा भविष्यति यथा जीवितस्य स्वपुत्रस्य राज्याभिषेचनकांक्षया। अतोऽस्याः हृदय आदित एव बद्धमूला पुत्रपुनर्लभाशा तैस्तैरनुकूलैस्तर्कैस्तथोदाहरणैः पल्लविता कार्या येन सा यथासमयं दार्ढ्यम्, अपेक्षितमवलम्बेत—' इति।

सम्प्रधार्य चैवं—गहनमननोत्थित इव दीर्घं निःश्वस्य स पुनरब्रवीत्—'तर्ककर्कशयाऽपि बुद्ध्या निपुणं परीक्षितस्तव विचारप्रवाहो

युक्त इव प्रतिभाति। तमनुसृत्य वर्तमाना च त्वं सर्वविधसाहाय्यार्थं मामवलंबितुमर्हसि।···ममापि तटस्थस्यान्तरात्मा कथयति तव कुमारः कुमारसदृशः घातकपुरुषैर्नैव घातित इति। अनेकशो ह्यस्माभिरितिहास-पुराणादिषु पठितं लोकव्यवहारेषु च प्रत्यक्षीकृतं यद् अनाथनाथेन परमेश्वरेण ते ते राजपुत्रा घातकहस्तपञ्जरेभ्यस्तैस्तैर्मिषैर्विमोचिताः !'

'तव पुत्रकस्यापि विषये····आशा····एतादृशी····दुराशेति नैव भणितुं शक्यते।··· तवापि पुत्रकः, समुपजातदयैर्घातकैः पुरुषैर्वने जीवित एव परित्यक्तः। केनापि दैवसंप्रेषितेनेव तमेव मार्गमनुसरता पथिकेनाव-लोकितः सुतनिर्विशेषं पालितश्च इयता कालेन विनयी स्वाभिमानी बलसम्पन्नः विकसत्तारुण्यसम्पत् सुन्दरश्च कदाचित् सम्पन्नः स्यात्। तदनुकूलीभूतेन दैवेनैव कदाचिदियं वैरनिर्यातनेच्छा तवान्तःकरणे एवं दुर्दमनीयज्वालं प्रोद्दीपिता स्यात्। अस्तु तावत् महान् खलु कालः अतीतः। अचिरादेव राजप्रासादबहिर्निर्गमनमार्गाः निशारक्षकैः राज-पुरुषैः प्रतिरुद्धा भविष्यन्ति।·· ततश्च मम इतो गमनं संशयकरं भवेत्। गच्छाम्यहमधुना। मन्ये श्वः शुभवेलायां · अनस्तमिते भगवति भास्वति तव हस्तं सुनिपुणं निरीक्ष्य 'जीवति न वा तव पुत्रकः' 'भविष्यन्ति न वा पूर्णास्ते मनोरथाः'—इत्यादि सर्वं हस्तसामुद्रिक-शास्त्रज्ञदृष्ट्या समवलोक्य सविस्तरं कथयिष्यामि'।

समाश्वास्य चेत्थं तां, विचारमग्नया विलीनशान्तभावया निःशब्दं व्याकुलयानिच्छापूर्वकं विसर्जितः स विप्रः तां पुनर्द्रष्टुमङ्गीकृत्य पूजा-पाठान्निवृत्य स्वगृहं निवर्तमानं दक्षिणाकामं साधारणं ब्राह्मणमिवात्मानं प्रकटयन्··देवतायतनं स्वायतनं जगाम।

—:❀:—

## दशमः परिच्छेदः

अपनीतक्षुधस्य शयननिपतितस्य व्यतीतदिनघटनाक्रमं पर्यालोचयतो भाविकार्यव्यूहञ्च चिन्तयतस्तस्योदभून्मनसि·······'अहो आनुकूल्यं विधेः !·····सिद्धकल्प एव भाति मे मनोरथः ! श्वस्तावत् प्रथमं सामुद्रिकशास्त्रमवलम्ब्य स्वपुत्रजीवनविषये सा वीतसन्देहा कार्या। यदि चैतावता न संतुष्टा·····तर्हि वत्सस्य प्रतिकृतिस्तस्यै प्रदर्शनीया। ·····तावतापि सन्देहे तस्या अनपगते तन्मणिबन्धनं दर्शयित्वा सा समाश्वस्तहृदया कार्या। 'जीवति मम पुत्रकः' इति हि सञ्जाते निश्चये सा नारी तं मगधसाम्राज्याधीश्वरपदे द्रष्टुं व्याकुला······तन्मार्गप्रतिरोधकं साक्षात् स्वभर्तारमपि·····कालसर्पिणीव क्रुद्धा हन्तुमङ्गीकरिष्यति। तथा च सति········तन्माध्यमेन मे प्रतिज्ञायाः पूर्तिः सुतरां शक्या'।

इत्थं विचारधारायां प्रवहत एव तस्य प्रभातमासीत्।

शान्तदान्तस्वभावस्यापि स्वीकृतमहत्तमकार्यसिद्धयर्थं विविधान् निर्दयान् कपटोपायान् प्रयुञ्जानस्य तस्य विप्रवरस्य राजनीतिपाटवं साक्षात्कर्त्तुं समयात् प्रागिवोदयाचलमारूढं भगवन्तं दिनकरं प्रणिपत्य, स्वकार्यसिद्धये साहाय्यदानार्थञ्च संप्रार्थ्य परिसमापितप्रातःसंध्योपासनः···कृतक्षुधोपशमनः···देवतायतनारामे शनैः शनैरितस्ततः पर्यटन्······स विप्रः निर्धारितसमयात् पूर्वमेवागतां वृद्धां वृन्दमालामवलोक्य सत्यमेव विस्मितः·······पप्रच्छ 'भद्रे ! अद्यापि तृतीयः प्रहरो नारब्धः·······तत् त्वं किमिति आगता ?·······किमिति चोत्सुकोत्सुकेव लक्ष्यसे ?·······अपि कुशलं तव स्वामिन्याः ?'

सा तु किञ्चिदारक्तोच्छ्वसितनयना व्यग्रचित्तेव परिलक्ष्यमाणा तमभिवंद्य सविनयं प्रत्यवदत्—'विप्रवर !·······किं कथयामि !······· अतीताया निशायाः प्रथमस्य प्रहरस्यान्ते भवतीत आगते·····स्वामिनी मम······अनिच्छन्त्यपि मदनुरोधशतेनान्यमनस्केव कथमपि क्षुधोपशमनं

विधाय, न जाने किमपि किमपि विचिन्तयन्ती, शयने विलुण्ठन्ती ····समग्रायामपि निशायां क्षणमपि निद्रासुखं नालभत। कदाचित् स्मयमानवदनकमलां, कदाचित् अविरलाश्रुधारासिच्यमानम्लानमुखारविन्दां कदाचित् स्वगतमेवास्फुटाक्षरं किमपि जल्पन्तीं·······तां·······सततमुपवीजयन्ती वारंवारमपृच्छं तादृशास्वस्थावस्थाया कारणम्। परन्तु प्रत्युत्तरं न प्राप्नुवम्। मन्ये अतीते सायंकाले·······पूजाशालायां·······भवता सह यस्तस्या रहसि वार्तालापोऽभवत्·······स एव तस्यास्तादृशीमवस्थामजीजनत्। संततजागरणारक्तनयनकमला चाद्य प्रातरेवोत्थाय ·······तथैवान्यमनस्कतया कथञ्चित् परिसमाप्य देहकार्यं यथा कथञ्चित् स्वल्पं नाम भुक्त्वा·······मामाहूय एकान्तेऽवदत् – 'वृन्दमाले! यद्यपि मज्जनन्या संप्रेषितेन तेन विप्रवरेण स्वीकृत्य ममाधन्याया अनुरोधमद्यापराह्णसमये पुनरपि पूजाशालायामागमनं स्वीकृतं·······तथापि पर्युत्सुकं मम चित्तं किमपि विपरीतमेव तर्कयति।·······चिन्तयति कदाचित्·······स निःसंगो विप्रवरो विपत्सागरनिमग्नाया मम विषये सहसा विरक्तः अनवलोक्यैव माम् इतः स्वगृहं प्रतिनिवर्तेत।·······तथा तु सति ·· ····तस्य पुनर्दर्शनमशक्यप्रायमेव भविष्यति। भविष्यति च मरणैकशरणेयमभागिनी। अमृततुल्येन तस्य वचनेन किञ्चित् पल्लविता मम आशालता·······तस्मिन् आत्यन्तिकमदर्शनं गते····कथमिव धारयिष्यति स्वात्मानं निःसहाया?·······अतस्त्वमस्मिन्नेव समये तस्य निवासं गच्छ। सविनयं प्रार्थय च तमिहागमनाय'—इति स्वामिन्याश्चेमामाज्ञां शिरसि कृत्वागतास्मि भवत्सन्निधौ। तत् स्वीकरोतु भवान् तदनुरोधम्'।

आर्यचाणक्यस्तु मुराया एतादृशीं पर्याकुलामवस्थां निशम्य नितान्तं संतुष्टोऽपि स्वाकारं गोपयन्, तटस्थ इव, समये देवीदर्शनमंगीचकार।

यथापूर्वञ्च पश्चिमाशावलंबिदिनकरकरप्रकाशिताभ्यन्तरप्रदेशायां पूजाशालायां देव्या आगमनं प्रतिपालयामास।

सापि अचिरादेव आरक्तनयनकमलव्यज्यमानक्षुभितमनोभावामण्डितरमणीया वृन्दमालयैव केवलयाऽनुगम्यमाना तत्राजगाम। प्रणिपत्य च तं मृगचर्मण्यासीनं, तदाशीर्वचनानि विनयावनतेन मस्तकेन स्वीकृत्य, तेनानुज्ञाता, नातिदूरवर्ति आसनमेकं स्वीचकार। पाल-

यन्ती च तस्याज्ञां तदग्र आरक्तकान्ति कमनीयशोभं प्रस्रवत्स्वेदार्द्रं किञ्चित् वेपमानं-जलक्लिन्नं तरंगचञ्चलं कमलमिव पूर्णविकसितं-हस्तं प्रसारयामास।

तञ्च सूक्ष्मतयावलोकयन् आर्यचाणक्यः पतिसुखस्यापत्यसुखस्य च दौर्लभ्यमात्यन्तिकं तीव्रतया व्यञ्जयन्तीभिः हस्तरेखाभिर्निर्दलिताशालेशोऽपि, प्रकटतोऽनवलोकितपूर्वभाग्यरेखावलोकनाश्चर्याक्रान्त इव विस्मयभावं सकौतुकं स्वानने प्रकटयन् गहनरेखाध्ययनव्यापृतमनस्क इव चिरं तस्थौ। तस्याश्च तां मुद्रामवलोक्यौत्सुक्यकातरया तया वारं वारं फलकथनाय प्रार्थितश्चिरादिवाब्रवीत्।

'देवि! तैस्तैः कार्यविशेषैर्देशविदेशेषु पर्यटता मया खल्वेतावत्कालपर्य्यन्तमसंख्या हस्ता अधीताः।·······परन्तु एतादृशभाग्यरेखोज्ज्वलन्तु प्रथममेव जीवनेऽहमवलोकयामि हस्तम्। इदानींतनीं तव विपन्नां दयनोयामवस्थां जानन् कः खलु विश्वसेत् यत् त्वमचिरादेव भाग्यशिखरमधिरूढा भविष्यसि इति?······कः खलु विश्वसेत् यत्तव पुत्रः निखिलजगतीतलविख्यातस्यास्य साम्राज्यस्याधीश्वरो भवितेति?····परन्तु एतदेव तव हस्तो विस्पष्टं कथयति। तव पुत्रः एक एव। स च दीर्घायुः। महतः साम्राज्यस्य शासकश्च।·······यदि हि बलादपहृतस्ते पुत्रकः घातकैर्घातितो भवेत् तर्हि तव हस्तरेखैव एषा मिथ्यावादिनी भवेत्। न चैतत् कदापि शक्यम्। (सहसा) देवि दृढं विश्वसिहि ब्राह्मणवचनेऽस्मिन् न केवलं तव पुत्रः जीवति परन्तु·· एतावता कालेन सामर्थ्यशाली शस्त्रविद्याविशारद आसन्नवर्तिनं स्वभाग्योदय प्रतीक्षते।···सर्वथानुकूलास्तव हस्तरेखा अवलोक्य समुपजातविश्वासोऽहमधुनास्मिन् विषये बलवत्तरं प्रमाणमुपस्थापयामि।···विद्यापीठे मदीयेऽत्याचारिभिर्यवनैर्विध्वंसिते किरातराजधानीं गच्छन्नहं मार्गपतितं मुनेः कस्यचिदाश्रमं मार्गखेदान् अपनिनीषुरगमम्। तत्र चाश्रमवासिषु कतिपयबालब्रह्मचारिष्वेकं लोकविलक्षणसुलक्षणमसाधारणकान्त्यनुमीयमानमहाकुलोद्भवं कमपि क्षत्रियपोतमवलोक्य, 'कस्य नु भाग्यशालिनः पुत्रोऽयं' इति स्वैरमपृच्छम्। विलक्षणञ्च तस्योपलब्धिवृत्तान्तं तस्माच्छ्रुत्वाधिकतरसंजातकौतूहलोऽहं तद्गुणगणविमोहितस्तस्य यवीयसीं प्रतिकृतिमालिख्य स्वसमीपेऽस्थापयम्।·····अतीतायां सायंसन्ध्यायां पूजाशालायामस्यां प्रविशन्तीं भवन्तीमवलोक्याकस्मात् स सुलक्षणः कुमारः स्मृतिमारुरोह। निश्चेतु-

मशक्नुवानस्तु तदा किमपि नावदम् । स्ववासं गत्वोभयोर्युवयोः सादृश्यमात्मनैव विनिश्चित्य विलक्षणतर्कजालव्यग्रचित्तो निद्रां क्षणिकामपि न लेभे । ···प्रायो भाग्यशालिनः पुरुषा मातृवदाकृतिनो भवन्तीति सामुद्रिका मन्यन्ते । ( सहसा )···अथवा किं विस्तरेण ? ···सा तस्य प्रतिकृतिरिहैवानीता मयाद्य भवत्या एव साक्षादवलोकनार्थम् । तत् पश्यतु भवत्येव—भवदाकृतिविशेषेण सादृश्यमप्रत्याख्येयमियं भजते न वेति ।'

उक्त्वा चेत्थं ···'अतीतायामेव निशायां भूर्जपत्र एकस्मिन्नालिखिताम् उत्तरीयवस्त्राभ्यन्तरे सुगोपितां कुमारचन्द्रगुप्तप्रतिकृतिं यवीयसीं तस्य हस्ते ददौ ।

मुरा देवी तु वराकी···आदित एव प्रवृद्धाशा हस्ते स्थापितां तां रमणीयां प्रतिकृतिं निध्यायन्ती आश्चर्यातिरेकविस्फारिताभ्यां निर्निमेषाभ्यां हर्षोत्फुल्लाभ्यां नयनाभ्यामापिबन्तीव तद्गतं कुमारं स्वप्रतिबिम्बमिव कुमारवेषधारिणं चित्रलिखितेव··· लुण्ठितेव ···मुषितेव··· मुग्धेव··· चिरं तस्थौ ।

तस्यास्तामवस्थां निरीक्ष्य संजातसंतोषोऽपि आर्यचाणक्यस्तस्यास्तं विश्वासं दृढतरीकर्त्तुमवोचत् 'देवि ! विशालेऽस्मिन् जगतीतले प्रतिक्षणमसंख्या मानवा उत्पद्यन्ते । ······तेषु कदाचित् कस्यचित् केनचित् कथंचित् आकृतिसादृश्यं काकतालीयन्यायेन संभवत्येवेत्याशंका समीचीना एव । परन्तु तस्या अपि समूलं निवारकमपरमपि प्रमाणं मया सौभाग्यवशात्ते पुत्रस्य तस्मिन्नेवाश्रमपदे तस्मादेव मुनिवरादुपलब्धम् ।·····विलक्षणं हि तस्य क्षत्रियकुमारस्य प्राप्तिवृत्तान्तं श्रावयता तेन तदुपलब्धिसमये तत्रैवाधिगतमेतन्मणिबन्धनं मह्यं प्रदर्शितम् ।·······मयापि कौतूहलवशात्तदनुज्ञया—'कदाचिदेतदेव कुमारजन्मरहस्यभेदकं भवेत्'—इति विचिन्त्य स्वसमीपेऽवस्थापितम् । अतीतायाञ्च रात्रौ युवयोः सादृश्यं पर्यालोचयतानवरतम् अवलोकयता च मंददीपप्रकाशे मणिबंधनमेतत्····अकस्मादेव साक्षात्कृतानि एतानि कानिचित्······अस्पष्टानि·····अक्षराणि' ।

उक्त्वा चेत्थं स विविधरत्नभासुरं, मूर्त्तिमच्चन्द्रगुप्तस्य सौभाग्यमिव, मुराशोकान्धकारापनयनपटु विस्फुरत्तेजोमण्डलालोकितपूजाशालाभ्य-

न्तरं तत् सौवर्णं मणिबन्धनं तस्यै दर्शयामास, कथयामास च तदुपलब्धिवृत्तान्तम्।

निशम्य तं निरीक्ष्य च तन्मणिबन्धनं, समुद्वेलातीतस्मृतिः प्रवहदश्रुधारा क्लिन्नवदनकमला सगद्गदं कथमपि प्रत्युवाच सा मुरा··· 'विप्रवर! न भवान् मम जनन्याः कुशलसन्देशहरः विद्वान् द्विजः। अपि तु संजातानुकम्पो भक्तवत्सलः साक्षात् भगवान् चन्द्रशेखर एवानाथाया विपन्नाया मम मनोरथानां पूरणाय गृहीतमानवस्वरूपः। अन्यथा कुत्राहं मन्दभागिनी कुत्र चैतावद्भागधेयम्?···अहो! सर्वमिदं मे प्रत्यक्षमनुभूयमानमपि कल्पनाजालमात्रप्रसूतमिव प्रतिभाति। विप्रवर! इत्थं हि मामभागिनीमुपकुर्वतो भवतः कथमिवानृणीभविष्यामि?···एतेन हि मणिबन्धेन नितरामुत्सारितं मे मनसः सन्देहतमःपटलम्। ···एतद्धि जातमात्रस्यैव मम वत्सस्य यवीयसि हस्तेऽनयैव वृन्दमालया बद्धमासीत्!···एतानि तावदस्पष्टान्यपि वाच्यान्येवावशिष्टान्यक्षराणि··· 'मुरायाः···मगधेश्वर · दास्याः···' इति। (सावेगं)···अयि वृन्दमाले! · इत एहि!···किं न प्रत्यभिजानासि त्वमेतन्मणिबन्धनम्?··· यदा···यदा···खलु···ते घातपुरुषाः पुत्रकं मे घातयितुं···मयि मादकासवजनितजडनिद्रानिमज्जितायां···निन्युः···तदाप्येतत् तस्य हस्ते निबद्धमेवासीत्। ···अहो!···सत्यमेव जीवति मम पुत्रकः! विप्रवर! कदा खल्वहं तमंकमधिरोप्य कृतार्था भविष्यामि! कदा खलु तं मगधसाम्राज्यसिंहासनाधिरूढमवलोक्य लोचनयोरेतयोः सार्थक्यमनुभविष्यामि?··· (साभिनिवेशं) ज्येष्ठः खलु स पुत्रो मगधेश्वरस्य। तस्यैव यौवराज्याभिषेकेऽधिकारः···नान्येषां सुमाल्यादीनाम्।···उद्भवन्तु नामासंख्या आपदः · इतः परम्। अहन्तु तृणीकृतप्राणा···न्याय्यमन्याय्यं यं कमपि सूक्ष्ममसूक्ष्ममुपायमनुसरन्ती···पुत्रं मम साम्राज्यसिंहासने आरोपयिष्याम्येव। अत्र च—विप्रश्रेष्ठ! भवतः साहाय्यस्यापेक्षा। इमां भगवच्चन्द्रशेखरमूर्त्ति प्रणम्य प्रमाणीकृत्य च अहं स्वीकरोमि···यदद्य प्रभृति भवत आज्ञां नातिचरिष्यामि, स्वपुत्रकल्याणार्थं भवत आदेशं सर्वथानुसरन्तो तदेकध्येयपूर्तये जीविष्यामि।'

अनवरतनिपतदानन्दाश्रुधाराधौतोज्वलमुखकमलाया मुराया भावनोल्लोलकल्लोलगद्गदं भाषणमिदं निशम्यार्यचाणक्यः·····राजकुलमर्मभेदिनीं तीक्ष्णां शक्तिमेव स्ववशंगतां विभावयन्···निभृतं प्रमुदि-

तोऽपि···'अधिकतरवार्तालापेनेदानीं मन्त्रभेदस्यैव सम्भावना' इति तर्कयन् ततोऽपसर्तुंकामः तटस्थ इव निरिच्छ इव प्रत्युवाच—'व्याकुला माता कपटापहृतं पुत्रकं स्वं पुनरप्यलभत' इत्येव मे ब्राह्मणस्य सन्तोषप्रदम् । अहो, परमेशस्य दयालुत्वं··· यत् स भवत्याः पुटपाक-प्रतीकाशस्य शोकस्य प्रशमनार्थं मामेव···उपस्थित एव योग्यतम अवसरे निमित्तीचकार । भवतु तावत् । अतिक्रामति सायंसंध्यावेला । अहमधुना गच्छामि स्वावासम् ।·······कुमारस्येयं प्रतिकृतिर्भवत्या एव सन्निधौ तिष्ठतु । द्रक्षाम्येव भवतीं समुपस्थिते समीचीनेऽवसरे । एता-वदन्तरे भवत्यापि सुनिपुणं विचार्य स्वकर्त्तव्यं निर्धारणीयम् । ममापि खलु मते कुमार एवास्य साम्राज्यस्याधिपतिर्युक्तः········एतावता कालेन शास्त्रपारंगतो विनीतः शस्त्रविद्याकुशलश्च स यथास्य विशालस्य साम्रा-ज्यस्य परिपालने परिवर्द्धने च प्रभवेत्········न तथा स्वयं धननन्दोऽपि । किं पुनर्विषयलोलुपाः सुमाल्यादयः ? परन्तु·······साक्षात् पित्रा मृत्यु-मुखे प्रदत्तं········तव पुत्रं········एतावति पदेऽभिषेक्तुं यासां निर्दयानां कूटनीतीनामनुसरणमत्यावश्यकं········अपि सन्नद्धा भवती तासां स्वीका-राय ? राजनीतौ हि प्रक्षिप्तं पदं एकमपि········न पुनः प्रत्यावर्तयितुं शक्यते ।'

उक्त्वा च चेत्थं स चतुरो विप्रः····विज्ञापयन्त्या एव किमपि सानुनयं तस्याः ततो निर्गत्य स्वावासं प्रति चचाल । ·······केनापि गूढपुरुषेणा-नुगम्यमानमिवात्मानं संभावयन्·······अशंकितमिव प्रकटतरञ्चात्मानं प्रदर्शयन् तेषु तेषु देवायतनेषु भगवन्नामसंकीर्तनादिकं शृण्वन् स्वैरं स्वावासं प्रत्याजगाम ।

अनुष्ठाय च सायंसंध्यानित्यकर्मकलापं, फलमूलादिना विहितक्षुधा-शान्तिः, देवतायतनारामे क्षीणचंद्रिकोद्भासिते मन्दं मन्दं पर्यटन् मनस्यकरोत् ।

'इयं मुरा······ तावदस्मत्पक्षपातिनी संवृत्तेत्यत्र न संशयः । वारं वारं समुत्तेजिता चेयं स्वमहत्त्वाकांक्षापरिपूर्तये स्त्रीस्वभावविपरीतमपि कार्यं कुर्यात् । एतादृश्यो हि स्त्रियः दृढं पतिपरायणाः स्वभावतः । निष्कारणमपमानितास्तु वैरनिर्यातनार्थं जीवितमपि स्वं तृणीकुर्वन्ति । अस्तु········अनुकूलीभूतायाञ्चैवं महत्तरायां राजकुलाभ्यन्तरवर्तिन्यां व्यक्तौ व्यूहरचना कार्या । तत्र प्रधानं साधनं चाराः । ते च द्रव्यबलेन लभ्याः

तदर्थं महान् धनराशिरपेक्षितः। मन्ये आश्रमस्थो निधिरत्र पर्याप्तो भविष्यति। इत ऊर्ध्वम् अस्माकं प्रधानं लक्ष्यं धननन्दः। स च राजकार्याद् अन्यराजपत्नीभ्यश्च परावृत्तचित्तः कथमपि मुरैकप्रवणो विधेयः। येन केनापि मिषेण तदन्तःपुरे प्रवेशितः स स्वभावत एव स्त्रैणसुखलोलुपो मुरया विमोहितमतिः नूनं तत्रैवाहर्निशं स्थास्यति। एतच्च मुरा मन्ये विनायासेनैव कुर्यात् ( सचिन्तं ) परन्तु सा·········प्रौढयौवनोल्लासशालिनी चिराल्लब्धपतिसुखमोहमुग्धा कदाचित् स्वयमेव·········मन्त्रभेदं कुर्यात्। ( विचार्य ) अतः सा यथा सदैवास्मत्पक्षे स्थास्यति तथावश्यं प्रयतनीयम्। अत्र च तस्याः पुत्रस्नेहभावनाया उद्दीपनमेव केवलं साधनम्। एतदर्थं हि यदि वत्सः स्वयमेव तस्याः सन्निधौ केनापि व्यपदेशेन स्थाप्यते·········तर्हि हानिः का ?·········एवं हि स्वपुत्रके सर्वदा संमुखमवस्थिते यथा सा नियतं संततञ्च प्रयतेत स्ववैरप्रतिशोधनाय न तथान्यथा कयापि रीत्या प्रोत्साहिता।—( सोत्साहं ) मुरया च स्वसौन्दर्येण वशीकृते तस्मिन् धननन्दे सर्वविधं राजकीयं कार्यजातं परिहाय तत्संनिधौ वसति अमात्यवरेण्यः स्वामिदर्शनमत्यन्तमलभमानो, मुराया एव पूर्वपीडितायाः राज्ञोऽपायमाशंकमानः, सर्वमपि चारबलं तथा बुद्धिबलं तन्निवासमभितः नियोक्ष्यति'।

'एवञ्च श्लथीभूतेऽन्यत्र तच्चारसञ्चारे वाह्यरिपूणामन्तर्वर्तिनाञ्च शत्रूणामुपजापो ममानायासेनैव सेत्स्यति'।

'कार्यानुष्ठाने खल्वाकारगुप्तिर्नितान्तमपेक्षिता। शीघ्रतापि अनातुरा। अद्यैवाहं ततो विनिर्गतः केनापि गूढपुरुषेणानुसृत इति तर्कयामि परन्तु·········मुराया वास्तविकं दृढञ्च भावमनधिगत्य कार्यस्य प्रारम्भोऽपि नीतिविरुद्धः। मन्ये सा वृद्धा दासी शीघ्रमेवेहागत्य स्वस्वामिन्या मनोऽवस्थां निवेदयिष्यति'।

चिन्तयन्नेव चेत्थं स्वावासं प्रतिनिवृत्य निद्रां ययौ।

यथापेक्षञ्च अपरेद्युरेव प्रभातसमये स स्वनिवासमागच्छन्तीं वृन्दमालां ददर्श। आगताञ्च तामाशीर्वचनैरभिनन्द्य तत्स्वामिनीकुशलमपृच्छत्।

सा तु सविनयं बद्धाञ्जलिरवोचत्—विप्रवर्य ! लब्ध्वा हि भवतः सकाशात् पुत्रोदन्तं तत्प्रतिकृतिञ्च स्वामिनी मम परित्यक्तसर्वान्यव्यापारानन्दाश्रुक्लिन्नमुखकमला, उन्मत्तेव तां प्रतिकृतिं चुम्बन्ती स्ववक्षसि च स्थापयन्ती, 'अहो मम सौभाग्यं यत्तथा निर्जने घोरे वन्यप्राणिभयंकरेऽरण्ये

निर्दयैः परित्यक्तोऽपि मम पुत्रकः पुनरपि अलंकरिष्यति ममांकम्! अहो विप्रवरस्य निःसंगस्य दयालुत्वं यत्तेन चिरकालवियुक्तयो मातापुत्रयोः समागमः साधितः। एतादृशस्य निःस्पृहस्य परोपकारशीलस्य तस्योपदेशं यदि नानुसरिष्यामि.......द्विगुणतरं तर्हि अपराधिनी भविष्यामि मम वत्सस्य!'—इत्येवमादि किमपि किमपि अनतिस्पष्टाक्षरं जल्पन्ती निशां निखिलां यापयामासानिद्रैव। प्रातरेव मामारक्तनयनकमला रहस्यादिशत्—'वृन्दमाले! यथा मम पुत्रकः नृशंसैर्वन्यश्वापदमुखे निक्षिप्तोऽपि परमेशेन दयार्द्रेण संरक्षितः....केनचिदाश्रमवासिना मुनिवरेण पालितो, विविधेषु शस्त्रेषु शास्त्रेषु च नैपुण्यं प्रापितः प्रतिदिनं वर्द्धते तथा त्वया श्रुतमेवातीतेऽहनि विप्रवरस्य मुखात्। मम तु मातुः हृदयमेतादृशं भाग्यविलासमविश्वसदिव साक्षाद्द्रष्टुमिच्छति कुमारम्। तत्सुकोमलांगस्पर्शेनैव शान्तिमेष्यति मम पुत्रविरहदाहः। एतच्च विप्रवरेणैव केवलेन कर्त्तुं शक्यम्। अतस्त्वं परित्यज्य सर्वं कार्यकलापं....... अस्मिन्नेव क्षणे तस्य निवासं गत्वा तं सबहुमानमिहानयेति।' तदनुगृह्णातु भवान् पुनरपि मम स्वामिनीं दर्शनप्रदानेन।'

आर्यचाणक्यस्तु तमिमं मुरायाः सन्देशमधिगत्य नितान्तमाश्वस्तोऽपि तटस्थमिवात्मानं प्रदर्शयन् तां वृन्दमालां स्वागमननिवेदनाय पुरतो विसर्ज्य स्वयं एकाक्येव पूजाशालां ययौ। साक्षात्कृत्य च तत्रादित एव तदागमनं प्रतिपालयन्तीं जागरणारक्तनयनोत्पलां समुत्सुकां मुरादेवीं, तया स्वमनोरथपूर्तये साश्रु अनुनीतः, निःस्पृह इव मन्द्रस्वरं प्रत्युवाच— 'देवि! मुनिवरस्य तस्याश्रमे निवसतः, तत्र च विविधाः शस्त्रविद्याः शिक्षमाणस्य तव पुत्रस्य त्वत्सन्निधौ स्थापनं नातिदुष्करम्।....... परन्तु....मन्ये तत्पूर्वमस्माभिरंगीकृतकार्यसंपादनपद्धतिस्तावत् सुनिपुणं निर्धारणीया। इदानीय त्वत्सन्निधौ संस्थापितोऽपि कुमारो यावदस्य साम्राज्यस्याधीश्वरपदे तत्स्वाभाविकाधिकारानुरूपं—न संस्थाप्यते तावत् तव मातुः.......संतोषोऽसम्भवी एव। तस्य च तत्पदप्राप्तौ असंख्याः विघ्नाः.......तत्रापि प्रमुखतमो विघ्नस्तव पतिरेव साक्षात्। न हि केवलं स तव पुत्रस्य यौवराज्याभिषेकं नानुमन्येत.......अपि तु....... तमद्यापि जीवन्तं विज्ञाय तस्मात् स्वस्य स्वपुत्रस्य सुमाल्यस्य चापायं प्राणान्तिकमाशंकमानस्तं प्राणैर्वियोजयितुं तैस्तैरुपायैश्चेष्टेत। तथा च सति महतोऽनर्थस्य सम्भावना।'.......तस्मात् स्वाभिलषितप्राप्त्यै प्रयतमानया त्वयास्य विघ्नस्य दूरीकरणार्थं स्वयं बद्धपरिकरया भवितव्यम्।

एतस्मिन् हि दूरीकृतेऽन्ये विघ्नाः स्वयमेव विलयं यास्यन्ति। धननन्दस्यापि शासनं न तथा दुष्करम्। त्वं हि केनापि मार्गेण केनापि मिषेण तं स्वान्तःपुरभागे समाहूय स्वरूपसंपदा विमोहय। त्वद्वशीभूते तु तस्मिन् उर्वरितं कार्यमहं स्वयमेव करिष्यामि। न चैतद्विमोहनमशक्यप्रायम्। स हि स्त्रैणो·······भ्रमर इव मधुलोलुपः·······कदाप्येकत्र रममाणो न तिष्ठति नित्यं नवीनां कामिनीं कांक्षति·······प्रौढतारुण्यविलासविकसितदेहलतिकायां त्वयि अभिरुचिं स कुर्यादेव। वशंगतस्तु स यथा सदैव तव सान्निध्य एव परित्यक्तान्यकार्यस्तिष्ठेत्, तथा त्वया प्रयतनीयम्। तथा सति हि तस्य शासनं सुकरम्। कुमारस्येहानेकचारसंचारसंकटेऽन्तःपुरे वास्तविकरूपेणावस्थितिरशक्यैव।·······अतो यदि स त्वत्समीपे स्थापनीयस्तर्हि स्वनामधन्यस्य किरातराजस्य पुत्रकापदेशेनैव।·······अहन्तु श्व एव कुमारस्य समीपे गत्वा·······तेन सहैवापह्नुतसत्यस्वरूपेण—कतिपयदिवसानन्तरं प्रत्यागमिष्यामि।·······एतदन्तरे त्वया स्वप्रधानलक्ष्यमभिलक्ष्य प्रयतनीयम्। अपरञ्च—अहं तावदत्र वारंवारमागतः केनापि अन्तःपुरसंचारिणा चारेण लक्षित इत्युत्प्रेक्षे। अत इतः प्रभृत्यस्माभिः नितान्तं सावधानैर्वर्तितव्यम्। व्यूहो ह्यस्माकमसमय एव लक्षितो न केवलमावयोरपि तु निरपराधस्य कुमारस्यापि जीवितेन सहान्तमात्यन्तिकमेष्यति। अतः समुद्भूतसंशयलेशनिराकरणार्थं त्वयाहमधुना त्वदन्तःपुरवर्तिनीनां परिचारिकादीनां सर्वासां समक्षं 'मम मातुर्गृहाद् आगतः कुशलसन्देशहारी विप्रोऽयं' इत्येतावदेव प्रकटयन्त्या महार्हवस्त्रादिभिः समानयित्वा विसर्जनीयः। परमेश्वरस्त्वामनुगृह्णातु त्वन्मनोरथपूरणेन।'

निसर्गचतुरा मुरापि तदुक्तमेवमेतदिति सर्वमंगीकृत्य तस्मिन्नेव समये बहुमूल्यानि वस्त्राणि, नारिकेलफलं, स्वर्णमुद्राश्च वृन्दमालयानाय्य, सर्वासां स्वान्तःपुरसेविकानां सकौतूहलं पश्यन्तीनां समक्षं महतादरेण तस्मै वितीर्यावोचत् 'विप्रवर! महत् खलूपकृतं भवता मम वृद्धाया मातुस्तथा भ्रातुः कुशलसन्देशं शुभाशीर्वचनानि चानयता। इतश्च प्रतिनिवृत्य भवता निवेदनीयं प्रणामपूर्वकं—'सर्वथा कुशलं मम·······मगधेश्वरचरणकमलच्छायायां जीवनं यापयन्त्याः।·······भवद्भ्यां मम विषये न लेशतोऽपि चिन्ता कार्या। एका एव खलु ममेच्छा। प्रद्युम्नदेवस्य पुत्रकमवलोक्येहागताया मम महान् कालो व्यतीतः। इच्छामि तं द्रष्टुम्। तद्यदि न महान् कार्यातिपातस्तर्हि स मम समीपे किञ्चित्-

कालपर्यन्तम् वासार्थं प्रेषणीयः'.........संप्रार्थ्य चैवं शिरसा स्पृशन्ती भूतलं प्रणनाम ।

आर्यचाणक्यस्तस्याश्चातुर्यमिदमवलोक्य संतुष्ट आश्वस्तश्च.....दक्षिणालोलुपसाधारणब्राह्मणवत् अतिस्मेरमुखोऽहोभाग्यतां स्वस्य तैस्तैरिंगितैः व्यञ्जयन् असंख्यान् सौभाग्यशंसिनः शुभाशीर्वादान् तस्यै वितीर्य तानि पट्टवस्त्राणि तद्दक्षिणाधनञ्च गृहीत्वा प्रचचाल । प्रत्यागतश्च स्वावासदेवतायतने स्वागमनमादित एव प्रतिपालयन्तं राजपुरुषमेकमपश्यत् ।

अवलोकित एव तस्मिन्.........प्रादुरभूत् तस्य मनसि.........'वारं वारं मुराया आवासमुद्दिश्य गतागते कुर्वन्नहं नूनं चारचक्षुषः रक्षाधिकृतस्य वरिष्ठस्याधिकारिणः कस्यचिद्दृग्विषयतां प्राप्तोऽस्मि । कार्यस्य च महतोऽयमारंभ एव । तद्यदि आदित एवैमे द्रव्यलोभिनश्चाराः द्रव्यदानेन स्वानुकूलीक्रियन्ते तर्हि.........अन्धप्राये चारैकनेत्रे प्रधानामात्ये कार्यस्य सिद्धिः सुकरा । नान्यथा' ।

संचिन्त्य चैवं स्वावासे प्रविष्टः—तेन धूर्तंमन्येन चारेण तत्तन्मिषेणागमनप्रयोजनादिकं पृष्टः.........आत्मानं मुरादेवीमातृगृहादागतं कुशलसन्देशहारकं ब्राह्मणं प्रकटयन् उवाच—'अप्रत्याख्येयः सुहृत्तुल्यस्य स्वामिनोऽनुरोध इत्येव मयायं प्रवासो बहुकष्टसाध्योऽङ्गीकृतः । नासीत् परमार्थतः मे कापि द्रव्यलालसास्य संदेशस्येह प्रापणे । मातृगृहसंदेशलाभप्रमुदितया मुरादेव्या निराकुर्वत्यपि मयि परं.....बहुसम्मानितोऽस्मि एतैर्महार्हवस्त्रादिभिः । तस्याश्चेमं स्नेहं तिरस्कर्तुमसमर्थ एतानि सर्वाणि स्वीकृतवान् । महती तु मम पुरतः समस्या.........कथं खल्वेतानि दूरीकरणीयानि इति । चौरसंकटाकीर्णे हि प्रवासमार्गे एतेषां सान्निध्यमपि विपत्तिसंततिजनकम् । तद्यदि मयि ब्राह्मणे स्वल्पमपि सानुग्रहस्तर्हि ददतु एतानि अत्रत्यायैव कस्मैचिद्योग्याय ब्राह्मणाय' ।

अप्रत्याशितलाभप्रमुदितः स राजपुरुषः स्वाकारगोपनेऽसमर्थः 'अतिरस्करणीयः सुहृदनुरोधः' इति तत् सर्वमंगीकृत्य निःस्पृहे बालसरलस्वभावे तस्मिन् विप्र आदरातिशयं बबन्ध । मगधराजकुलसम्बन्धिनीश्चानेका गोष्ठीः कुर्वन् मुहूर्त्तमासांचक्रे ।

एवं तैस्तैरुपायैः शत्रुपक्षीयदौर्बल्यस्थलानि निभृतमन्वेषयन्, प्रतिपक्षमागच्छतां शिष्याणां मुखाच्चन्द्रगुप्तकुशलवृत्तान्तान् विन्दन्, स्वनिर्धारितकार्यानुष्ठानप्रोद्यतमुराव्यापारांश्च निःशब्दं वृन्दमालामाध्यमेनावलोकयन्.........आर्यचाणक्यः कतिपयान् दिवसान् तूष्णीं तस्थौ ।

—:*:—

## एकादशः परिच्छेदः

मुरा तु सुतमुखकमलावलोकनौत्सुक्यपीडयमानहृदया चाणक्यप्रदर्शितां कार्यपद्धतिमनुसर्तुं बद्धपरिकरा तांस्तान् मगधराजदर्शनोपायान् चिन्तयामास । प्रत्यहं वर्द्धमानश्च सुमाल्ययौवराज्याभिषेकमहोत्सवस्तस्या असूयानलं प्रज्वलयन् स्वसुतं साम्राज्याधीश्वरपदे येन केनाप्युपायेन स्थापयितुं निश्चयं तस्या दृढतरीचकार । 'कथं नाम मगधेश्वरो विवश इव वशीकरणीय' इति विचारयन्ती प्रथमं तस्य दैनंदिनपरिचर्यायाः परिचयार्थं वृन्दमालां निभृतं योजयामास ।

'आसन्नसमारोहव्यापृतचित्तोऽपि सम्राट् समये समय आत्मनैव किमपि चिन्तयन्……एकाकी राजप्रासादस्य सर्वोच्चे कक्षेऽभिनंदयन् सायंसमीरलहरीः शनैः शनैः पर्यटति । तस्मिन्नेवावसरे स एकाकी समुपलभ्य' इति तया सूचिता च, विचार्य किञ्चित् तां सानुनयमिवोवाच—'वृन्दमाले ! जीवतः पुत्रस्य कुशलोदन्तमुपलभ्य कृतार्थामपि मां दहत्येवाहर्निशमयं पतिपरित्यागपरिभवाग्निः ! मन्ये स्मेरमुखे चिराद्दैवहतके भर्तारं स्वानुकूलीकर्त्तुं किमिति न प्रयतेयम् ? अतः करिष्यसि किं मम कृत एकं कार्यम् ? अहन्तावदेकं प्रार्थनापत्रमार्यपुत्रमुद्दिश्य लिखामि । तच्च तस्यैव हस्ते यथा पतेत् तथा त्वया कर्त्तव्यम् ! अकारणवैरिणीभिः सपत्नीभिः प्रसृतं चारजालं वञ्चयित्वा ममैतत् कार्यं त्वया निभृतं…… यथा मम सपत्न्योऽपि एतद्विषयेऽक्षरमपि न जानीयुः……कार्यसिद्धिश्च स्यात्' ।

स्वामिनीभाग्योत्कर्षमासन्नप्रायं तर्कयन्त्या तया सहर्षं स्वीकृते च तथा कर्त्तुं……सात्मनैव सह बहु संचिन्त्य पत्रमेकमलिखत्—

"श्रीमतां सुकीर्तिधवलितभुवनत्रयाणामार्यपुत्रचरणानां सन्निधौ"—

"एकदा परमप्रीतिविषयीभूतायाः, संप्रति तु प्राक्तनपापप्रभावादवज्ञाविषयीभूतायाश्चरणदास्या अश्रुपरिप्लुतं प्रार्थनापत्रमिदं"—

"पतिरेव केवलः नार्याः ईश्वरः……चरमं विश्रामधाम……अन्तिमं सौख्यविधानम् । नान्यः कोऽपि देवः पत्युः ऋते पत्न्याः । तस्यानुग्रह एव

केवलः तामैहलौकिकं पारलौकिकञ्चोभयमपि सुखं प्रदाय·······उत्तमां गतिं ददाति अन्ते। इति तावदस्माकं धर्मशास्त्रस्योद्घोषः·······सर्वमेतद् विचारयन्तीं मामभागिनीं वर्तमाना दशात्यधिकं पीडयति"।

"आर्यपुत्राणां हि मयि एकदा निरतिशया प्रीतिरासीत्। मम तुच्छया सेवया संतुष्टैरार्यपुत्रैरेकः शोभनः पुत्रकोऽपि मह्यं प्रदत्तः·······हन्त! तदुभयमपि मम पश्यन्त्या एव हठात् नष्टम्।·······हन्त! न जाने किमिति आर्यपुत्रचरणानामवकृपाशनिपातोऽनभ्रनभसोऽस्या दीनाया उपरि निपतितः। नहि स्ववृत्तमनेकवारं परीक्षमाणाप्यात्मनोऽपराधं स्वल्पमप्यवलोकये।·······कदाचित् फलोन्मुखानामतीतजन्मजन्मान्तरेषु कृतानां पातकानां फलमिदंरूपेण परिणतं स्यात्। योऽपि पुत्रक आर्यपुत्रैः स्वकृपाप्रसादरूपेण मह्यं प्रदत्तः·········सोऽपि व्रजकठोरेण दैवेनाकाल एव मत्समीपादपहृतः। अविकसितमेव कुसुममकालवात्यया वृन्तादुच्छिन्नम्।"

"एवं पतिपरित्यागदुःखदह्यमाना संततपुत्रशोकजीर्यमाणा भवच्चरणदासीयं समुत्प्रेक्षते दुःखबहुलस्य स्वजीवितस्यान्तं चिरप्रार्थितमासन्नम्। ·······याचते च भवच्चरणारविन्दयोरेकमात्रमनुग्रहम्।·······अप्यनुग्रहीष्यन्ति इमामभागिनीं·······आर्यपुत्राः·······एकवारं तत्सहवासे कतिपयदिवसातिवाहनेन?

"इयं हि मम पश्चिमा प्रार्थना। अपि स्वीकरिष्यन्ति आर्यपुत्राः?"

"साम्राज्यभारधारणव्यग्रा आर्यपुत्रा इत्यहं जानाम्येव। तथापि व्याकुलं नारीहृदयं न कालमपेक्षते·······नावसरम्।"

"समासन्ने च चिरंजीविनः सुमाल्यस्य यौवराज्याभिषेकमंगलमहोत्सवेऽपरिपूर्णाकांक्षं निःशब्दं रुदत् स्त्रीहृदयं नातिमंगलकारि इति साहसमेतत् कृतवत्यस्मि"।

"अपि पूरयिष्यन्ति आर्यपुत्रचरणा दयानिधयः हतभागिन्याः स्वदास्याः इममन्तिमम्·······अनुरोधम्?"

"मुरा"

विलिख्य चैवमुपेक्षितनारीहृदयाक्रन्दनकरुणं पत्रं वञ्चनाहितमतिः सा मुरा वृन्दमालां तत् दत्त्वा रहसि जगाद—'वेत्रवतीं प्रभूतधनप्रदानेन स्वानुकूलीकृत्य ब्रूहि-मगधेश्वरो यदा नाम एकाकी स्यात्—तदाहमन्तः प्रवेशनीया' इति। तयान्तःप्रवेशिता त्वमपि राजकुलनिवासप्रगल्भा समयमनुकूलं पर्यालोच्य मगधेश्वरायैतत् पत्रं सादरं समर्पय'।

अंगीकृत्य चेमं नियोगं सा वृद्धा दासी अन्त:पुरसेविकाजनमध्ये संचरन्ती निभृतं समयमनुकूलं प्रतिपालयन्ती तस्थौ !

एवमतिक्रान्तेषु कतिपयेषु दिवसेषु····स्वानुकूलावसरप्रतिपालनव्यग्रायां वृन्दमालायां स्वपत्रलेखनपरिणामज्ञानोत्सुकायां मुरायां····निभृतं निरीक्षमाणे परिस्थितिमार्ये चाणक्ये····एकदा··· धननन्दोऽकारणोद्विग्नचित्ताऽस्पष्टाशंकाग्रस्त: सर्वविधमपि राज्यकार्यं परित्यज्य—नियत्या प्रेर्यमाण इव –मुराया अन्त:पुरविभागस्य समीपवर्तिनि मेघनादकक्षे कतिपयान् दिवसान् अतिवाहयितुमाययौ परिमितपरिजनसहित:। समुपलभ्येममुदन्तं वृन्दमाला, स्वामिन्या अभिलषितपूर्तये समुत्सुका, वेत्रवतीं वशीकृत्य, सायंसमयेऽस्ताचलशिखरायमाणसहस्रकिरणकिरणसंस्पृष्टोत्तुंगप्रासादशिखरस्य क्रय-विक्रयव्यग्रनरनारीजनसंमर्दाकुलापणपथशतोद्गच्छत्कोलाहलमुखरितदिगन्तस्य प्रतिबिंबितारक्तमेघमालाप्रभालोहितायमानजलप्रवाहमेखलितस्य पाटलिपुत्रस्य शोभामवलोकयितुं मेघनादवातायने निहिते पर्यंकेऽवस्थितमात्मनैव सह किमपि किमपि चिन्तयन्तमेकाकिनं सम्राजमुपलभ्य स्वागमननिवेदनाय तां विज्ञापयामास।···सापि मंदं मंदं समुपसृत्यान्यमनस्कं सम्राजं सप्रणिपातमाह—'देव ! देव्या प्रेषिता काचिद्दासी सेवायामुपस्थिता विज्ञापयति—देव्या संप्रेषितं पत्रं देवस्य हस्ते स्वयं समर्पयिष्यामि—इति श्रुत्वा देव: प्रमाणम्।' ··वेत्रवत्याश्च निवेदनमेतत् विमनस्कतयेव निशम्य धननन्द: 'नूनं सुमाल्यस्य मात्रा यौवराज्याभिषेकमहोत्सवविषये किञ्चित् संदिष्टं भवेत्' इति तर्कयन् 'प्रवेश्यताम्' इति स्वैरमादिशत्। तया च तत्क्षण एव प्रवेशिता वृन्दमाला अग्रे गत्वा महार्हहेमपर्यंकासीनं तं सम्राजं क्षितितलनिहितजानुकरकमलं प्रणिपत्य तत् पत्रं तदीयचरणयोरर्पयामास। स तु नातिपरिचितां तां संदेशहारिणीं वीक्ष्य···'कस्या नु भवेदेतत्' कौतूहलाक्रान्तचित्तस्तदुद्घाट्य वाचयामास।

पठत एव च तस्य मनसि प्रादुरभवन् एतावत्कालपर्यन्तं प्रसुप्ता मुरादेवीविलासस्मृतय:। उद्भूच्च तस्य विषयासक्ते चित्ते—तथातिकरुणसन्देशवशात्, किं चिरादनुपभुक्तकामिनीभोगविलासेच्छावशात्, किं फलोन्मुखदारुणदुर्दैववशात्—न जाने किमति—तीव्रा दुर्दमनीयेच्छा मुरां पुनर्द्रष्टुम्। विचिन्तयंश्चाकारणपीडितायास्तस्या आपत्परम्परामात्मानमेव प्रमुखमपराधिनममन्यत। एतस्य प्रायश्चित्तं तां पृष्ट्वैव समा-

चरिष्यामि'—इति कृतनिश्चयश्च मुकुलितहस्तमानतनयनमाज्ञां प्रतीक्षमाणां वृन्दमालां जगाद 'वद स्वामिनीं····अनुपदमेव तां द्रक्ष्यामि' इति।

एतादृशेनानपेक्षितेन शुभसंदेशेन विसृष्टा सा वृन्दमाला तु प्रणिपत्य सम्राजं, त्वरितगतिः, स्वामिन्या भाग्योदयमासन्नवर्तिनं तर्कयन्ती, सावेगं गत्वाऽनुकूलमिमं संदेशं मुरां कथयामास। सापि सहसोपनतमेतद्दैवहस्तावलंबनमधिगत्य दृढतरीभूतवैरनिर्यातननिश्चया कुटिलेनाकारणपरिभूतेन नारीहृदयेन तांस्तान् नृपमानससंमोहनोपायान् विचिन्तयन्ती व्याकुलचित्तैव सांध्यं समयं प्रतिपालयामास।

अथासन्नमगधेश्वरपतनावलोकनासमर्थे इव पश्चिमसागरे निमज्य परलोकं गते दिनेश्वरे चन्द्रगुप्तभाग्योदय-निरीक्षणोत्सुके इव चन्द्रे दिगन्तव्यापि तमः समुत्सार्य स्वकिरणबाणैः पूर्वाचलशिखरमधिरोहति····रहस्योद्भेदशंकयेव मंदं मंदं चलति सायंसमीरणे धननन्दः····समीपोपस्थितमृत्युनाकृष्यमाण इव रत्नदीपदण्डधारिणा सेवकेनोपदिश्यमानमार्गः स्वैरं स्वैरं मुरादेव्या अन्तःपुरभागं ययौ।

·······तञ्चायान्तमवलोक्य दूरादेव एकवेणीधरा विलुलितालकमुखी मलिनदीनवसना निरलङ्कारा मुरा सावेगं तस्य स्वागतार्थं समागत्य प्रवहदविरलाश्रुधाराक्लिन्नमुखकमला गद्गदमन्थरवाक्, "अहो! अनुगृहीतास्मि मन्दभाग्या" इत्यनतिस्पष्टाक्षरं कथं कथमिवोक्त्वा, अननुभूतहर्षशोकावेशमसहमानेव, तदभिमुखं भूमौ साष्टाङ्गं प्रणिपतन्ती मुमूर्च्छं नाम।

धननन्दस्तु प्रथमत एवात्मानमपराधिनं मन्यमानो, मुरया संप्रदर्शितेनैतेन भावनावेगेनात्यन्तं प्रभावितः····सत्वरं प्रधावितैः अन्तःपुरिकाजनैः शाययित्वा तां कृतकमूर्च्छां महार्हे पर्यंके, उपवीजयन्, तस्याः समीप एवाऽतिष्ठत्। निमीलितनयनाया व्याकुलालकाया उच्छ्वसितपयोधरमण्डलायास्तस्यास्तदपरिचितमिवानवलोकितमिवानुपभुक्तमिव रत्नप्रदीपप्रभाभासुरम् अनलंकृतमनोरमं प्रौढरामणीयकं पिबतो विलासालसाभ्यां मदरक्ताभ्यां नयनाभ्यां प्रादुरभूत्तस्य मनसि, 'अहो, मे मूर्खस्य यत् किञ्चनकारित्वं····यदेतादृशं नारीरत्नं मया क्षुद्राणामीर्ष्याकलुषितानि वचांसि अनुसरता तथा तिरस्कृतमपमानितमुपेक्षितञ्च यथैतदधुना लावण्यसारमात्रावशिष्टाम् अवस्थां प्राप्तम्।····( सस्नेहं परामृशन् तदङ्गम् ) नूनमितः परमवधीरयन् अन्योपदेशवचांसि अनुसरन् स्वसदसद्विवेकबुद्धि

""परिहृत्यान्यानि कार्याणि""अस्या अकारणपददलितायाः सहवासं बहुमानयन्""अतीतानां त्रुटीनां प्रायश्चित्तं करिष्यामि।'

तत्स्नेहपरामर्शप्रापितजीवनप्रभेव मुरा शनैः शनैः संज्ञामलभत नाम।""पत्युः सान्निध्यं स्वर्गसुखोपममप्यश्रद्दधानेव स्वप्नलोके विचरन्तीवावर्तत। अविश्वसच्चान्ते भर्त्रा बहुवारं समाश्वासिता स्वभाग्योदये चिरात् खलूपनते""विज्ञाय च तस्य संकल्पं""निभृतं प्रमुदिताऽपि प्रकटतोऽश्रद्दधानमिवात्मानं प्रदर्शयन्ती अक्षाम्यन्तमिवात्मानं तादृशमन्यसपत्नीजनपरिभवं प्रकटयन्ती तं तादृशसंकल्प-परित्यागार्थं तथा विविधसविलासभावभंगिमनोहरं विज्ञापयामास, यथाऽधिकतरसमाकृष्यमाणचित्तः स दुर्दैवविमोहितचित्तः राजा अधिकमेव स्वनिश्चयपरिपालनदृढमतिर्बभूव""अधिकमेव च तस्यामादरं बबन्ध।

एवं मुरादेव्यन्तःपुरक्लृप्तनिवासस्य धननन्दस्य कतिपयानि दिनानि तत्प्रौढयौवनविलासाकृष्टहृदयस्य विस्मृतान्याशेषकर्तव्यस्यालक्षितान्येवातीतानि।

अचिरप्रवृत्तकपटनाटकसूत्रधारी मुरादेवी हि तत्सेवानिरन्तरनिरता तं तथोपचचार, तथा सिषेवे, तत्सुरतोत्सवेषु तथाऽऽसक्तिं दर्शयामास, अष्टविधनायिकान्यतमभावविलासलास्येन तस्य चित्तं तथा समाचकर्ष""यथा""स्वभावेन एव दुर्बलमतिः स्त्रैणो धननन्दस्तामेव केवलां स्वहृदयविश्रामस्थानं, स्वसौख्यपरमधाम, प्राणप्रियं हितचिन्तकं मित्रं, राज्यकार्यनिपुणां सहकारिणीं, पतिपरायणां पतिव्रतां, विविधविस्रम्भसाक्षिणीं सखीं, मूर्तिमतीं शान्तिं, विग्रहवतीं क्षमां, देहधारिणीं रतिं, असूयानभिभूतप्रेमोल्लासामादर्शपत्नीञ्च चिन्तयितुमारभत""तदेकचित्त इव च तदुपदेशानुसारं सर्वाणि कार्याणि कर्तुम्।

एतादृशञ्चानपेक्षितपूर्वमाकस्मिकोदयं मुरादेवीप्रभावमनुभूय""निरन्तरां तदीयान्तःपुरेऽवस्थितिं दृष्ट्वा""इतरराजपत्नीजनः किङ्कर्तव्यताविमूढः परं विस्मितोऽचिरादेवेर्ष्यातिरेककलुषितचित्तश्चासूयया तथा प्रजज्वाल यथा सर्वोऽपि राजान्तःपुरिकाजनोऽस्पष्टमहद्भयाक्रान्तोऽशान्तस्वान्तश्च बभूव। आसन्नाभिषेकमहोत्सवव्यग्रा सुमाल्यमाता तु विशेषतः वज्रपातोपमामिमामशुभां वार्तां निशम्याऽऽशङ्काकुलाऽमात्यवरेण्यं साक्षादाहूय तेन सह प्राप्तपरिस्थित्युपाययोजनां निभृतं विचारयामास। ""स्वयममात्यराक्षसोऽपि स्वामिनश्चित्तचाञ्चल्यं स्वाभाविकं

विदन्नपि, तद्वृत्तमाकर्ण्याऽऽश्चर्यान्वितः, 'निरपत्याया अस्या मुरायाः राजसंमोहने कीदृग् नाम स्वार्थं' इति विनिश्चेतुमशक्नुवानः, राज्यकार्यार्थमपि क्षणमात्रमपि सम्राजं रहसि द्रष्टुमपारयन्, निरपराधमपमानिताया अपहृतविनाशिताभंकाया मुरायाः सकाशात् नृपतेः घातमेवान्ते समुत्प्रेक्षमाणोऽन्तःपुर एव कूटनीतिप्रयोगं विभावयन् – आर्यचाणक्यापेक्षानुसारं तत्रैव विश्वासपात्राणां चाराणां महत् जालं प्रसारयामास ।

मुरा तु राजान्तःपुरकूटनीतिपरिचिता स्वपदक्षेपस्य सर्वमेतं परिणाममादित एवोत्प्रेक्षमाणा सन्ततसेवामिषेण प्रतिक्षणं पत्युः सन्निधौ वर्तमाना कतिपयान् आत्यन्तिकविश्वासार्हानेव सेविकाजनान् नृपपरिचर्यायां निभृतं न्ययुंक्त । स्वयञ्च तन्मनः स्वोपभोगमात्रप्रवणं कर्तुं तैस्तैरुपायैः प्रायतत । अचिन्तयच्च प्रधानामात्येनान्तःपुरमभितः प्रसारितं चारजालं निशम्योत्तेजिता—'अहो राक्षसस्य सुमाल्यपक्षपातित्वम् । मगधाधिपतेश्चिरादुपनतं मदीयान्तःपुरवासमपि न संसहते । मत्सकाशात् तस्य घातं समुत्प्रेक्षमाणो गूढान् पुरुषान् मद्गतिविधिजिज्ञासया प्रयुंक्ते । तत् पश्यतु नाम सकलमगधसाम्राज्यस्य पालकः आत्मानं राजनीतिविशारदं मन्यमानः, प्रधानामात्यो वृथा पददलितललनाकपटनीतिचातुरीम् । मन्ये-इत आकृष्टचित्ते प्रधानामात्ये तस्य विप्रवरस्य बाह्यव्यूहरचना सुकरतरैव भवेत् ।' विचिन्त्य चैवं सा प्रतिदिनं नूतनैः प्रौढयौवनोपदिष्टैः रतिविलासैर्धननन्दस्य चित्तमधिकाधिकमेव स्ववशीकुर्वती शनैः शनैः तद्हितेच्छापदेशेनान्यराजपत्नीविषये तथाऽमात्यराक्षसविषये तस्य मनः कलुषयितुमारभत । सोऽपि दुर्बलमतिः प्राक्तनविमोहितमतिर्मुरायाः पूर्णविकसितेन यौवनरामणीयकेन वशीकृतः सर्वेषाम् एव विषये संदेग्धुमारभत ।

एकदा च मध्याह्ने सुखनिद्रामग्ने धननन्दे मुरा वृन्दमालां रहसि समाहूयोवाच—'वृन्दमाले ! अकल्पितोपनतं सौभाग्यं मेऽसहमानः सपत्नीजनो मां खलु परं द्वेष्टि । कपटकुटिलां नीतिमनुसरंश्च मम पतिं मत्तोऽपहर्तुं बहु प्रयतते । तत् तस्य प्रयत्नान् विफलयितुमस्माभिरपि कपटनीतिरेवाऽऽश्रयणीया । श्रुतं मया यत् युवराजसुमाल्यस्य माता स्वसुतस्य वृद्धिदिवसं शुभमुपलक्ष्य श्व एव सायंसमये स्वदासीहस्तेन स्वयं कृतान् अपूपान् आर्यपुत्राय प्रतिवर्षानुसारमुपायनीकरिष्यति इति । तद् यदा सा दासी तानपूपानिहाऽऽनेष्यति तदा सा त्वया सखीभावं

प्रदर्शयन्त्या वशीकरणीया, तस्याश्च सकाशात् सोऽपूपकरण्डकः 'स्वयमेव नेष्यामि भर्तुः सेवायां' इति समाश्वासयन्त्या स्वयं ग्राह्यः। गतायाञ्च तस्यां प्रतिनिवृत्य स करण्डको मह्यं प्रदेयः। अनुकूलं समयं वीक्ष्याहं तं तुभ्यं पुनः प्रदास्यामि। त्वया च सः प्रतिहारिहस्ते 'सम्राज्ञ्या प्रेषितः सम्राजः कृते'—इत्युक्त्वा देयः।····तत ऊर्ध्वं तु यत् किमपि करणीयं तदहं स्वयमेव करिष्यामि।'

वृद्धा वृन्दमालाऽपि चिराल्लब्धं स्वामिन्याः सौभाग्यं कतिपयदिन-मात्रस्थायि माभूदिति चिन्तातुरा, अस्वस्थचित्ताऽपि, तस्यास्तं निदेश-मङ्गीकर्तुं तत्परैव बभूव।

अपरेद्युश्च-पश्चिमाशावलम्बिनि मन्दप्रभे प्रभाकरे, मन्दातपकक्ष-मधिवसति, स्वांकनिलीनामतीतस्मृतिखिन्नां मुरां····'क इव लाभोऽतीतेन स्मृतेन ?····विस्मर रमणि····त्वं सुतस्याकालमरणम्। त्वत्सपत्नी-जनविमोहितमतिरहं तत् सर्वमतिनिर्घृणं पापमनुमुमुदे। इतः प्रभृति तु····त्वदेकवशंवदः····त्वां सुखयन्····तथा प्रायश्चित्तं करिष्यामि····यथा (सस्मितम्) अतीतं सुतदुःखं स्वप्नोपमं ते भासेत····।' इत्यादिभिः प्रियशतैः समाश्वासयति धननन्दे····मन्दमुष्णञ्च निःश्वस्य वदन्त्यां वञ्चनाहितमतौ मुरायां—'सत्यं दयासागरो मम स्वामी आदित एव मयि अनुकम्पाशाली।····परन्तु ईर्ष्याकलुषमतिः सपत्नीजनोऽभागिनीं पूर्ववदेव निष्कारणं द्वेष्टि। यथा सागरस्यानेकनदीसमेतस्यापि भागीरथी समवृत्तिस्तथा सर्वास्वप्यार्यपुत्रचरणानुरक्तासु सपत्नीष्वहं तद्भगिनीव स्थातुमिच्छामि।····परन्तु न जाने किमिति अन्यास्तथा न वर्तन्ते। अस्तु; अनायत्ते मनोभावेऽन्यदीये किं क्रियताम् ?····मम तु निरपत्याया अभागिन्या एकैवेच्छा। आर्यपुत्रचरणाश्चिरं जीवन्तः, सदयं प्रजाः पाल-यन्तः इमामपि दीनां दासीं कृपाकटाक्षदानेनानुगृह्णन्तु कदाचित् इति', प्रतिहारो आगत्य प्रणामपूर्वकं विज्ञापयामास, 'देव, अद्य खलु युवराजस्य सुमाल्यस्य वर्द्धनदिवसोऽस्ति; तमिमं मङ्गलमवसरम् उपलक्ष्य तस्य जनन्या स्वयं कृता इमे अपूपा देवस्य सेवायां प्रेषिता' इति, स्थापया-मास च तत्पुरतः सम्राज्ञीनामाङ्कितं महार्हमेकं सौवर्णं करण्डकम्।····धननन्दस्तु····निशम्य तामेनां विज्ञप्तिं स्वाङ्के निलीनाया मुराया मुख-कमलं साभिप्रायमवलोकयामास। विज्ञाततदभिप्राया चतुरा मुरा तु सोत्साहं समुत्थाय हृष्टेवोवाच—'अहो सौभाग्यम्। अद्य नाम युवराज-

स्यायुष्मतः सुमाल्यस्य वर्षग्रन्थिमहोत्सवः। अहो सम्राज्ञाः स्वामिचरणानुरागित्वं यदकृत्वैव मनसि विरक्तिलेशं तथा मयि परमकृपाशालिनोऽप्यार्यपुत्रस्य सेवायामिमेऽपूपाः''''स्वयंकृताः''''उपायनीकृताः। तत् स्वीकरोतु इमान् आर्यपुत्रः। सफलयतु देवीमनोरथान्, संमानयतु च युवराजवर्षग्रन्थिबन्धमङ्गलम्।'

अन्यासु पत्नीषु कदाप्यनवलोकितपूर्वमिताद्दशीमन्यदीयकोमलभावनासंमानप्रवृत्ति मुराया अवलोक्य द्विगुणीभूतादरो दैवमूर्च्छितमतिर्धननन्दः तस्मात् सौवर्णकरण्डकादेकमपूपमादाय शनैः शनैः तं शकलीकृत्यैकं भक्षितुं प्रवृत्तः। तस्मिन्नेव क्षणेऽकस्मात् समुत्प्रेक्षितकपटप्रयोगयेव स्वालौकिकपातिव्रत्यप्रभावेण साक्षात्कृतसमीपोपस्थितभयङ्करानर्थयैव, कपटनाटककुशलया मुरया हठान्निवारितः हस्तं सावेगमुन्नमय्य, उक्तश्च, 'किमिदं नाम' इति विस्मयमानः, आवेगादविस्पष्टाक्षरं भयविवर्णाननकमलया दुःशंकातरलतारकया, वेपमानदेहलतिकया—'हे नाथ! नाथ! अनु''''अनुगृहाण''''दासीं इमां स्वीकृत्य''''एकमात्रामभ्यर्थनाम्। न भक्षणीया इमेऽपूपाः; न भक्षणीयाः। महोल्बणं सद्यःप्राणहरं विषमत्र मिश्रितमिति''''कथयति ममान्तरात्मा।''''तत् प्रतीक्षस्व क्षणमात्रम्'''' अवलोकयावस्तावत् अत्र किं सत्यम्।'

अविश्वसन्नेव च स्वीचकार तस्या अनुरोधं स्मेरवदनः।

सा तु''''दैवयोगादिव''''आदित एव तत्र सुखमुपविष्टं स्वस्य प्रियं बिडालमाहूय—तस्य पुरतस्तच्छकलं चिक्षेप।''''परन्तु बिडालस्तदाघ्राय सहसा दूरं जगाम।''''सत्यान्वेषणकृतदृढनिश्चयमिवात्मानं प्रदर्शयन्ती सा तं दृढं धृत्वा, बलात्तस्य मुखं विदार्य, तस्मिन् तदपूपशकलं निक्षिप्य, तत् बलात् पिहितवती।''''दुःसहवेदनापीडितः स बिडालस्तीव्रैः नखाघातैस्तस्या सुकोमलौ बाहू क्षतारक्तौ कृतवान्।''''परन्तु साऽगणितवेदना तन्मुखं नामुञ्चत्।''''कतिपयक्षणानन्तरमेव स बिडालः उदरगतापूपलालास्रावः शिथिलितसर्वगात्रः करुणकरुणं विकृतस्वरमाक्रन्दन्, अक्षिणी विघूर्णयन्, हस्तपादं प्रसार्य''''विवर्णकलेवरः पञ्चत्वमगात्।

भयविस्फारिताभ्यां निर्निमेषाभ्यां नयनाभ्यां तच्छवं निरीक्षमाणा नाम''''सा मुरा शोकातिरेककातरेव''''धननन्दं विस्मयमूढं''''दृढमालिलिङ्ग।''''''''तद्वदनमविरतं चुचुम्ब।''''''''तत्प्रत्यालिङ्गनसमाश्वासितेव च सुचिरं विललाप शोकास्फुटम्—'अहो मम सौभाग्यम्।''''समय

एवोत्प्रेक्षितं मया तत् घृणितं कृत्यम्।....एतादृशीमेव कपटनीतिमनुसृत्य पापैरकारणदुर्जनैरहं पूर्वं विप्रलब्धा....वत्सेन च वियोजिता। अहो दौरात्म्यमेषां निरंकुशमहत्त्वाकांक्षानिर्ममाणाम्। मम अहितमिच्छद्भिः साक्षात् आर्यपुत्रप्राणा अपि तृणवद्गणिताः। अहो, ईर्ष्यान्धत्वं महाकुलप्रसूतानामपि राजपत्नीनाम्! आर्यपुत्राणां सुचिरादुपनतां मदन्तःपुरावस्थितिमसहन्तीभिरेतादृशी लोकद्वयविरुद्धा कपटनीतिरवलम्बिता!....एतदपेक्षया स्पष्टमेव ताभिः किमित्यस्यै मन्दभागिन्यै न कथितम्—'आर्यपुत्राणामयं नूतनोऽनुग्रहस्त्वद्भाग्योपनतोऽप्यस्माभिर्न कदापि सहिष्यत' इति।....अथवा ताभिः कपटनीतिकुटिलाभिरेतद् विषप्रयोगनैपुण्यं मय्येवाभागिन्यामेकाकिन्यां किमिति न प्रयुक्तम्।'

सम्राट् धननन्दस्तु स्वप्नेऽप्यनपेक्षितं सुमाल्यमातुस्तादृशं कपटप्रयोगं प्रत्यक्षतोऽवलोक्य विस्मयमूढमतिः...कथञ्चिदात्मानं प्रकृतिस्थं विधाय प्रवञ्चनचतुरायास्तस्या मुराया बुद्धिचातुर्यं वीक्ष्य परं प्रभावितः...वक्षःस्थले मालायमानामिव तां सुचिरं निःशब्दं प्रत्यालिलिङ्ग, उन्नमय्य च तस्या अश्रुबिन्दुक्लिन्नमाननकमलं जगाद—'प्रिये! सत्यम्। अद्य मम प्राणास्त्वयैव संरक्षिताः...स्वप्नेऽपि नाऽकल्पयमहं यत् सुमाल्यस्य माता मयि एतादृशान् प्रयोगान् आश्रयेत् इति।...अथवा अशक्यमेव विज्ञातुं परमार्थतो नारीहृदयम्। यां हि अहं तथाऽपकृतवान् सैवाद्यैवमुपकारिणी परिणता।...याञ्च बहुमानैः सम्मानितवान् सा मम प्राणापहारिणी।... प्रिये!....त्वया रक्षिता इमे प्राणा अद्यप्रभृति तवैवाधीनाः। नैतेषु कस्या अपि त्वत्सपत्न्या अधिकारः। इयं सुमाल्यस्य माता....मत्प्राणहरणोद्यता....केन खलु दण्डेन योजनीया इत्यपि त्वमेव विचारय।'

स्वकपटनाटकस्य यथापेक्षं फलमुपलभ्य हृष्टा मुरा तु कृतकाश्रूणि स्वैरं प्रमार्ज्य स्वपतिं प्रतिचुम्ब्य प्रत्युवाच—'स्वामिन्! नात्र सहसा किमपि अनुष्ठेयम्।....अविचार्य कृतं कर्म संततमनुतापं जनयति।.... ईर्ष्याकलुषितसपत्नीजनस्य क्वास्याकर्ण्याऽऽदिष्टो मे कारागृहकल्पेऽन्तःपुरैकदेशे वासः स्वामिनमधुना दुःखाकरोति...न वा?....अतः सम्यक् परीक्ष्य शान्तेन चित्तेन संचिन्त्य....अपराधो दण्डनीयः।....कदाचित् सुमाल्यस्य माता....अहमिव पुरा...निरपराधिन्यपि स्यात्।....कदाचित् स्वामिनः कस्यचिद्बाह्यशत्रोरप्ययं प्रयत्नः स्यात्।....स्वामिनः साम्रा-

ज्यस्य बलाढ्यतया प्रकटमपकर्तुमक्षमाः शत्रव एव निभृतमेतादृशं कपट-प्रयोगं किमिति न कुर्युः ? राज्यलोभसमाक्रान्तया सम्राज्ञ्या कर्मैतादृशम् अनुष्ठितं स्यादिति विश्वसितुं नैवोत्सहते ममान्तरात्मा ।···(सनिःश्वासम्) ····यद्यपि नास्ति तस्याविदितचरं यद् राज्यलोभ उभयलोकभयमतिशेते कदाचिदिति । राज्यकार्यधुरन्धरस्यामात्यप्रमुखस्य दुर्भेद्यं परमचतुरं चार-जालं वञ्चयित्वा कथन्नु सर्वमेतदघटत····इति तु बहु विचिन्तयन्त्यपि विनि-श्चेतुं न प्रभवामि ।····(स्वगतमिव) किं तस्यापि स्वामिभक्तिः कपटकुटि-लयाऽन्तःपुरनीत्या कालुष्यं प्रापिता ? अस्तु तावत्····। अस्मिन् विषये निःसन्दिग्धं सावधानाभ्यां भवितव्यम् । ····मन्ये अनेन वैफल्येन क्षुभिता आवयोः कूटशत्रवः स्वामिप्राणरक्षकान् ममैव प्राणान् अपहर्तुमितः प्रभृति प्रयतिष्यन्त इति ।····(सगद्गदं)····स्वामिन् ! मम प्राणापहारेणैव यदीमे सन्तुष्येरन्····तर्हि तान् समर्पयितुमहमस्मिन्नेव क्षणे सन्नद्धा । किमिवान्यत् सफलं पर्यवसानं स्यादस्य जीवितहतकस्य ?

सम्राट् धननन्दस्तु····तथाविधकूटव्यापारावलोकनसमुत्तेजितोऽपि···· मुराया महासंकटेऽपि तस्मिन्नविचलितां चित्तवृत्तिं संभाव्यापराधिषु संयमशालिनीं विवेकशीलां प्रवृत्तिञ्चावलोक्य परं प्रभावितस्तस्या एवा-न्तःपुरे स्थातुं निश्चयमकरोत् ।

मुराऽपि सावधाना तेन सह तथाऽवर्तत यथा स मूर्खोऽधिकाधिकमेव तस्या वश्यतामयात् ।

—:❀:—

# द्वादशः परिच्छेदः

एवमतिक्रामत्सु दिवसेषु····एकदा मुरा पुत्रमुखकमलावलोकनेच्छाताप्यमानहृदया धननन्दं विशेषतः प्रसन्नमानसमवलोक्य नात्यभिनिविष्टेव स्वैरं जगाद—'प्रिय !····गूढचारलोचनैः समग्रमन्तःपुरं तथा राजकुलं निभृतं निरीक्षमाणायाः, प्रतिक्षणं सावधानतया त्वत्प्राणान् संरक्षन्त्या मम प्राणानपहर्तुं सर्वः सपत्नीजनस्तथा तदधीनोऽन्तःपुरिकाजनः सततं चेष्टते····इति तर्कयामि।····अहमस्मि एकाकिनी।····न कोऽपि मम स्वामिनं विहाय····अन्यः पक्षपाती।····द्रव्यलोलुपोऽयं दासीजनोऽधिकतरद्रव्यलिप्सया भिन्नहृदयः कदा स्वस्वामिन्या एव प्राणानपहरेत्—इत्यत्र न नियमः।····(सानुनयम्) अतः इच्छाम्यनुग्रहमेकम्।—तेन हि प्रदत्तेन मम प्राणरक्षणमपि भवेत् चित्तस्थैर्यमपि।····एष्वेव दिवसेषु मम मातुः कुशलसन्देशहारी ब्राह्मण एकः स्वामिप्रीतिभाजनीभूतां मामाशीर्वचनैः सभाजयितुमिहाऽऽगतोऽस्ति।····विषापूपप्रसङ्गसमुद्विग्नाय तुभ्यं तु तस्येहागमनं नाऽकथयम्।····तस्य मुखात् श्रुतं मया बन्धुजनकुशलवार्त्ताप्रसङ्गेन····यन्मम भ्रातुः प्रद्युम्नदेवस्य पुत्रः षोडशवर्षीयः परमदक्षो वर्द्धते।····तच्च तत्पिता राजनीतिकपाटवलाभार्थं तव सेवायां स्थापयितुमिच्छति—इति। तत्····अनुमन्यसे यदि····तर्हि तमिहानाय स्वसन्निधौ अवस्थापयितुमिच्छामि।····(सोत्कण्ठमिव) महान् खलु कालोऽतीतो मातुर्गृहादागताया मम।····उत्सुकं मम हृदयं भ्रातुः पुत्रं द्रष्टुम्।····(सगद्गदमिव) मम तावदधन्याया वत्सोऽपहृतः निष्करुणेन कालेन।····सदैव तृषार्तं मम मातृहृदयं।····तद्वत्सस्य चन्द्रगुप्तस्यैव मुखकमलमवलोक्याऽऽत्मानं कृतकृत्यं करिष्यामि'।

धननन्दस्तु····आदित एव तया विमोहितः····तद्वचनानुमोदनमेवात्मन इतिकर्तव्यं मन्यमानः···कृतपूर्वं पापकृत्यं स्मारंस्मारं खिद्यमानोऽकृत्वैव स्वल्पमपि विचारं तस्या अभ्यर्थनां स्वीचकार 'यथेप्सितं प्रियाया' इति तच्चिबुकमुन्नमय्य वदन्।

मगधाधिपतेरिमामनुज्ञां लब्ध्वा कृतार्थमात्मानं मन्यमाना सा मुरा वार्त्तामिमां झटिति आर्यचाणक्याय निवेदयितुं रहसि वृन्दमालामाज्ञापयामास।....वृन्दमालाऽपि हृष्टा निभृतं तस्याऽऽवासं गत्वा तस्मै सर्वं वृत्तान्तमकथयत्।

आर्यश्चाणक्यस्तु....आदित एव मुरया समये समये स्वकार्यप्रगतिविषये संसूच्यमानस्तस्याः कपटकुशलतां वीक्ष्य संजातप्रत्ययः....तत् सर्वं समुद्दिष्टकार्यसाफल्यं निशम्य प्रीतः....वृन्दमालाम् 'अहमप्यधुना स्वकार्यानुष्ठाने प्रवर्तमानोऽचिरादेव भवतीं कुमारद्वितीयः साक्षात्करिष्यामि' इति प्रतिसन्दिश्य प्राहिणोत्।

अचिन्तयच्च—'अहो आनुकूल्यं विधेः!......अन्तःपुरकूटनीतिप्रगल्भयाऽनया मुरयाऽयं स्त्रैणो धननन्दस्तथा वशीकृतो यथा तदिच्छाप्रतिपालनमेवात्मन इतिकर्तव्यं मन्यमानः.......नान्याः रमणीरनुगृह्णाति।.......न राज्यकार्याण्यवलोकयति, नामात्यप्रमुखायापि दर्शनं ददाति।.......मुराया प्रौढयौवनोपदिष्टैर्विलासैरपहृतचित्तोऽहोरात्रं तदीय एवान्तःपुरे तिष्ठति।.......स्वामिनमेवं मुरया प्रभावितं प्रेक्ष्य तस्या एव निरपराधं पीडिताया सकाशात् घातनीतिप्रयोगमाशंकमानोऽमात्यप्रमुखोऽन्तःपुरमभित एव प्रयुञ्जन् निगूढं चारजालमन्यानि छिद्राणि न तथा सावधानतया रक्षति।....एतच्च तस्य व्यग्रमनस्कत्वमुपलभ्याहं कृतवेषपरिवर्तः....चिकीर्षितमहायज्ञमिषेण राजधान्यां सर्वत्र सञ्चरन्.... प्रायः सर्वानपि प्रमुखान् प्रजाजनान् साक्षात्कृत्य.......सम्भविषु छिद्रेषु भेदबीजावापं.......यथासम्भवमकरवमेव।.......अद्यैव च सुवार्त्तामिमामादाय वृन्दमाला मां द्रष्टुमागता।.......तन्मन्ये-योग्यमिममवसरमवलम्ब्य शीघ्रमेव कुमारः राजगृहाभ्यन्तरे प्रवेशनीयः।.......तथा सति हि मुरेयम् उर्वरितस्वकार्यानुष्ठाने दृढतरनिश्चया भवेत्।.......कुमारोऽपि मगधराजकुलाभ्यन्तरस्थित्या सुपरिचितः। परन्तु एतदत्र विनिश्चेयं प्रथमतो यत्—वत्सो मुराया अन्तःपुरे कथं नाम स्थापनीयः।.......तद्यथार्थ-स्वरूपविषयेऽमात्यप्रमुखः अगणितचारबलं युञ्जानः कथं तावद्वञ्चनीयः, मगधराजकुलाभ्यन्तरे प्रवेशितो वत्सोऽविगणय्याऽऽभ्यन्तरिकविरोधं कथं खलु मगधशासनयन्त्रस्य महत्त्वशालिन्यधिकारपदे योजनीय इति।.......अथवा—मन्ये.......मुरया स्वीकृतमपदेशमनुसृत्यैव .......सर्वमेतत् निष्पादनीयम्।'

सञ्चिन्त्य चैवं·······व्यूहरचनायाः द्वितीयं पादं प्रविष्टमात्मानं कलयन्·······स विप्रः अपरेद्युरेव·······महति प्रत्यूषेऽनतिपरिस्फुटायामारुण्यां प्रभायां·······ईषत् प्रबुद्धेषु द्विजकुलेषु अपरिलक्षित एवान्यैर्निवासिभिः·······देवतायतनात् निर्गत्याऽरभत मार्गमाक्रमितुं महानगरीबहिर्यायिनम् ।

संप्राप च कतिपयदिवसानन्तरं गगनमध्यमलंकुर्वति भगवति भास्वति आतपक्लान्तद्विजाश्रिततरुखण्डं सर्वतः सशस्त्रयुवकगणसंरक्ष्यमाणं राज्यमुख्यालयं ।·······प्रविष्ट एव संमुखागतं विनयावनतं रक्षाधिकृतं युवानमपृच्छत्—'कुत्र तावद्वत्सश्चन्द्रगुप्तः' इति । उपद्रविवन्यश्वापदहननार्थं कतिपयैः सैनिकैः सहगतश्च तं ततोऽधिगत्य बलवत्क्षात्रतेजःप्रत्ययतुष्टो मध्याह्नसन्ध्यावन्दनादिकं दैनिकं कर्म समापयन् अचिरादेवाक्षिलक्ष्यीचकार धूलिधूसरितकेशं रक्तरञ्जितकवचं भल्लपाणिं क्षात्रं धर्ममिव मूर्तिमन्तं—तत्तुल्यवृत्तान्तैरभिन्नहृदयैर्युवकैरनुगम्यमानं ईषत्प्रस्फुटत्श्मश्रुरेखामण्डितमुखकमलं कुमारं चन्द्रगुप्तम् ।·······गुरोरनपेक्षितागमनमुपलभ्य प्रहृष्टं, पादौ गृहीत्वा कृताभिवादनञ्च तमाशीर्वचनैः स्नेहसिक्तैरभिनन्द्य तस्य विशेषतः समुत्फुल्लं वदनकमलमवलोक्य किञ्चित् कौतूहलचित्तः मृगयावृत्तान्तमपृच्छत् ।·······विनयमौनधारिणमवलोक्य कुमारं, तदनुयायिषु अन्यतमो युवकः समीपमुपसृत्य बद्धाञ्जलिर्विज्ञापयामास—'गुरुदेव ! अद्य प्रभाते·······नातिदूरवर्तिनं इत एकं श्रेष्ठिबहुलं ग्राममाक्रम्य यवना लुण्ठिष्यन्तीति चारमुखेन विज्ञायास्माकं राजा महति प्रत्यूषे सशस्त्रैरस्माभिः सह मृगयामिषेणेतो निर्गतः ।·······ग्राममभितोऽस्मान् सुगूढं स्थापितवान्·······आक्रमितवांश्च ग्रामलुण्ठनप्रवृत्तान् तान् नराधमान् सुयोग्यमवसरं समवेक्ष्य ।·······बलान्धास्ते तु यवना नितान्तमनपेक्षितं वज्रपातदुःसहमाक्रमणं सहसाऽनुभूय दिग्भ्रान्ताः परित्यज्य हताहतान् स्वकीयान् भयेन कान्दिशीका बभूवुः ।·······(सगर्वं) संख्यया प्रबलतराणां लुण्ठकानां पराजयेऽस्मिन् अस्माकं राज्ञः रणनीतिचातुर्यं प्रमुखतमं कारणमासीत् ।' आर्यश्चाणक्यः स्वप्रियशिष्यस्यैतत् साहसं चातुर्यञ्च वीक्ष्य प्रीतो विनयनम्रं तमभिननन्द ।

एवंप्रायेणोदन्तेन समतिक्रान्ते दिवसे·····तदनुगतायां सन्ध्यायां विश्रब्धसुप्तपतत्रिकुलनिःशब्दवृक्षकदम्बक एकदेशोपविष्टनिद्रायमाणगोकुले मुख्यालयस्थाने···समुद्गते रजनीनाथे·····क्षीरप्रवाहैरिवामृतोदकैरिव

प्रौढप्रभासन्तानैर्धवलयति समग्रामरण्यानीं······समाप्तजप आयंश्चाणक्य एकाकिनं कुमारं चन्द्रगुप्तं रहसि पाटलिपुत्रप्रवेशादारभ्य सर्वं वृत्तान्तं यथायोग्यमकथयत् ।····अवदच्च—'इत्थं तावन्मया सावधानेनास्य महतः कार्यस्य बीजावापः कृतः ।····इत ऊर्ध्वं तु तव प्रतिपक्षस्याभ्यन्तरेऽवस्थानमत्यावश्यकम् ।····तव सान्निध्येन दृढतरीभूतनिश्चया सा राज्ञी स्वकार्येऽविचलिता भवेत् । ···राजान्तःपुरप्रवेशितस्याऽऽभ्यन्तरिकगुह्यतमवार्त्तविदिनो शनैः शनै····राज्ञीप्रभाववशात् प्रमुखतरसैनिकाधिकारपदारूढस्य तव साहाय्येन ममापि उत्तरोत्तरा व्यूहरचना सुकरा भवेत् ।···· नापि वत्सस्य मगधराजकुले प्रवेशः कष्टसाध्यः ।····विमोहितमतिर्धननन्दस्तव देव्याः सन्निधौ वासं स्वीचकार एव ।····तदधुना····त्वं किरातराजस्य प्रद्युम्नदेवस्य पुत्रो भूत्वा धननन्दस्यान्तःपुरे····देव्याः मुरायाः···· सन्निधौ वस । कथं नु मन्यते वत्सः ?'

कुमारश्चन्द्रगुप्तस्तु गुरोः राजनीतिपाटवेन परं प्रभावितो, 'यथाऽऽज्ञापयन्ति गुरुचरणा' इत्येव प्रत्युवाच ।····स्वशिष्यस्याऽऽज्ञापालनतत्परतामवलोक्य परं प्रीतो द्विजश्रेष्ठः सः पुनरुवाच—'वत्स !····एवं प्रद्युम्नदेवपुत्रमिषेण मगधराजकुलाभ्यन्तरप्रवेशे विनिश्चिते तदनुकूलोपाययोजनाऽपि विचारणीया ।····अमात्यप्रमुखो हि कदाचिदस्मद्विषये सन्दिहानः स्वयं प्रद्युम्नदेवसमीपे गूढं दूतं प्रेषयेत् । ····प्रत्यागताच्च तस्माद् विदितयाथार्थ्योऽस्माकं सर्वमेवकार्यं दुरन्तं कुर्यात् । ····अतः स्वयथार्थरूपगोपनार्थमस्माभिरादित एव परं सावधानैर्भवितव्यम् । मन्ये किरातराजस्य प्रद्युम्नदेवस्य सेवकात् कस्मादपि किरातप्रमुखात् तद्राजमुद्राङ्कितं एकं पत्रं वत्सेन येन केनापि प्रकारेण हस्तगतं करणीयम् । तन्मुद्रानुरूपा चैका मुद्रा कृत्रिमा सम्पादनीया । ····तन्मुद्रितञ्च एकं कृतकं पत्रं 'महाराजप्रद्युम्नदेवस्य' इति कृत्वाऽमात्यप्रमुखाय योग्येऽवसरे····तदप्रार्थितमपि····सबहुमानं प्रदेयम् । तेन हि वत्सस्य विषये स विगतशङ्को भविष्यति । भविष्यति चास्माकं कार्यसौकर्यम् ।'

इमाञ्च गूढमन्त्रणामनुसृत्याचिरादेव किरातराजराजमुद्रासदृशीं कृत्रिमां मुद्रां सम्पाद्यैकां तदङ्कितं नातिसुलेखं—

"श्रीमतां नृपवृन्दवन्दितचरणकमलानाम्"

"मगधसाम्राज्याधीश्वराणां सन्निधौ"

"····तदाज्ञानुवर्ती प्रद्युम्नदेवः"

"सविनयं विज्ञापयति—एष मम पुत्रश्चिरं—"
"जीवी कुमारश्चन्द्रगुप्तश्चिरात् खलु इतो"
"गतायाः प्रियभगिन्या मुरादेव्याः मनः--"
"प्रसादनार्थं भवत् सेवायां प्रेषितः। यद्येषः राज्य—"
"कार्यशिक्षालाभाय नियुज्यते तद्योग्ये राज्य—"
"कार्ये तर्हि महाननुग्रहो भविता। एष विनीता —"
"चरणेन भवदीयो भूत्वा भवतः सेविष्यत"
"....इत्याशास्ते—प्रद्युम्नदेवः।"

इत्याशयकं पत्रमेकं लेखयित्वा....कृतराज्यसुरक्षाप्रबन्धः....सुलक्षणे दिवसे....धृतकिरातराजसैनिकवेषैः स्वामिभक्तैः युवकैः संरक्ष्यमाणं, कृत-किरातराजपुत्रवेषपरिग्रहं, पदानुरूपपरिवारान्वितं कुमारं चन्द्रगुप्त-मादाय निर्गतः....स्वयमपि कृतवेषपरिवर्तः—आर्यश्चाणक्यः शनैः शनैः मार्गमाक्रामन् कतिपयदिवसानन्तरं पाटलिपुत्रनगरोपकण्ठं प्राप्य तत्र क्लृप्तस्कन्धावारः स्वस्य चन्द्रगुप्तस्य चाऽऽगमनमारोहिणो दूतस्य माध्य-मेन मुरादेवीं सूचयामास।

सा च पुत्रमुखकमलावलोकनोत्सुकहृदया सुखमासीनं सुरां सेवमानं धननन्दं सावेगमुपसृत्य हर्षातिरेकास्फुटवाक् जगाद—'स्वामिन्! सूक्तं खलु केनापि "भर्तृकृपा तु नारीणां भाग्यसर्वस्वम्" इति। तस्यां हि प्राक्तनवशादुपलब्धायामेव माता स्निह्यति....किं पुनरन्ये?....यावत् खल्वहं दुर्भाग्यवशात् भर्तुरौदासीन्यपात्रमासं....तावन्न मे वृद्धा माता भ्राता वा कुशलमपृच्छत्।....यतः प्रभृति तु विनष्टपापसञ्चया, गते नैशे तमसि कमलिनीव सहस्रकरेण, भर्त्राहमनुगृहीता....ततः प्रभृति तेषां तदौदासीन्यं कान्दिशीकतां प्राप।....न केवलं तैः कुशलसन्देशेनाहं संमानिता....अपि तु भ्रात्रा स्वपुत्रोऽपि मम मनोभावमविलम्बमेवानु-सरता भर्तुः पादवन्दनार्थं प्रेषितः।....अहो मे सौभाग्यम्। बहोः काला-दनन्तरम् अद्य खल्ववलोकयिष्यामि तम्।'

धननन्दस्तु मदालसनयनस्तत्—सोल्लासवर्तनापहृतहृदयः सस्मितं स्वसेनापतिं भागुरायणमादिशत् प्रतिहारिमुखेन नगरप्रवेशमहाद्वारे राज-पुत्रं चन्द्रगुप्तं संमान्य सादरं मुरादेव्या अन्तःपुरमानेतुम्।

अपरेद्युः....मन्दं मन्दं वहति परिस्फुटितकमलामोदहारिणि तडाग-वीचितुषारशीतले प्राभातिके मातरिश्वनि, चन्द्रगुप्तनगरीप्रवेशमवलोक-

यितुमिव सम्यगुदयाचलशिखरमारोहति भगवति भास्वति, उद्यदशिशिर-करकरापहृततेजः—सर्वस्वेऽपि विनष्टनक्षत्रपरिवारगणेऽपि चन्द्रगुप्तभाग्यो-त्कर्षारम्भावलोकनार्थमिव गगनाङ्गणादनपेते चन्द्रे, नृपतिसमादिष्ट-समुद्घोषकघोषणाजनितकौतूहलनागरिकजनसंमर्दिते प्रशस्ते राज-मार्गे⋯कृतेष्टदेवताभ्यर्चनेनार्येण चाणक्येन मस्तकमाघ्राय कृताशीर्वचनो, विविधविचित्राऽऽभूषणभासुर-किरातराजपुत्रवेषधारी कुमारश्चन्द्रगुप्तो मगधेश्वरप्रेषितां कल्याणलक्षणसम्पन्नां समुज्ज्वलरजताभरणभूषितां हस्तिनीमारुह्य⋯⋯कैश्चित् खड्गधारिभिः कैश्चिद्धनुर्धरैः, कैश्चिदश्वा-रोहिभिः कैश्चिद्रथासीनैः किरातदेशीयवेषधारिभिरुच्चावचपदाधिकृतैः सैनिकैरनुगम्यमानः⋯⋯जयजीवेत्यादिघोषमुखरैः पर्वतीयवेषधारिभिः समुद्घोषकैरुपदिश्यमानमार्गः⋯स्कन्धावारान्निर्गत्य शनैः शनैः मार्गमा-क्रामन् प्रतिफलद्भास्वत्किरणप्रोज्वलखड्गधारिभिः, महाप्रमाणैर्लोहक-वचावृतकायैः सैनिकैरहर्निशं संरक्ष्यमाणं नगरमहाद्वारं प्राप।

सम्मुखमगाच्च स्वागताय यथादेशं मगधसेनापतिर्भागुरायणो मत्त-गजाधिरूढः।

लोहकवचावृतवक्षसाऽतुलबलविख्यातेनानेकसमरप्रसङ्गसाक्षिणा तेन पुरः समुपसृत्य सादरकौतुकमभिनन्दितः कुमारश्चन्द्रगुप्तोऽनभ्यस्तोऽपि राजकीयसत्काराणां चतुरतया नित्यपरिचितमिवात्मानमेतादृशैः स्वा-गतसमारोहैर्दर्शयन्⋯⋯तं प्रत्यभिनन्द्य⋯⋯तद्गजराजमारुह्य प्रशस्तेन पुष्पमालाभूषितेन राजमार्गेण सम्राजं मुरादेवीञ्च साक्षात्कर्तुं चचाल।

उदगाच्च तस्मिन्नेव क्षणे प्रोद्घोषयन्निवासन्नं नन्दकुलविनाशं युगपत्-प्रहतपटुपटहनिनादः।

'अहो!⋯अयं मुरादेव्या भ्रातुष्पुत्रः कुमारश्चन्द्रगुप्तः!⋯इमे चास्या-नुयायिनो विचित्रवेषाः किरातसैनिकाः।' इति साश्चर्यं सकौतुकमीक्ष्य-माणोऽभ्रंकषप्रासादवातायनसंस्थितैः नागरिकैः,⋯अदृष्टपूर्वनगरीशोभा-मवलोकयन्, पुष्पवर्षिणां बालकानां सभाजनानि सस्मितं स्वीकुर्वन्⋯ प्राप कुमारश्चन्द्रगुप्तो मगधसम्राजः प्रासादम्।

ससंभ्रमं पुरः प्रधावितैः सौवर्णयष्टिधारिभिः प्रतिहारिभिः सबहुमान-मुपदिश्यमानमार्गो⋯भुवनान्तराणीव विविधवृत्तान्तमनोहराणि अनेकानि प्रकोष्ठान्तराणि अतिक्रम्य च मुरादेव्या अन्तःपुरद्वारम्।

सोल्लासं प्रधाविताभिः सेविकाभिः निवेदिततदागमना मुरा तु चिर-वाञ्छिताभिलाषापूर्तिसमुत्सुका प्रस्नुतपयोधरा स्वयंगृहीतमङ्गलकलशा ससम्भ्रमं द्वारदेशमागत्य, स्वयमवतरणमङ्गलमनुष्ठाय, पादौ गृहीत्वा वन्दमानं स्ववत्सं चिरस्य वियुक्तं, सुचिरमालिलिङ्ग, संततप्रवहदानन्दाश्रुक्लिन्नवदनकमला""उन्नमय्य च चिबुकं स्वप्नेऽप्यनुत्प्रेक्षितपुनर्दर्शनं तस्य मुखकमलमावेगदीर्घं चुचुम्ब।""अनयच्च सत्यपि परित आज्ञासम्पादनदक्षे परिजने, सत्यामपि हर्षाश्रुपूरितनयनायां वृद्धायां वृन्दमालायां समीपे, तं स्वयं हस्ते गृहीत्वा नृपसन्निधौ न्यवेदयच्च सुखमासीनाय तस्मै—'एष दीर्घायुर्वत्सश्चन्द्रगुप्तो भवदाज्ञावशंवदो भवतश्चरणकमलयोः प्रणतः। तदनुगृह्णातु वत्सं नाथ' इति। सोऽपि ससम्भ्रममुत्थाय पादयोर्नतं महाप्रमाणं वनराजकिशोरमिवाल्पवयसमिव प्रभावप्रगल्भं कुमारमुत्थाप्य गाढमाश्लिष्य स्वसन्निधौ स्थापयामास।""अवलोकयंश्च तस्य मुखं स्वप्रियामुखसादृश्यं तद्गतं निरीक्ष्य परं विसिस्मये; परन्तु चतुरा मुरा विदिततदभिप्राया स्वैरमिव स्वस्य स्वभ्रातुश्च परस्परमुखसादृश्यमुपवर्णयन्ती तस्य तं संशयमल्पोपजातमेव निराचकार।

कतिपयक्षणानन्तरं चतुरश्चन्द्रगुप्तोऽदृष्टपूर्वराजराजैश्वर्यावलोकनविस्मृतकर्तव्यमिवात्मानं प्रदर्शयन् सत्वरमुत्थाय मगधेश्वराय प्रद्युम्नदेवस्य तत् कृतकपत्रं सविनयं ददौ।"""पठित्वा तु तत् परं प्रीतो धननन्दः समीपावस्थितां स्वसुतमुखकमलासक्तनयनभृङ्गां देवीमुवाच—'अयि! आदिष्टोऽस्मि तव भ्रात्रा—"वत्सः राज्यप्रशासनतन्त्रे शिक्षणीय" इति।"""तदहमद्यैवामात्यप्रमुखमाज्ञापयामि—नियोजनीयः कुमारस्तेषु तेषु महत्त्वशालिष्वधिकारपदेषु यथाक्रमम्' इति।

वदंश्चेत्थं तत् पत्रं तस्यै ददौ।"""मुरा तु निभृतं प्रहृष्टाऽपि सुगोपितमनोभावा तत्पत्रं स्वैरमिव स्वसन्निधावेव स्थापयामास, जगाद च, 'नाथ! एषस्तावत् प्रवासपरिश्रान्तः"""तत् कतिपयान् दिवसान् मम समीपेऽत्रैव निवसन् प्रवासपरिश्रममपनयतु। ममापि मातुः सकाशादिहागतायाः महान् कालः संवृत्तः। """एतावत्कालपर्यन्तं प्राक्तनकर्मवशात् नाथेनोपेक्षिताया मम मनस्यपि नाभूत्—बान्धवा इहाहूय सभाजयितव्या इति। अधुना तु नाथस्य प्रसादेन समुद्भासितजीवनाया मम प्रबलेयमिच्छा यत् पश्यन्तु नाम सर्वे ममेमं सुदैवहासम्। (सोत्कण्ठमिव) वत्सञ्चावलोकयन्त्या मम हठात् स्मृतिपथमायाति नाथस्य ज्येष्ठः

पुत्रः......यः खल्वविकसित एवापहृतः क्रूरया नियत्या। कुमारं लालयन्त्या मम मातृहृदयपिपासाऽपि नाम शाम्येत् (अस्फुटस्वरम्) यदि हि मम वत्सोऽजीविष्यत्तर्हि कुमारेण तुल्यं एव सोऽभविष्यत्......वयसि, सौन्दर्ये, राजतेजसि च। एतमवलोकयन्ती वत्समिवावलोकयामि। तद्यदि नाथस्याऽनुमतिस्तर्हि.... ..इच्छामि कुमारं स्वसमीपमेव स्थापयितुम्। परतस्तु यथा स्वामिने रोचते तथा राज्यकार्यप्रशिक्षणार्थं कस्मिंश्चित् उत्तरदायित्वपूर्णे पदे योजनीयो वत्सः।'

धननन्दस्तु सर्वमेतत् कपटभाषणमवितथं मन्वानः.......'का हानिः ?.......यथाऽभीप्सितं तथा क्रियताम्' इति स्वैरमनुमोदते स्म।

एवं प्रायेण च उदन्तेन तदहः परिणतिं ययौ।

—:※:—

# त्रयोदशः परिच्छेदः

एवमतिक्रान्तेषु कतिपयेषु दिवसेषु·······कुमारश्चन्द्रगुप्तः नगरबहिः-प्रदेशस्थितमज्ञातप्रायं देवालयमेकमधितिष्ठतोऽग्रिमव्यूहरचनाव्यापृत-चित्तस्याऽऽर्यचाणक्यस्याऽऽदेशान् महानगरीशोभावलोकनकौतुकापदेशेन नगर्यां सर्वत्राटद्भिःस्वसैनिकैर्गूढमानीतान् पालयन् अचिरादेव सर्वमपि राजकुलं निभृतं निरीक्षयाञ्चक्रे।·······विनयनम्रेण च स्वव्यवहारेण स सम्राजं तथानुकूलीचकार यथा स कतिपयदिवसानन्तरमेव सुमाल्यादपि तं प्रियतरं मन्तुमारेभे।·······विनष्टकल्पं स्वसुतमनेकैरायासैर्विविधैः कपटनाटकैरश्रुपरिप्लुताभिश्च प्रार्थनाभिरन्ते प्राप्य प्रमुदितायास्तस्य जनन्यास्तु का कथा?·······अहोरात्रं तस्यैव दर्शनमभिलषन्ती, तमेव प्राणेभ्योऽप्यधिकं मन्यमाना, तस्यैव लालनपालने बद्धस्पृहा, तमेव सर्वगुणैकनिधानं मन्वाना, तस्यैव कौतुककथाः प्रत्यालापमालपन्ती, किं निशायां किं दिने किमेकान्ते किं नृपसन्निधौ तस्यैव कल्याणं चिन्तयन्ती, तमेव साम्राज्याधीश्वरपदे स्थापयितुं दृढतरबद्धपरिकरा, सुतमयजीवनेव बभूव।

राजकुलाऽऽभ्यन्तरिकछिद्रावलोकनतत्परोऽप्यननुभूतपूर्वराजविलास-मुग्धमिव आत्मानं प्रदर्शयन् कुमारो विनयनम्रेण स्नेहसिक्तेनाभिजात्य-गम्भीरेण स्ववर्तनेन स्मितपूर्वभाषणेन च न केवलं स्वमातुः·······न केवलं स्वपितुः·······अपि तु सर्वासामप्यन्यराजपत्नीनां तथा हृदयं जहार यथाऽचिरादेव ताः मुरां विद्विषन्त्योऽपि तं सस्नेहमवलोकयामासुः।······· राक्षसस्तु आदित एवाकस्मान्नृपतिप्रीतिपात्रीभूताया मुराया विषये नातिविश्वस्तो·······अनन्तरं तस्या भ्रातुष्पुत्रस्याऽऽगमनं, तदन्तःपुरेऽ-वस्थानञ्च विज्ञाय संशयग्रस्तो·······मुरायाश्चन्द्रगुप्तस्य च व्यापारविधिं राजान्तःपुरचारिचारगणात् जानन् अविदंश्च किमपि स्वसंशयोपोद्वलकं चिह्नं·······समयं प्रतिपालयन् तस्थौ।

एतेन कुमारचातुर्येण नितरां सन्तुष्ट आर्यचाणक्यः कतिपयमासा-

नन्तरं कुमारं दृढबद्धमूलं विभावयन् मुरां निभृतमग्रिमकार्यानुष्ठानाय सूचयामास। वात्सल्यवशीकृतहृदया साऽपि तदनुसारं वर्तमाना, भाविनि कपटप्रयोगे सेनाधिपत्यस्य परमामावश्यकतां यथार्थतया जानती, स्वामिनम् अनुकूलेऽवसरे विज्ञापयामास कुमारं सेनापतिप्रमुखस्य भागुरायणस्य साहाय्यकारित्वेन नियोक्तुम्।...... सम्राट् तु........आदित एवानभिज्ञो राजनीतिमूलसूत्राणां.......तत्रापि प्रतिकूलदैवविमोहितमतिः 'राज्य-प्रशासनांगेषु सेनाया एव तावत् सर्वातिशायि महत्त्वम्।........'तत् प्राप्नोतु नाम कुमारस्तस्या एव सर्वप्रथमतः परिचयं' इति वदन् अमात्य-प्रमुखं तथाऽऽदिदेश।

स तु नातिपरिचितशीलस्यान्यनृपतिसुतस्य तादृशमहत्त्वशालिनि पदे नियुक्तिं श्रुत्वा नातिप्रसन्नोऽपि किञ्चिदप्यन्यथाकर्तुमपारयन्, राजाज्ञा-मनुसरन् तं सेनापतिप्रमुखस्य साहाय्यकारिपदे प्रायुंक्त।.......तस्य च तमविश्वासं सर्वथा जानन्नपि अजानन्तमिवात्मानं प्रदर्शयन् चतुरश्चन्द्र-गुप्तोऽल्पेनैव कालेन अभिमानिनं सेनापतिं स्वविनीतवर्तनेन, स्वतुल्यान् सेनाधिकारिणः सौजन्येन कनिष्ठांश्च स्नेहशीतलवर्तनेन वशीकुर्वन्, आर्य-चाणक्यस्याऽदेशाननुसरन्, राज्याङ्गिनः प्रमुखतमेऽङ्गे स्वस्थानं बबन्ध।

एवं गच्छति काले....दुर्दैवापहृतमतौ सम्राजि प्रतिदिनमधिकतरमेव विलासपङ्के निमज्जति, कुमारे चन्द्रगुप्ते सौजन्येन प्रत्यहमधिकतरमेव लोकप्रियतामारोहति च सति....आर्यश्चाणक्यः महति प्रत्यूषे एकदा प्रबुद्धः देवालयारामे स्वैरं पर्यटन् आत्मनैव व्यचिन्तयत्—'एतावत्काल-पर्यन्तं....अनुकूलत्वाद्विधेः व्यूहरचना निर्विघ्नं यथासंकल्पञ्च सम्पन्ना। स्त्रैणस्य विषयजर्जरितमतेर्धननन्दस्य विलासलम्पटता, कार्यचतुरस्य विनयशीलस्य मृदुभाषिणः कुमारस्य प्रत्यहं परिवर्धमाना लोकप्रियता, भयानकविपदाशंकोद्विग्नस्य सुनिपुणं परीक्ष्यापि शंकाकारणमनधिगच्छ-तोऽमात्यप्रमुखस्य व्यग्रमनस्कता, भावियौवराज्याभिषेकमहोत्सवोल्ल-सितचित्तस्य सुमाल्यस्याकुतोभयता, सपत्नीवशंगतमपि राजानं विज्ञाय नात्युत्तेजितायाः सुमाल्यमातुर्निरुद्विग्नता च अस्माकं व्यूहरचनायाः सिद्धिं नियतां सूचयन्ति।....मुरान्तःपुरघटनाचक्रमेव केवलं सुनिपुण-चारदृष्ट्याऽवलोकयतः राक्षसस्य गूढदृष्टिं सुतीक्ष्णां परिहृत्य व्यवहरता मया स्थाने स्थाने गूढम् उप्ता मन्त्रा इदानीं समीचीनतयांऽकुरिता इव लक्ष्यन्ते....तत्....अधुना तावत् तेषां रक्षणार्थं प्रतिपक्षिगतिविधिपरिचय-

प्राप्त्यर्थञ्च चाराणां जालं सर्वतः प्रसारणीयम् ।....राजनीतेश्चक्षूंषि नामैते चाराः ।....एते च प्रायो यत्रोपतापः संकल्पितस्तत्रत्या एव मया ग्राह्याः ।....तत्रत्यपरिस्थितिपरिचिता एते संशयलेशमप्यनुत्पादयन्तो हि अनायासेनैव तत्रोपजापं कर्तुं प्रभवेरन् । एतेषां संग्रहश्च ये राजपुरुषास्तावद् विलासशीलाः प्राप्त्यपेक्षयाऽधिकतरं व्ययं कुर्वन्ति...तेषां मध्यात् युक्तः ।...अधिकाधिकं द्रव्यं व्ययार्थमपेक्षमाणा हि ते गर्हितमपि चारकर्म सहर्षमंगीकुर्युः ।....मगधानामस्मिन् साम्राज्येऽमात्यप्रमुखम् एकं वर्जयित्वा प्रायः सर्वे एवोच्चाधिकारिणो विलासपंकमग्नाः कर्तव्यपालनविमुखाश्च दृश्यन्ते ।....यथा राजा तथा प्रजा । तन्मन्ये संग्रह आभ्यन्तरिकचाराणां न तथा दुष्करः ।'

सञ्चिन्त्य चैवं स स्वशिष्यान् नानापदेशेन राजधान्यामटतः संभाव्योपजापक्रियाणां राजपुरुषाणां तथाऽन्येषामपि संग्रहकर्मणि नियोजयामास ।....तैश्च सुपरीक्ष्योपस्थापितानां मध्ये कार्यदृष्ट्योपयुक्ततमान् स्वीचकार, तेषु तेषु स्थानेषु निभृतञ्च प्रायुंक्त....यथाऽमात्यवरेण्यस्य गृहे सिद्धार्थकं, सुमाल्यमातुरन्तःपुरे सुमतिं, सेनापतिभागुरायणस्य गृहे विरोधकम् । न केवलमित्थं प्रमुखाणां राजपुरुषाणामेव....अपितु धनाढ्यानां वणिक्श्रेष्ठानां, प्रामुख्यभाजां सामन्तानां गृहेष्वपि चारान् न्ययुंक्त । एवं सर्वत्र राजकुले....राजधान्यां तथा मगधसाम्राज्यान्तर्वर्तिषु तथा तद्बाह्येषु सर्वेष्वपि प्रमुखेषु स्थानेषु सुसंबद्धं नितान्तगूढं चारजालं प्रसार्य तन्माध्यमेनातिदूरघटितामपि महत्त्वशालिनीं घटनां अविलम्बेनैव जानातिस्म स द्विजवर्यः स्वयमविदितकल्पः ।

एवं सर्वत्र गूढदूतजालं प्रसार्य स राजनीतिप्रयोगप्रवीणो विप्रः कर्णोपकर्णिकयाऽवगतममात्यप्रमुख-सेनापतिप्रमुखयोः पारस्परिकं वैमनस्यं वर्द्धयितुमिच्छुः, कुमारं चन्द्रगुप्तं निबोध्य, उपजापप्रयोगमारेभे ।

एकदा गगनमध्यमलङ्कुर्वति प्रचण्डतापके तपने, कृताहारे भागुरायणे सुखं पर्यङ्कमधिरुह्य भोगतन्द्रामनुभवति सति, समीपकक्षान्तरवर्ती विरोधको गाढनिद्रानिमग्नं स्वामिनमुत्प्रेक्षमाण इवान्यं सेवकं वार्तालापप्रसङ्गेनेव—अर्द्धसुप्तं स्वामिनं भावयन् स्वैरमुवाच—'अहो योगविद्यायाः सामर्थ्यम् । यः खल्वहं नास्तिक इवाऽऽधिदैविकेषु प्रभावेषु न व्यश्वसं, स एव सञ्जातयोगविद्याप्रभावप्रत्ययोऽधुना सर्वं संसारमन्यमिव पश्यामि ।'....न्यवेदयच्च तेन सेवकेन प्रत्ययविशेषं साग्रहं पृष्टः, 'जाना-

स्यैव मम कनिष्ठं भ्रातरममात्यप्रमुखस्य प्रासादे परिचारकम्। व्यतीते खलु सप्ताहे तस्य (सहासं) महाकृपणस्य निधिभाण्डं तद्गृहात् केनापि पापिनाऽपहृतम्।'' तेन परं खिन्नः स तदन्वेषणाय स्वसुहृदो गूढचारिणः राजपुरुषान् प्रार्थयामास, यथाशक्ति पारितोषिकमपि प्रोद्घोषयामास।''''परन्तु साफल्यं नालभत।''''अत्रान्तरे तस्य कर्णपथमायातं यन्नगर्या अस्या बहिरेवैकस्मिन् प्राचीने देवतायतने विराजते विधातेव साक्षादपरो ब्राह्मणतेजोभासुरमूर्तिः त्रिकालज्ञो विप्रवरः कश्चिद्''''यः योगदृष्ट्या देशकालव्यवहितमपि वस्तु करतलगताऽऽमलकवत् साक्षात् कुरुत इति। प्रभूतदक्षिणालोभवशात् सोऽस्माकं निधिभाण्डं स्वयोगचक्षुषावलोक्य कदाचित् तदवस्थितिं कथयेत् इत्याशयाऽऽवां तावदतीतेऽह्नि तस्याश्रमं गतौ। असामान्यं तस्य प्रभावमवलोक्य भक्तिप्रह्वाभ्यामावाभ्यां पादग्राहं प्रार्थितः सः क्षणमात्रं निमील्य चर्मचक्षुषी स्वयोगचक्षुषा तस्य भाण्डस्यावस्थितिं ज्ञातवान्, कथितवांश्चावाभ्यां चकितचकिताभ्याम्।''''तदुपदेशानुसारं कृताऽन्वेषणो मम भ्राताऽद्य प्रातः सत्यमेव केनचिद् विजनेऽवस्थापितं खण्डप्राये प्रासादे एकस्मिन् तन्निधिभाण्डमलभत।''''(सादरमिव) निरिच्छत्वमपि तस्य विप्रस्य विलक्षणम्। उपकारनम्राभ्यामावाभ्यामुपायनीकृतमपि द्रव्यं नाङ्गीचकार। बहुरत्ना नूनं वसुन्धरा।'

सेनानीर्भागुरायणस्तु तन्द्रालसस्तत् सर्वं संभाषणं विस्पष्टमशृणोत्।''''शस्त्रविद्यापारङ्गतस्यापि तस्याऽऽधिदैविकविद्यायामादित एव स्वभावत एव च रुचिरासीत्—येन स प्रायः सर्वानेव राजधान्यां समागच्छतो योगविद्यानिष्णातान् संमानयति स्म।''''तत् अश्रुतपूर्वमेतद्योगसामर्थ्यं निःस्पृहत्वञ्च निशम्य विस्मितः सः तस्यैवाह्नोऽवसाने सन्ध्यावन्दनादि यथानियमनुष्ठाय रथमारुह्य तदादेशचकितेनेव तेन विरोधकेनोपदिश्यमानमार्गः नगरात् सुदूरवर्ति प्रशान्तसरित्समीरवीजितं दिनावसानप्रत्यागतद्विजकुलवाचालवृक्षराजिपरिवेष्टितं देवायतनं प्राप।

प्रशान्तस्थानप्रभावितश्च रथादवतीर्य विरोधकप्रदर्श्यमानमार्गेण समुपसर्पन् अचिरादेवाक्षिलक्ष्यीचकार महतो निश्चलस्य निःशब्दस्य योगाभ्यासनिरतस्येवान्तःसंयमितसर्ववृत्तेरिवाश्वत्थवृक्षस्यैकस्याधो निषण्णं, सायंप्रकाशोद्भासितगौरमूर्त्ति विरम्य बाह्याद्व्यापारमात्रादात्मानं ध्यायन्तं विप्रवरम्।''''भक्तिभावनम्रश्च प्रणनाम।

नातिदूरावस्थितयोश्च तयोरल्पीयसैव कालेन समाधेरुदतिष्ठदार्यश्चाणक्यः।....अनपेक्षितागतं भागुरायणं वीक्ष्य किञ्चिद्‌विस्मितोऽपि विरोधकदर्शनमात्रेणानुमितसर्ववृत्तान्तस्तटस्थमिवात्मानं प्रदर्शयन्, शुभैराशीर्वचनैस्तावुभावपि अनुजग्राह।....स्वैरं प्रवृत्तैः विविधशास्त्रालापैरतिमानवशक्तिविशेषविवेचकैर्योगशास्त्रविचारैः गूढपरब्रह्मतत्त्वप्रतिपादकैः सिद्धान्तवचनैश्च भागुरायणस्य हृदयं तथा चकर्ष यथा स प्रायः प्रतिसायंकालं तद्दर्शनायाऽऽगन्तुमारभत।....यदृच्छयेव संभाषणविषयतामापन्नैस्तत्कालीनार्यधर्मसनातनसंस्कृतिह्रासकारणविवेचनैरचिरादेव स तन्मनोऽभिप्रायं निभृतं परीक्षयामास।....जगाद चैकदा स्वैरमिव तत्तद्‌वार्त्तालापप्रसङ्गेन....'वीरवर! भवत्सदृशैः सेनाधुरन्धरैरुपोद्‌बलितसामर्थ्योऽपि मगधसम्राट् सनातनधर्मस्यार्यसंस्कृतेश्च संरक्षणार्थं भारतभूमेः यवनान् अत्याचारिणो निष्कासयितुं नोत्सहत....अपि तु भोगविलासमग्नोन्तःपुरशरण एव वृथाऽऽयुः क्षपयतीति महदाश्चर्यास्पदमेतत्।....अथवा समीपोपस्थितविनिपातानामेतादृशी बुद्धिर्दृष्टचरा मानवानाम्। (सनिःश्वासम्) अद्राक्षमेवैकदा....स्वातीन्द्रियदृष्ट्या नन्दवंशस्य समीपतमं विनिपातम्.... अन्यस्य च देशाभिमानिनोऽभ्युदयम्'। भागुरायणस्तु स्वभावत एव महत्त्वाकांक्षी, स्वगुरोः यौगिकसामर्थ्ये परं विश्वसन्, आगतकल्पस्य राजवंशपरिवर्तनस्य स्पष्टतरं रूपं ज्ञातुमिच्छन् तमनेकवारं तदर्थं विज्ञापयामास।....परन्तु स चतुरः स्पष्टतया किमप्यवदन् तस्य जिज्ञासामेव केवलं वर्द्धयामास।....सुविज्ञाततत्स्वभावश्च गूढं तस्यामात्यराक्षसविषयकं मनोमालिन्यं तीव्रतरं चकार।

इत्थं सेनापतिप्रमुखं स्वप्रभावप्रभावितमाकलय्याऽऽर्यश्चाणक्यः निभृतं सिद्धार्थकममात्यप्रमुखसन्निधावुपजापप्रयोगायाऽऽदिशत्।....तदादेशानुवर्तमानश्च स सिद्धार्थक एकदा राज्यकार्यव्यापृतममात्यप्रमुखमुपसृत्य रहस्यवोचत्—'स्वामिन्! अतीतेषु कतिपयेषु मासेषु मया मुख्यः सेनापतिः प्रतिसायं रथमारुह्य महानगर्या बहिर्गच्छन् दृष्टः।....अतीते च सायंकाले कौतूहलवशात्तं निभृतमनुसरन् अहन्तावत् नगरबहिःप्रदेशेऽवस्थितस्य जीर्णस्याप्रसिद्धस्य देवतायतनस्यैकस्याऽऽरामे क्लृप्तनिवासेन विप्रवेषधरेण केनचित् पुरुषेण सह किमपि मन्दं मन्दम् आलपन्तमपश्यम्।....परमार्थजिज्ञासोपशमनार्थं सेनापतिः खलु तत्र गच्छति—इत्यत्र तु न मे विश्वसिति अन्तरात्मा।....अतः परं स्वामी प्रमाणम्'। आत्यन्तिकविश्वासपात्रस्य स्वसेवकस्यैतद् भाषणं निशम्य अमात्यवरेण्यः आदित

एव भागुरायणविषये कलुषिताशयः तं भावितद्गतिविधिनिरीक्षणार्थं समादिशत् ।

अपृच्छच्च सपरिहासमिव अपरेद्युरेव तं मन्त्रिपरिषत्सभायामुपस्थितं सेनापतिं सर्वसमक्षं, 'अपलितकेश एव भवान् परेशजिज्ञासाव्याकुलमानसः सद्गुरुचरणारविन्ददर्शनार्थं प्रत्यहं गच्छतीति किं नैतत् अतीतजन्मानुष्ठितानां सुकृतानां फलम् ?'

सेनापतिवरेण्यस्तु तमुपहासं सोढुमसमर्थोऽपि, रक्ततरवदनोऽपि, कथञ्चित् सन्नियम्याऽऽत्मानं''''अस्मत्सदृशानां वरिष्ठतमानामपि राजपुरुषाणां विषयेऽयं राजनीतिप्रवीणंमन्यः राक्षसः चारान्नियोजयति' इति कुपितोऽपि कथञ्चित् स्मेरमुखः, 'विविधशास्त्रपारङ्गतः स विप्र इति कर्णोपकर्णिकया निशम्याऽऽदौ तावत् कौतूहलात्तं द्रष्टुं गत आसम् । सम्प्रति तु तस्याऽऽध्यात्मिकतेजसा प्रभावितः प्रायः प्रत्यहमेव तद्दर्शनार्थं गच्छामि ।''''शस्त्रविद्याभ्यासमूढमतिरपि पामरोऽयं साधुसमागमेन भवत्सदृशमद्वितीयं सौभाग्यवैभवं जन्मान्तरे कदाचित् प्राप्नुयात् इति दुराशाताम्यमानमानस' इति प्रत्यवदत् । स्वप्रासादं प्रत्यागतश्च परमविश्वासास्पदीभूतस्य कुमारचन्द्रगुप्तस्य समीपे सर्वं वृत्तान्तं कथयित्वा नानाविधा दुरुक्तीरमात्यमुख्यं समुद्दिश्यावोचत् ।

आर्यचाणक्यस्तु तत् सर्वं वृत्तं गूढदूतमाध्यमेनाधिगत्य सन्तुष्टो विरोधकसिद्धार्थकौ समुचितैः पारितोषिकैः सन्तोष्य तौ स्वस्वकर्मणि प्रोत्साहयामास ।

एवंप्रायेण घटनाप्रवाहेणातिक्रान्तेषु मासेषु राक्षसभागुरायणयोर्वैरं परं प्रवृद्धं विज्ञाय चतुर आर्यश्चाणक्यः नितान्तमुत्तेजितं भागुरायणं भेत्तुमेकदा विविधविषयसंस्पर्शिवार्तालापप्रसङ्गेन स्वैरमुवाच, 'सेनापते । ''''भवत्सदृशं राज्यकार्यकुशलमसामान्यमातृभूमिभक्तिशालिनं शस्त्रविद्यापारङ्गतं विशिष्टं पुरुषं सेनापतिपदलाभेनैव कृतकृत्यंमन्यं योग्यतरश्रेष्ठतरपदलाभायाप्रयतमानमवलोक्य त्वदनुरागिणामनुचरजनानां खेदो भवतीति स्वाभाविकमेवैतत् ।''''अत्र च मन्ये-भवतः संकोचशीलत्वमेव मुख्यं कारणं श्रेष्ठतरपदाप्राप्तौ । एतच्च स्वार्थपरार्थविरुद्धम् । ''''योग्यं हि अधिकारपदं योग्येन पुरुषेणाधिष्ठितं तस्योपकाराय भवति''''समाजस्योपकारायाऽपि ।''''अस्य बलाढ्यस्य साम्राज्यस्याधिकतमाधिकारशालिन्यमात्यप्रमुखपदे यथा भवतोऽधिकारः न तथा राक्षसस्यापि । स हि तथा-

कथितबुद्धिसामर्थ्यमात्रसम्पन्नो वस्तुतः शस्त्रसामर्थ्यधारिणं भवन्तमेवावलम्बते प्रशासनाय। अतः प्रतिदिनं सन्निकृष्टतरीभवतोऽवश्यम्भाविनो राजवंशपरिवर्तनस्य वेलायाम् उदीयमानराजवंशसाहाय्यकारी भूत्वा भवान् स्वयोग्यतानुरूपाधिकारपदलाभाय प्रयतताम्।'

शस्त्रोपजीवी स्थूलमतिर्भागुरायणस्तु एवमप्रत्याशितरूपेण समाश्वासितोऽत्यधिकप्रवृद्धमहत्त्वाकांक्षामोहितमतिरुदीयमानराजवंशस्य विषयेऽधिकतरं ज्ञातुमिच्छन् स्वं गुरुं वारं वारं तदर्थं प्रार्थयामास। परन्तु स धूर्तो विप्रः नियतिमुद्रितौष्ठपुटमिवात्मानं प्रदर्शयन्.....अन्ते मगधराजपत्न्या मुरायाः सन्निधौ स्थितं कुमारं चन्द्रगुप्तं भाविराजपरिवर्तननाटकस्य प्रमुखतममभिनेतारं नियतिनियुक्तं व्यानक्।

तामेतां भविष्यद्वाणीं निशम्य परमाश्चर्यान्वितः आदित एव कुमारचन्द्रगुप्तविषये समुपजातकौतुकः, द्विगुणतरीभूतपदोन्नतिलाभाशः, सेनापतिर्भागुरायणस्तत्रैव गुरुचरणारविन्दे साक्षीकृत्याऽऽमरणं साहाय्यदानमङ्गीचकार।



## चतुर्दशः परिच्छेदः

एवं वशीभूते प्रधानसेनापतौ, सम्प्राप्तनिखिलसेनाबलाधिपत्ये कुमारे चन्द्रगुप्ते, गूढप्रवृत्तान्तरिकभेदनव्यापारानभिज्ञे दैनन्दिनशासनकार्यभारमात्रव्यापृतचित्तेऽमात्यवरेण्ये, प्राक्तनविमोहितमतौ यथार्थपूर्वमैन्द्रियसुखोपभोगमात्रमग्ने सम्राजि……आर्यश्चाणक्यः स्वप्रतिज्ञापूर्त्यर्थं रात्रिदिवं प्रयतमान एकदा एवं मनस्यकरोत्……'इत्थं सम्पन्नप्राये आन्तरिकोपजापप्रयोगे चरमप्रहारसाफल्यार्थं परकीयाऽऽक्रमणनिमित्तमावश्यकमिव मन्ये।……विषयलम्पटधननन्दघातसमय एव नाम यदि परकीया एतां महानगरीमभिभवेयुस्तर्हि सामान्यप्रजाजनानामाकस्मिकपरचक्रोद्विग्नमनसां स्वसंरक्षणमात्रव्याकुलचेतसां तादृशात् रोमहर्षकात् राजघातात् दुर्दमनीयः क्षोभोऽपि न भवेत्, परकीयाक्रमणविफलीकरणे सफलीभूतस्य कुमारस्य मगधसाम्राज्याधीश्वरपदे यथासमयम् अभिषेचनात् न सन्तापोऽपि।……कपटनीतिमाश्रित्य तस्मिन् अवसरे राक्षसस्य स्वामिविश्वासघातकत्वं प्रस्थाप्य दोषित्वमपि प्रोद्घोषयितुं शक्यम्।……सर्वेषु च मगधसाम्राज्यशत्रुषु……स उत्तरभारतवर्षीयो नृप एव बलाढ्यो दीर्घद्वेषी च।……बहुवारं रणाङ्गणे पराभूतोऽपि नियतं करद्रव्यमनायासेन मगधेश्वराय न समर्पयति। प्रयतते च गूढं मगधसाम्राज्योच्छेदनाय।……अतः स एवास्मिन् अवसरे……मन्ये……उपजापनीयः। स ह्यमात्यप्रमुखमुद्राचिह्नितं कल्पितरचनं कूटपत्रमवलोक्य परं तुष्टोऽतर्कयन्नेव कपटप्रयोगमल्पबलसंचित एव यथानिर्देशम् आक्रमिष्यति पाटलिपुत्रम्।……तस्यैतदाक्रमणं वत्सश्चन्द्रगुप्तो विफलीकरिष्यति अनायासेनैव।……बन्दीकरिष्यति च तम्। तत् प्रथमन्तावत् राक्षसस्य सा मुद्राऽधिगन्तव्या।……सा च हिरण्यगुप्ताख्यस्य राजपुरुषस्याधीना।……अयञ्च मुद्राधिकारी मुराया अन्तःपुरस्थितां काञ्चिद्दासीं कामयते। ताञ्च वशीकर्तुं प्रभूतं धनम् इति तावच्छ्रुतं मया। तन्मन्ये प्रभूतद्रव्यलोभेन स्वामिमुद्राप्रदानं नूनमङ्गीकरिष्यति……सः।'

सञ्चिन्त्य चैवं सोऽन्यगूढपुरुषमुखेन तमेकदा तथाऽसूसुचत्। सोऽपि प्रभूतद्रव्यलाभसम्भावनालालायितहृदयः घटिकाद्वयपर्यन्तं स्वामिनो

मुद्रां दातुमङ्गीचकार ।……ततः केनापि सुलेखेन परमविश्वासपात्रेण शिष्येण—"श्रीमतां समस्तोत्तरभारतवर्षीयराजमण्डलचुम्बितचरण-कमलानां परमप्रतापशालिनां पर्वतेश्वराणां सन्निधौ—

पाटलिपुत्राद्राक्षसस्य सादरा नमस्कृतयः। ……सुविदितैव स्यात् चारचक्षुषां श्रीमतां मगधसाम्राज्यस्यास्माकीनस्य प्रत्यहं वर्द्धमानाऽ-व्यवस्था ।….अन्तःपुरैकशरणस्य स्वामिनो विषय उद्विग्ना प्रजात्रत्यान्यं स्वकर्तव्यपालनतत्परं प्रभुं सम्मानयेत् इति निपुणं पर्यालोच्यायं भवतां सुहृत् स्वयमेव मगधप्रजाया इमामिच्छां पूरयितुं सन्नद्धो युष्माकं साहाय्यमेतेन पत्रेण याचते ।……भवत्प्रभावेणैव सफलीभूत-मनोरथोऽहं भवद्वशंवदः स्यामिति ज्ञायेत एवाकथितमपि ।……अस्मिन् सर्वकल्याणपर्यवसायिनि परिवर्तने पाटलिपुत्रस्था सर्वा मगधसेनाऽनु-कूल्यमेव भजेत इति दृढो मम विश्वासः। अतः समीपासन्नमागधयौव-राज्याभिषेकमहोत्सवोपस्थितिमिषेण ततः प्रस्थितेन भवता जवनाश्वा-रूढेन स्वल्पेनापि बलोदग्रेण बलन सह……अभिषेकदिन एव राजधानी-प्राकारमहाद्वारं तडिद्वेगेनाक्रमणीयम्। आक्रमणक्षण एव तत्रत्याः मद्वशंवदाः रक्षाधिकृता अधिकारिणो भयचकिता इव……अकृत्वैव प्रतीकारं भवद्वश्यतां यास्यन्ति। वशीकृतसेनाबलयोरावयोः कृते तत उत्तरं यौवराज्याभिषेकमहोत्सवमग्नस्य स्वप्नेऽपि वज्रपातमेतादृश-मनुत्प्रेक्षमाणस्य मूढमतेर्धननन्दस्य ससुतस्य निमिषमात्रे विनिपातनं सुकरमेव सम्पद्येत। तत् सुनिपुणं विचार्य भवता स्वमनोऽभिप्राय एतत्—पत्रवाहकमुखेनैव भवत्सुहृदे निवेदनीयः। मन्त्रगुप्तिश्चाकथितापि भवत्—संमानार्हैव—इत्याशास्ते—

राक्षसः।"

इत्याशयकं पत्रमेकं पर्वतेश्वराय लेखयित्वा स द्विजवरस्तत् राक्षस-मुद्राङ्कितं व्यधात्। प्राहिणोच्च तत् सुगोपित कृत्वा कतिपयगूढवेषधारि-सैनिकसंरक्षितस्य दूतस्याऽत्यन्तिकविश्वासार्हस्य हस्तेन पर्वतेश्वराय।

अविरतं गूढश्च प्रवसन् स दूतस्तु विविधान् प्रदेशान् अतिक्रम्य कतिपयदिवसानन्तरमेव पर्वतेश्वरराजधानीमाससाद। विज्ञापयामास च राज्ञो दर्शनमेकान्ते। पर्वतेश्वरस्तु स्वामात्यसहितः एकान्ते संप्रेक्ष्य तं दूतं, पठित्वा तत्समर्पितं पत्रं, प्राक्तनवशादतर्कयन् घातसम्भवं, अनपेक्षितसुसन्धिलाभेनैव प्रमुदितहृदयः, मन्त्रयित्वा स्वमन्त्रिभिः सार्धं

रहसि, तैरनुमोदितः सर्वं मगधसाम्राज्यमेव स्वहस्तगतं मन्यमानः दूतं तमवदत्—'त्वं इतः प्रतिनिवृत्य स्वस्वामिनं ब्रूहि-अनतिक्रमणीया सुहृदिच्छा' इति ।

एतदनुकूलमुत्तरमादाय सजवं निभृतञ्च प्रतिनिवृत्तात् तस्मात् दूतात् सर्वं वृत्तान्तं विदित्वा नितान्तं तुष्ट आर्यश्चाणक्योऽन्तिमप्रहारबद्धपरिकरो मागधसाम्राज्याऽऽभ्यन्तरिकस्थितिविघटने दत्तचित्तो बभूव ।……… वर्द्धयामास च तथा………नियतिशप्तस्य सम्राजो मोहं स्वकर्तव्याव-धीरणस्य, अमात्यप्रमुखस्य दुर्विनिश्चेयसंकटाशंकोद्वेगं, सेनापतिप्रमुखस्य-राक्षसविद्वेषं यथाऽल्पीयसैव कालेन बलाढ्यं तत् समस्तं राज्यशासन-यन्त्रमुपजापजीर्णतामाससाद ।………सामान्यजनश्च प्रशासनिकाऽव्य-वस्थोद्विग्नः सम्राजमेवोत्तरदायिनं मन्यमानस्तत्परिवर्तमैच्छत् ।

कुमारश्चन्द्रगुप्तोऽपि भागुरायणं स्वविनीतवर्तनेन स्वानुकूलीकृत्य प्रात्यक्षिकानुभवलालसामिषेण सर्वां सेनाव्यवस्थां स्वयमेवावलोकयन् समस्तामेव सैनिकशक्तिं शनैः शनैः स्ववशंवदां व्यधात् । सेनाधिकृतेषु ये तावदमात्यप्रमुखपक्षपातिन आसन् तान् अतिदूरेषु साम्राज्यरक्षास्थलेषु दुर्गमप्रदेशावस्थितेषु न्ययुंक्त………तेषां स्थानेषु च स्वकीयान् स्वपरि-चितान् राजप्रासादरक्षाधिकृतान् । सम्राजः शरीररक्षकान् मागधान् सैनिकान् सुदूरेषु ग्रामेषु तत्तत्कर्त्तव्यकरणापदेशेन सम्प्रेष्य तेषां स्थानेषु स्वकीयान् बाल्यसहचरान् गृहीतमागधवेषान् प्रायुक्तं ।

संक्षेपतो—यावत् सम्राट् आत्मानं बलाढ्यतमभारतीयसाम्राज्या-धीश्वरं मन्यमानोऽन्तःपुरविलासमग्नः कर्तव्ये स्वीय औदासीन्यमभजत, यावच्च प्रधानामात्यः आसन्नस्वामिविनिपातविमोहितमतिर्दैनन्दिनानि राज्यकार्याण्यवलोकयन्नेवाऽऽत्मानं कृतकृत्यमन्यत तावत् राजनीति-निपुणश्चाणक्य उपजापनकौशल्येनानुपमेन, कुमारमेव यथार्थेन मगध-साम्राज्याधीश्वरं व्यधात् ।

समाज्ञापयच्च तं स्वकीयां व्यूहरचनामत्यन्तासन्नपरिपाकां विभावयन् उपदेशश्रवणमिषेणाऽऽगन्तुं देवालये माध्यमेन गूढवेषधारिणः स्वशिष्यस्य, तदनुसारं निशायास्तृतीये प्रहरे छद्मवेषेणागतं तं कथयामास व्यूहरच-नायाश्चरममध्यायम् ।

'वत्स ! पूर्णकल्पैवास्माकं व्यूहरचना । अस्य साम्राज्यस्य प्रधानतमा शक्तिः सेना तव वशंवदा । सर्वेष्वेव महत्त्वशालिषु पदेषु स्थानेषु च त्वया विनियुक्ता एवाभिन्नवृत्तयः स्वसुहृदः । सामान्याः प्रजाजना अपि स्त्रैणस्य

धननन्दस्य कुशासनेन सन्त्रस्तास्तस्य ससुतस्य विनिपातं रक्तरञ्जितमपि तव च प्रजानुरञ्जनशीलिनः साम्राज्याधीश्वरपदारोहणम् अनपेक्षितमपि स्वीकरिष्यन्तीति तर्कयामि। तेषां हि न्याय्ये शासनेऽनुरागो न तथा शासकविशेषे। नाऽप्ययं नन्दवंशसमुच्छेदोऽस्माभिः प्रकटं कर्तव्यः। तथा सति हि कदाचिद् रक्तपातदर्शनक्षुभितानां मागधानां साहाय्यं प्राप्यामात्यराक्षसोऽस्माकं समुच्छेदाय प्रयतमानो दुर्विजेय एव स्यात्। महती खलु तस्मिन् स्वामिभक्ते वंशपरम्परासेवके निखिलानामपि प्रजाजनानां भक्तिः। अहो! भाग्यमेवेदमस्माकं यदद्यापि सोऽस्माकमासन्नपरिपाकां व्यूहरचनां न पश्यति। मन्ये अवश्यम्भाविना नन्दकुलविनिपातेनैवास्य दृष्टिराच्छादिता। जानामि खलु तस्य बुद्धिवैभवम्। अतोऽस्माभिर्धननन्दः ससुतस्तथा कालकवलतां लम्भनीयो यथा सामान्या नागरिका अनेनाशनिपातेन सम्भ्रान्तमतयः पर्वतेश्वरमेव स्वामिप्राणापहारिणं मन्यमानास्तच्छासनार्थं प्रकटं प्रयतमानान् अस्मान् उपकारित्वेनैवाङ्गीकुर्युः। तेषां मनसि राक्षसस्य विषये स्वल्पा शंकाऽपि समुत्पादिताऽन्ततोगत्वाऽस्मद् हितायैव भवेत्। अद्य तावत् शुक्लपक्षस्य तृतीया तिथिः। आगामिन्यां पूर्णचन्द्रायां तिथौ धननन्दः स्वसुतस्य यौवराज्याभिषेकमहोत्सवप्रसङ्गेन राजसभायामुपस्थास्यति। तत् तावत् अन्तःपुरान्निर्गत्य महता समारोहेण सभामण्डपं गच्छन् सः सुतसहितो राजमार्ग एव वध्यः। प्रहारपातस्य नियतं स्थानमपि मया सुनिर्धारितम्। दैवहते धननन्दे राजमार्गं मृत्युमार्गञ्च शनैःशनैराक्रामति सति अस्माभिः कृतकपत्रेण प्रोत्साहितो मूढः पर्वतेश्वरः स्वल्पबलसहितः उत्सवव्यापृतं धननन्दं जीवग्राहं ग्रहीतुं प्राकारमहाद्वारमाक्रमिष्यति। तत्प्रतिरोधमिषेण भवता घातस्थानाद्दूरीभूय स्वशरीरं रक्षणीयम्। स्वल्पबलपरिवृतोऽनाशंकितचित्तः पर्वतेश्वरः सहसा बन्दीकरणीयः। अनभ्रवज्रपातव्याकुलचेतसां शृण्वतां भीतानां सामान्यप्रजाजनानां पर्वतेश्वरः समस्तकपटनाटकसूत्रधारत्वेनोद्घोषणीयः, राक्षसश्च तत्सहकारित्वेन। राक्षसस्य परमसुहृद एतेनैव कृतकापराधेन बन्दीकरणीयाः। एवं निहतनन्दस्य, पराजितपर्वतेश्वरस्य, निष्कासितराक्षसस्य तव साम्राज्यलाभस्तथा सम्पादनीयो यथा सामान्यजनानां मनसि संशयलेशमपि नोत्पादयेत्। एषा चाऽऽगामिनः कार्यस्य स्थूला रूपरेखा। इमामनुसृत्यैवास्माभिः स्व-स्वकार्ये प्रवर्तनीयम्। स्वल्पाऽप्यत्र त्रुटिः न केवलमस्माकं कार्यवैफल्ये, अपि तु जीवनसन्देह एव पर्यवस्येत्।'

कुमारोऽपि तत् सर्वं स्वीचकार सावधानेन मनसा, न्यवर्तत च स्वप्रासादम् ।

मुरा तु स्वपुत्रमुखादुपलभ्येमं वृत्तान्तं, समवलोक्य चाऽऽसन्नतमपातं खड्गप्रहारं भयाक्रान्तचित्तेव बभूव ।....वैरनिर्यातनस्यावसरं चिर-प्रार्थितं समीपतममुपस्थितं विलोक्याऽपि समुत्तेजनास्पृष्टहृदया विमन-स्केव....किङ्कर्तव्यताविमूढेव....तस्य घातप्रयोगस्य वैफल्यमेव प्रार्थयितु-मारभत। आर्यचाणक्याऽऽज्ञावशंदाया अपि तस्याश्चिरप्रार्थितोपनतं पतिसमागमं पुत्रसान्निध्यञ्च प्राप्य तृप्तहृदयाया आर्यपत्नीहृदयं पति-विश्वासघातप्रयत्नात् तां निवर्तयितुं प्रारभत। यथा यथा च समीप-तरमाससाद सा पौर्णिमा तिथिस्तथा तथाऽवर्धत तस्या अन्तःकलहश्चि-त्तसन्तापश्च ।

चिन्तयितुमारभत च तीव्रान्तर्द्वन्द्वविदीर्यमाणमानसाऽनिशं 'अहो दैवस्य वक्रा गतिः ।.......एवमनेकयुगकल्पसंवत्सरानन्तरं मामभागिनी-मार्यपुत्रेण वत्सेन च सह संगमय्य, असहमानमिव मम मानसोल्लासम् अधुना द्वाभ्यामपि मां वियोजयितुं संचेष्टते। अथवा किमिति दैवमुपा-लभे ?.......स्वयमनुसृताया एव दुर्नीतिरवश्यंभावि फलमेतदुपनतम् ।.... मया हि वत्सापहरणपराभवदहनदह्यमानमानसयाऽऽत्मानं विनष्टकोमल-भावं मन्यमानया—समुपेक्ष्य नारीस्वभावमेव—तिरस्कृत्य ललनाहृदय-सौकुमार्यं......तस्य परमकुटिलस्य निर्दयस्य विप्रस्य हस्ते काष्ठपुत्तलि-काभावमुपेतया निर्घृणया बालकस्वभाव आर्यपुत्रः स्वलावण्यमायया वञ्चयित्वाऽत्राऽऽनीतः, परिहृतान्यसम्पर्कश्च स्थापितः। पुत्रकमक्षत-शरीरं पुनर्लब्ध्वाऽपि तत्साम्राज्यलाभलोभेन कदर्थ्यमानहृदया तस्य पाषाणहृदयस्य विप्रब्रुवस्य कपटनीतिमन्वसरमेव ।......हन्त ! अस्य समीपतरासन्नस्याशनिपातस्यावलोकनात् पूर्वं क्षणमपि मया न तर्कित-मासीद्यत् मनोरथसाफल्यप्राङ्गणवर्ति मम मनः एवं दूयेत—इति। चिरात् खलूपनतं पतिसुखमहर्निशमुपभुज्य कथमहं वज्रमयीव तस्यैव नाशमात्यन्तिकं साक्षात् कुर्याम् ?......कथयिष्यामि किं......आर्यपुत्रं सर्वमपि वृत्तान्तम् ? किं खलु मंस्यते स ममैतां कपटनीतिं विज्ञाय ?.... अपि स मां क्षमिष्यते ? उत प्रचण्डक्रोधो मां मम पुत्रकञ्च निर्दोषम् आजीवनं कारागारे निक्षिपेत् ? किं वदिष्यन्ति जनाः प्रवृत्तां पतिहत्यायां मां यथार्थतो विज्ञाय ? किं करोमि मन्दभाग्या ? यदि न कथयामि तर्हि पतिहत्यायाः पातकम् ।......अथवा एतावतीं परिपक्वावस्थां प्राप्तस्य

भीषणस्यैतस्य कपटव्यूहस्य समुद्घाटनेन नूनमपाय एव भीषणतमो भविता।......दुःस्वप्नेऽप्यवितर्कितं मम कपटव्यवहारमकस्मात् साक्षात्कृत्य क्रोधान्धः आर्यपुत्रोऽविगणय्य मम पश्चात्तापं......नूनं मां मत्पुत्रकञ्च तथा दण्डयेत् यथा जीविताशैव दुराशा भवेत्, किं पुनर्भाग्योत्कर्षाशा! तर्हि किमवश्यंभाविनीं पतिहत्यामुभयलोकविरुद्धां तूष्णींभावेनानुमोदमाना पापभागिनी भवेयम्? कोऽन्य उपायः? पापनीतेरात्मनः फलमुपभोक्तव्यमात्मनैव। पुत्रकस्य तु मम निरपराधस्योत्कर्ष एतावता सुनिश्चितः स्यात्! अथवा दृष्ट एक उपायः। राजसभागमनादेव निवर्तयिष्याम्यार्यपुत्रं केनाप्यपदेशेन तस्मिन् दुर्दिने। तथा सति आर्यपुत्राणां प्राणा अपि संरक्षिता भवेयुः, रहस्यमपि मम नोद्घाटितं भवेत्। तदनन्तरं तु यथा परिस्थितिः परिणमेत् तथा करिष्यामि। अपि नाम आर्यपुत्रा मम प्रार्थनां तस्मिन् समयेऽङ्गीकृत्य मामस्या आपदः समुद्धरेयुः?

विचिन्त्य चैवमभागिनी सा योग्यमवसरं लब्ध्वा स्वपतिं साश्रु विज्ञापयामास, 'न जाने किमिति......परन्तु दारुणा ममाऽऽशंका यन्मां मन्दभागिनीमिह विहायेतो गत आर्यपुत्रः न पुनरिहागमिष्यति इति। तत् स्वीकरणीय एको ममानुरोधः, यौवराज्याभिषेकमहोत्सवार्थमितः प्रस्थानस्य संकल्प एवार्यपुत्रेण त्याज्य', इति। धननन्दस्तु तस्यास्तां विज्ञप्तिं निशम्य परं विस्मितस्तत्र कारणं पप्रच्छ। परन्तु वास्तविकं कारणं निवेदयितुमसमर्था म्लानमुखारविन्दा सा वराकी विज्ञप्तिमेव स्वकीयां वारं वारम् अश्रावयत्। साक्षादन्तकेनाहूयमानस्तत्पतिस्तस्यास्ताम् आशंकां प्राणाधिकपतिप्रेमप्रेरितां विभावयन्, तामङ्के गृहीत्वा मुहुर्मुहुराश्वासयामास—'सुमाल्यं यौवराज्येऽभिषिच्य राजसभायाः प्रतिनिवृत्तस्तवैव, मुग्धे'! 'अन्तःपुर आगमिष्यामि' इति, न जहौ तु यौवराज्याभिषेकमहोत्सवदिवसे राजसभागमनसंकल्पम्।

एवं स्वपतिं संकल्पपरिवर्तनार्थं पुनः पुनः प्रार्थयन्त्यास्तस्या अभागिन्याः समीपागतयौवराज्याभिषेकमहोत्सवायोजनव्यापृतचित्तस्य राक्षसस्य, सर्वानपि स्वपक्षपातिनः प्रतिपक्षिणश्च जनान् चारदृष्ट्या निभृतं निरीक्षयत आर्यचाणक्यस्य चाऽतीतानि......अलक्षितान्येव द्वित्राणि दिनानि।

सप्तम्याञ्च तिथौ स विप्रवरः स्वपक्षपातिप्रमुखं सुवर्णदासनामानं

श्रेष्ठिप्रमुखं समाहूय रहसि जगाद, 'श्रेष्ठिन्', नगरवणिजश्चन्दनदासस्य प्रासादस्य समीपवर्ती कश्चित् प्रासादः क्रय्य इति श्रूयते। भवता सः कृतकनामधारिणा धान्यसञ्चयार्थं किल ग्राह्योऽद्यैव। तस्मिंश्च धान्य-गोणीसञ्चयमिषेण स्फोटकचूर्णपूर्णाः पर्याप्ताः गोण्यः निशीथे स्थापनीयाः। मत्प्रदत्तानां श्रमिकवेषधारिणां गूढपुरुषाणाञ्च साहाय्येन चन्दनदास-प्रासादाग्रभागयायिनः राजमार्गस्याधस्तादेव महती सुरंगिका कार्या। तत उत्खनिता मृत्तिका स्थानान्तरं नीयमानानां धान्यान्तरगोणीनां व्याजेन तस्मात्प्रासादात् बहिर्नेया। सा च सुरंगिका ताभिः स्फोटक-द्रव्यगोणीभिः परिपूरणीया। सर्वञ्चैतत् सामान्यजनसन्देहमनुत्पादयता कार्यम्'।

स श्रेष्ठी तु नगरश्रेष्ठिपदलाभलोभकदर्थितहृदयः सर्वं यथानिर्देश-मन्वतिष्ठत्......न्यवेदयच्च कार्यानुष्ठानमार्यचाणक्याय। सोऽपि निशि तस्यामेव कृतवेषपरिवर्तः कृतकवणिक्पुत्रवेषधारिणा चन्द्रगुप्तेन सह तस्मिन् प्रासादे गतो धान्यागाररक्षकवेषधारिणा चन्द्रगुप्तसुहृदा खड्ग-धारिणा यूना प्रदत्तप्रवेशोऽभ्यन्तरं प्रविश्य राजमार्गस्याधस्ताद्व-र्तिनीं स्फोटकद्रव्यपरिपूर्णां तां सुरंगिकां सुचिरं परीक्ष्य स्वसन्तोषं व्यञ्जयामास।

ततः स्वनिवासं प्रत्यागतश्च राजप्रासादं प्रतिनिर्वर्तितुमुद्यतं कुमारं निभृतं जगाद—'अल्प एव कालोऽवशिष्टोऽधुना। एतस्मिन्नन्तरेऽस्मा-भिरत्यन्तं सावधानतया वर्तमानैरवशिष्टानि कार्याणि समापनीयानि। ......त्वं तावत् स्वाभिन्नवृत्तीन् यूनः कांश्चित् मगधसैनिकवेषान् तस्या एव सुरंगिकायाः समीपे जनसम्मर्दमिश्रितान् गूढं स्थापय।...... आज्ञापय च तान्—यः कोऽपि नाम अस्यां विस्फोटविदारितमुखायां पतेत् स पर्वतेश्वरविजयोद्घोषपुरःसरं खड्गप्रहारेण कृतान्तातिथिः कर्तव्यः' इति।

स्वकर्तव्यपालनदक्षश्च कुमारस्तत् सर्वं 'यथाऽऽज्ञापयन्ति गुरुवर्याः' इति वदन् अङ्गीचकार।

उर्वरितानि दिनानि तु दारुणान्तर्द्वन्द्वविदीर्यमाणान्तःकरणायाः अभागिन्याः मुरायाः यौवराज्याभिषेकमहोत्सवव्यवस्थानिरीक्षणव्यापृत-स्यापि दुर्विनिश्चेयस्वरूपसंकटाशंकाकुलस्यामात्यराक्षसस्य, मागध-साम्राज्यलाभदुराशोल्लसितान्तःकरणस्य पाटलिपुत्रमुद्दिश्य स्वल्पेन

बलेन सह प्रवसतो वृद्धस्य पर्वतेश्वरस्य, भयङ्करं राजकुलविनाशं स्वप्नेऽपि अतर्कयतः प्रचलितयौवराज्याभिषेकमहोत्सवपरम्परावलोकनमात्रकुतूहलिनो मागधप्रजाजनस्य, स्वप्रतिज्ञापूर्तिसमयं चिरप्रतीक्षितमुपनतप्रायमवलोक्यापि अनुत्तेजितस्य धीरगम्भीरस्यार्यस्य चाणक्यस्य, अश्रुतपूर्वकपटकुटिलराजनीतिप्रात्यक्षिकप्रयोगसाक्षात्कारप्रयोगकुतूहलिनः स्वगुरुदेवाज्ञापालनदक्षस्य चन्द्रगुप्तस्य······स्वपुत्रस्य यौवराज्याभिषेकं सम्पन्नकल्पमनुभवन्त्या आसन्नवज्रपातानभिज्ञायाः सुमाल्यमातुश्च······युगकल्पान्येव व्यतीतानि ।

—:*:—

## पञ्चदशः परिच्छेदः

प्रादुरासीच्च……आर्यचाणक्येन सात्मविश्वासं, दुराशाकदर्थितेन पर्वतेश्वरेण साकांक्षं, दुर्दम्योत्साहसम्पदा चन्द्रगुप्तेन सकौतूहलं, विगलितधैर्यया मुरया सभयम् अपेक्षितः, दक्षंमन्यमानेनामात्यराक्षसेन नियतिव्याहतमतिना च धननन्देन स्वप्नेऽप्यनुत्प्रेक्षितघटनाक्रमो, दिवसः यस्मिन् तिरस्कृतं ब्राह्मं तेजः स्वसामर्थ्यमनन्यसाधारणं प्रकटयामास।

अथ संसूचयतीव दिव्यतेजोद्वये युगपद्व्यसनोदयाभ्यामागामिनं नन्दवंशविनिपातं मौर्यवंशोदयञ्च……सञ्चरति मन्दं मन्दं गूढकपटव्यूहशंकित इव प्राभातिके मातरिश्वनि, शब्दायमानेषूच्चैरागामिघोरसंकटमुत्प्रेक्षयत्स्विव सद्यःप्रबुद्धद्विजकुलेषु, प्रचलितचिरप्रतीक्षितयौवराज्याभिषेकमहोत्सवप्रमुदितान्तःकरणेषु स्व-स्व—कार्यजातं कथञ्चित् समापयत्सु त्वरितहृदयेषु पाटलिपुत्रनागरिकेषु, महोत्सवामन्त्रणस्वीकारव्याजेनाऽऽगत्य नगरबहिःप्रदेशकल्पितस्कन्धावारस्थिते मगधेश्वरं जीवग्राहं गृहीतुं स्वसैनिकसन्नाहं गूढं परिकल्पयति पर्वतेश्वरे, दन्दह्यमानपश्चात्तापानलदग्धहृदयाया अनवरताश्रुपातम्लानमुखारविन्दाया अवसन्नगात्राया मुराया अस्फुटाक्षरां प्रार्थनां सहस्रवारं श्रुतपूर्वां सहासमवधूय राजसभामण्डपगमनार्थमात्मानमलङ्कुर्वति धननन्दे, अलक्ष्यमाणविशेषे प्रतिज्ञापूर्तिधीरे परिपूज्य यथानियममिष्टदेवतां मन्दं मन्दं घातस्थानं गच्छति द्विजश्रेष्ठे……उदगादकस्मात् विस्फोटयन्निव श्रुतिरन्ध्राणि, प्रोद्घोषयन्निव नन्दवंशपातं, कथयन्निव गलितगात्रां वराकीं मुरां दैवस्य यत्किञ्चनकारितां, बोधयन्निव मोहनिद्राविमूढं धननन्दं, युगपत्प्रहतानेकमङ्गलवाद्यरवानुसृतः पटुः पटहध्वनिर्यस्मिन् शब्दमयमिवाम्बरतलं भीतोत्पतितपतत्रिमयमिव गगनं, युगपच्चलितपदातिसहस्रपादाहतोत्थितधूलिमयमिव दिक्चक्रं बभूव।

अचिरादेव कथमपि समाप्य स्व-स्व-व्यापारान् समुपस्थितैः राजकीयशोभायात्रावलोकनकुतूहलिभिः नरनारीजनैर्मानवमय इव राज-

मार्गः, रमणीमया इवाभ्रंलिहः प्रासादाः सोल्लासमुखालङ्कृतानि कमलमयानीव वातायनानि बभूवुः ।

अचिरादेव सुतीक्ष्णखड्गधारिभिरश्वारोहिभिः सैनिकैर्महाप्रमाणैः परिवृतः, कवचावृतकायः, विविधशस्त्रोदग्रविग्रहः, नवतारुण्योत्साहविलसन्मुखमण्डलः, श्वेताश्वारूढः, क्षात्रप्रताप इव मूर्तिमान्, चिरपरिचितैरपि सकौतुकमीक्ष्यमाणः नागरिकैः, कुमारश्चन्द्रगुप्तः नृपतिसभाजनार्थं मुरादेव्याः अन्तःपुरं विवेश ।

अचिरादेव च मगधेश्वरः पटहध्वनिना सममेवोपस्थितस्य राजपुरोहितस्याभ्यर्थनामङ्गीकृत्य, गाढमाश्लिष्य, सुचिरं परिष्वज्य, सुदीर्घं परिचुम्ब्य, सस्नेहमाश्वास्य च संततरोदनारक्तनयनां मुरां प्रयाणोन्मुखो बभूव ।

तस्य तु तेन प्रेमार्द्रेणाश्वासनेन परिहृतधैर्यावशेषायाः, 'किमहं करोमि', 'कीदृग् वा परिणाम एतस्य भविता' इत्यविचारयन्त्याः, केवलं 'मय्येतावद्विश्वसन्नाथः परिरक्षणीयः स्वप्राणानपि आहुतीकृत्य' इत्युत्तेजितेनार्यपत्नोभावेन प्रेरितायाः 'नाथ, नाथ' इत्येवाक्रन्दन्त्या, अग्रतो यायिनं पतिमावेगकम्पमानाभ्यां बाहुभ्यामालिङ्गनव्याजेन गमनान्निवारयन्त्या एव तस्याः पपाताश्रुविलुलिता दृष्टिः सम्मुखमुपस्थितस्य प्रत्यग्रकुंकुमतिलकशोभमानविशालभालपट्टस्य धीरगम्भीराकृतेः सावधानमुद्रस्य स्वसुतस्योपरि ।

तमवलोक्यैव विलीननिश्चया किंकर्तव्यता—विमूढा शुष्यदानना किञ्चिदपि वक्तुमसमर्था सा भाग्यहीना ललना स्वपतिमाश्लिष्य चिरं रुरोद ।

धननन्दस्तु तां वृथाशंकाकुलां विभावयन् स्मेरमुखःस्तां भूयोभूयः समाश्वासयामास । न्यूनीकर्तुञ्च तच्चिन्तावेगं जगाद—'सत्यमेव, राज्ञि, ते भ्रातुः पुत्रः अयं चन्द्रगुप्तः विविधराज्यकार्यकुशलः संवृत्तः एतावता कालेन ।······'यौवराज्याभिषेकमहोत्सवात् प्रतिनिवृत्याद्यैव नूनमेनं सुयोग्ये महत्यधिकारपदे नियोक्ष्यामि' ।

तच्चतत् मर्मदाहकं पतित—वचनमाकर्ण्य प्रवृद्धापारशोकावेगा यावदात्मानं सा पर्यवस्थापयति तावदेव स नियतिहतः सम्राट् प्रतिहारिणोपदिश्यमानमार्गः कुमारेण चन्द्रगुप्तेन प्रधानराजपुरोहितेन चानुगम्यमानस्तदन्तःपुरान्निर्जगाम । आरुरोह च सम्मुखमागतेनामात्यवरेण्येनाभि-

वन्दितः, समुपस्थितैः विप्रवरेण्यैरुच्चैराशीर्वचनैरभिनन्दितः, अन्तःपुरिकाजनपरिवृतया महार्हभूषणमण्डितया सौभाग्यालङ्कारभूषितया सुमाल्यजनन्या समुल्लसितवदनकमलया कृततिलको नीराजितश्च, सदृशवेषधारिभिः विविधरत्नभासुरालङ्कारालङ्कृतैः आनुवंशिकराजतेजोदीप्तमुखैरपि विविधव्यसनक्षीणशरीरैः नवभिः कुमारैः नमस्कृतः, प्रासादाङ्गणवर्तिनीं मण्डितां हस्तिनीम्।

चचाल च सुमाल्यसहितः महाप्रमाणासिताश्वारूढैः लौहकवचधारिभिः सुतीक्ष्णभल्लहस्तैर्भटैरुद्भटवीरैः रक्षितोभयपार्श्वः, महामात्येन सेनापतिप्रमुखेणान्यैश्च विशिष्टैः राजपुरुषैरनुगम्यमानो यौवराज्याभिषेकमहोत्सवस्थानं गन्तुम्।

उदगाच्च तस्मिन् क्षणे सम्राजः प्रस्थानं संसूचयन् महान् तूर्यध्वनिः।

एवं महताऽऽडम्बरेण राजप्रासादान्निर्गतः सः सम्राट् स्वीकुर्वन् पुरन्ध्रीणां लाजावर्षाः, ससाध्वसं कृतावगुण्ठनानां रमणीनां कटाक्षपातान् अतुलितोत्साहमुखराणां बालकवृन्दानां जयशब्दान् श्रुतिसुखदान् यावत् स्तोकं राजमार्गमाक्रामति तावदेव कश्चन प्रजविनं घोटकमारूढः, स्वेदबिन्दुचित्रितभालपट्टकः, प्रधावितघोटकमुखनिपतत्फेनततिभिः मार्गं सर्वं फेनमयमिव कुर्वन् राजदर्शनोत्सुकानां कृतसंमर्दानां नरनारीजनानां जीवितमगणयन्, उत्तेजितः एक अश्वारोही गजारूढममात्यप्रमुखं समुपसृत्योन्नामितकुन्ताग्रखचितं पत्रमेकं विस्मिताय तस्मै ददौ।

राक्षसस्तु ततो विज्ञाय 'मगधेश्वरं विलासपङ्कमग्नं प्रजाजनेष्वप्रियं ज्ञात्वाऽस्मिन् उत्सवव्यापृते समये तमकस्मात् जीवग्राहं गृहीत्वा न्यायापदेशेन ससुतं तं यथासमयं विनाशमात्यन्तिकं प्रापय्य, स्वयं मगधसाम्राज्यलक्ष्मीमपहर्तुं कृतदुःसंकल्पः कपटी पर्वतेश्वरः संख्याक्षुद्रेणापि कृतमरणसंकल्पदुःसहसामर्थ्येनाश्वारोहिसैन्येन सहितः.....सम्प्रति भाग्यवशात् समुपजातशंकैः नगररक्षाधिकृतैर्महता सम्भ्रमेण पिहितं पुरप्राकारमहाद्वारं प्राणपणेन भेत्तुं प्रयतत' इत्यशनिपातसमं वृत्तं, क्षणं किंकर्तव्यताविमूढोऽविलम्बमेवाऽऽत्मानं नियम्य, हस्तिस्कन्धात् सत्वरमवतीर्य, प्रजविनमन्यमश्वमारुह्यातिवेगेन राजशोभायात्राविपरीताम् आशामङ्गीकृत्य, समुपजातपरचक्रसंकटं महानगर्या महाद्वारं समुद्दिश्य दधाव".....तं निभृतमनुसरंश्चाश्वारूढश्चन्द्रगुप्तः सावधानः।

इत्थमाकस्मिकीमेतां विपदं,—अकथयित्वैव सम्राजे, अनुत्तेज्यैव

महोत्सवोदधौनिमज्जन्तं सामान्यनरनारीजनं, निभृतं शामयितुं प्रधावति जवनाश्वाधिरूढेऽमात्यवरेण्ये, स्वस्वामिनं ससमारोहं सभामण्डपं गच्छन्तमर्धमार्गे विहाय तथा ससम्भ्रममपसृत्य कुत्रापि त्वरया गच्छन्तं तमवलोक्य परं विस्मितेषु सत्यमुदन्तं स्वप्नेऽप्यनुत्प्रेक्षमाणेषु दर्शकगणेषु किमपि किमपि स्वैरं परिकल्पयत्सु, विविधतोरणालंकृतं राजपथं शनैः शनैराक्रामन्ती, सम्राजं सुमाल्यञ्च वहन्ती, विचित्रकम्बलावृतकलेवरा सा हस्तिनी सुवर्णदासनिर्मितस्योत्तुंगस्य महापथोभयपार्श्वपरिचुम्बिनोऽनेकवर्णकाचभाण्डमण्डितस्य स्वागततोरणस्य पुरः समाजगाम....तदनु च अन्ये गजाः ।

यावच्च समुल्लसितमानसो मगधाधिपोऽदृष्टपूर्वरचनामनोहारिणस्तस्य तोरणस्य शोभामभिनन्दयति तावदेवोदगात्....अकस्मात् कस्मादपि स्थानात् अपरिलक्षितात् धीरगम्भीरः कम्पयन् श्रोतृहृदयानि, आह्वयन्निव यमम्, आर्तनाद इव नन्दवंशसौभाग्यलक्ष्म्याः, उच्चैः कोऽपि शंखध्वनिः ।

पपात चाकस्मात् तत्समकालमेव भूमौ तदद्भुतं तोरणम् ।

द्विधा बभूव च तत्समकालमेवान्तःस्थापितस्फोटकद्रव्यचूर्णप्रज्वलनस्फुटिता तदाधारभूमिः भयंकरस्फोटध्वनिप्रकम्पितदशदिशम् ।

पपात च निमेषमात्रानन्तरं मृत्युभयविमूढः स भाग्यहीनः नृपः स्वतुल्यभागधेयैः नवभिः अपि स्वसुतैः सह तस्मिन्नतिगम्भीरे, विवृत इव यममुखे, विशाले भूगर्ते ।....तेन सहैव चापतन् तस्याभितो गच्छन्तोऽनेके राक्षसपक्षपातिनो विशिष्टाः राजपुरुषाः । छिन्नमस्तकाश्च पतनसमकालमेव गर्तान्तःस्थितैरार्यचाणक्यपूर्वनियुक्तैः कपटसैनिकवेषधारिभिः कृतान्तदूतभीषणैः खड्गधारिभिः सैनिकैः 'सम्राट् पर्वतेश्वरो विजयताम्' इति तुमुलमुद्घोषयद्भिरन्तकसदनातिथयोऽभूवन् स्वामिना सह ।

इतरे तु मंगलमहोत्सवेऽकस्मात् – ईश्वरप्रकोपादिव-घटितमश्रुतपूर्वसदृशं निपतिताहतगजचीत्कारतुमुलं हन्यमाननराक्रोशभयंकरं समग्रराजकुलसंहारं साक्षात्कृत्यानामकभयपरिवेपितान्तःकरणाः, दिग्भ्रान्ता इवेतस्ततो धावन्तः, केचन तस्मिन्नेव रक्तमांसकर्दमभयंकरे वेदनावेगलुण्ठत्करचरणमुण्डकबन्धभीषणदर्शने गर्ते निपतिताः, तदन्तःस्थितयमदूततीक्ष्णखड्गलक्ष्यतामवाप्नुवन्....अपरे च क्षुभितहस्तितुरगबलपादनिर्दलितकलेवरा राजमार्गे मर्मान्तकया पीडयाऽलुण्ठन् ।

मुरादेवी तु स्वान्तःपुर एवाशनिपातघोरं तमुदन्तं प्रतिक्षणमुत्प्रेक्ष-

माणा, तीव्रतमान्तर्द्वन्द्वविदीर्यमाणहृदयकमलाऽकस्मादुद्भूतं विदारयन्तमिव ब्रह्माण्डं, भयंकरं स्फोटध्वनिं निशम्य, एकपद एव विरतं पटहादिमङ्गलवाद्यनिर्घोषमवगत्य सञ्जातशंका भयविक्लवा वेपमानगात्री, सावेगमाहूय महार्हपटाच्छादितामेकां शिबिकां, तद्वाहिन आज्ञापयामास त्वरितया गत्या गमनार्थं यौवराज्याऽभिषेकमण्डपमुद्दिश्य मगधेश्वरगतेनैव मार्गेण। अतिजवेन धावत्सु च तेषु चिन्तयामास,"" किं सत्यमेव दैवहतकेन सौभाग्यतिलकः मम परामृष्टः स्यात् ? अथवा अधुनाऽपि शीघ्रतमं प्रधाव्य आर्यपुत्रं मार्ग एव दृष्ट्वा, तं भाविसंकटनिवेदनेन निवर्त्तयितुं समर्था स्याम् ? न जाने स मेकुत्सितमाचरणं यथार्थतो ज्ञात्वा किं करिष्यति। भवतु नाम यद्भावि। अहं तु विधूय सर्वमपि मोहपाशम् अविगणय्य परिणामविशेषं येनकेनाप्युपायेन पतिं निवर्तयिष्याम्येव कृतान्तमार्गात्। अपि स मम भाग्यवशादद्यापि जीवितो भवेत् ? अहो भयङ्करता तस्य स्फोटध्वनेः ! स्मृतः अधुनापि बधिरयति। कथं पिपीलिकागतय इव गच्छन्तीमे त्वर्यमाणा अपि शिविकावाहकाः। अथवा एवं जनसंमर्दोकुलाकुलेन मार्गेण त्वरितं गमनमपि अशक्यप्रायमेव। अहो व्याकुलता नागरिकाणाम्। भयविवर्णा आशंकातरलनयना यत्रकुत्रापि पलायमाना राजकीयामपि शिविकां न गणयन्ति। किमिवैषां एतादृगुत्तेजकं कारणं घटितं भवेत् ? कीदृशः खलु एष विजयघोष इव श्रूयते ? अपि नाम स्वामिभक्तेनामात्यवरेण्येनादित एव सर्वां कपटव्यूहरचनां जानता आर्यपुत्रः प्राणसंकटाद्रक्षितो भवेत् ? तथा सति तु मम पापायाः प्रायश्चित्तानुशीलनमेव प्राणान्तिकमवशिष्यते।'

विचारयन्त्यामेव तस्यामेवं व्याकुलचित्तं किमपि किमपि, अतिनिविडजनसंमर्दस्थगितगतयः शिबिकावाहिनोऽधोऽवतार्यं शिबिकां 'इतः परं पिपोलिकायै अपि मार्गलम्भोऽशक्यप्राय' इति विज्ञापयामासुः। मुरा तु तन्निशम्य बहिर्निगत्य कृतेषदवगुण्ठना, सजवं तं व्याकुलं जनसंघट्टं प्रविश्याग्रे सरन्ती महता प्रयासेन महाकालताण्डवरङ्गमञ्चं तद्घातस्थानं प्राप। अपश्यच्च स्वपुरतो मूर्तिमन्तमिव स्वदुष्टाकांक्षापरिणामं विशालं गम्भीरं निपतितविनाशितनरगजाश्वकलेवरखचितं प्रवेशद्वारमिव नरकस्य, विवृतं मुखमिव कालस्य लोकक्षयप्रवृत्तस्य, महान्तं गर्तमेकम्।

भयविभ्रान्ततारकं परिशुष्यन्मुखं निर्निमेषञ्च तं ध्यायन्त्याः जडायास्तस्याः कर्णपथमायाता कस्यचित् समीपवर्तिनः पुरुषस्य मन्द्रा वाणी —

'अवलोकय, देवि, स्वप्रतिज्ञापूर्तिमहोत्सवम्, अवलोकय तं स्त्रैणं धननन्दं रक्तमांसवसापङ्के विलुण्ठन्तम्। तस्य समीपमेव चाप्रतिबोधार्थं शयानं 'युवराजं' सुमाल्यम्। अपि सन्तुष्टाऽसि''''मानिनि वैरप्रतिशोधनेन' इति तामेवोद्दिश्य स्वैरमिव गदन्तीम्।

श्रुतपूर्वामिव तां परिकलयन्त्याः, झटिति परावर्तितमुखायास्तस्या दृष्टिपथमागता एकस्य गृहीतसामान्यविप्रवेषस्यापि दुरपह्नवनीयसाधारणव्यक्तिमत्वस्य ज्वलन्नेत्रस्योत्तेजितस्य द्विजस्याकृतिः।''''अयं सोऽस्य सम्पूर्णस्य पापस्य कपटनाटकस्य रचयिता—यस्य वश्यतामङ्गीकृत्याहं एतादृशं निर्घृणं कृत्यमकरवम्।' इत्याकस्मिकविचारदग्धहृदया सा अकस्मात् उच्चैराक्रोशितुमारभत''''कुटिल ब्राह्मणाधम!' इत्थमकस्मादेवारब्धाक्रोशां विस्फारितनयनामुन्मत्तप्रायां तामवलोक्य, तस्यास्तादृशाऽऽकस्मिकचित्तपरिवर्तनविस्मित आर्यश्चाणक्यो निमेषावसरे नियम्यात्मानं स्वसमीपवर्तिनं कृतछद्मवेशं स्वसैनिकमक्ष्णाऽऽदिशत्।''''अपातयच्च तां हतभाग्यां तडिद्वेगेन तस्मिन् भयङ्करे गर्ते प्रसारितबाहुलतां निःसहाम्। अगमयच्च तां व्याकृत्तमस्तकां पतनक्षण एवान्तःस्थितेन खड्गहस्तेन गूढसैनिकेन तज्जीवनहतकस्य''''अन्तम्।

अमात्यवरेण्यस्तु एनमशनिपातसन्निभं स्वामिघातं स्वप्नेऽप्यनुत्प्रेक्षमाणः परचक्रनिवारणोपाययोजनायामेव व्यापृतचित्तः''''परैराक्रान्तं महाप्राकारस्य मुख्यं प्रवेशद्वारं महता वेगेन प्राप। तत्र च महाबलाधिकृतं भागुरायणमनुपस्थितमवलोक्य परं विस्मितः''' प्राकारं स्वयमारुह्य बहिरवलोकयन्''''महाद्वारबहिर्वर्ति स्वल्पं पर्वतेश्वरस्य बलमपश्यत्। आश्चर्यान्वितश्च मनस्यकरोत्—'अहो साहसं पर्वतेश्वरस्य''''यदेतावतैव बलेन मगधराजधानीमाक्रम्य जित्वा च मगधेश्वरं ग्रहीतुमुद्यतः। नूनं मूढः अचिरादेव मगधसेनाप्रतापाग्नौ शलभगतिं लप्स्यते।'''अवोचच्च स्वसमीपवर्तिसेनाधिकृतेष्वेकतमम्—'एतावतः बलस्याऽऽक्रमणेन भयविह्वला मगधसेना पिधाय गृहद्वारं किंकर्तव्यविमूढेव तिष्ठतीत्यहो लज्जास्पदमेतत्।''''क्व नु खलु युष्माकं सेनानीः भागुरायणः?''''नाहं जानामि' इति प्रत्युत्तरं प्राप्य प्रवृद्धतरकोपश्चापृच्छत्—'ननु युष्माभिरेवात्यल्पबलस्य शत्रोरुपरि सहसाऽऽक्रमणं किमिति न क्रियते?' 'अस्माकं सेनापतिप्रमुखेणाज्ञप्तं मम कुमारचन्द्रगुप्तस्य वाऽऽदेशं विना पर्वतेश्वरबलं न सम्मुखीकरणीयम्। केवलं पिधाय प्राकारमहाद्वारं सन्नद्धैः स्थातव्यम् इति। अत एवैतावतः स्वल्पस्य बलस्य सम्मुखं तूष्णीभावं भजामः।'

इति तस्य प्रत्युत्तरमाकर्ण्य कर्कशस्वरमादिशत्, 'अहं मगधेश्वरस्य प्रधानोऽमात्यो युष्मान् आज्ञापयामि—यत् उद्घाट्य महाद्वारमस्मिन्नेव क्षणे कुरुत आक्रमणम्' इति । स सेनाधिकृतस्तु तस्येमामाज्ञां निशम्य पदमप्यविचलितः 'सेनापतेरेव आज्ञा सैनिकैः प्रमाणीकरणीया इति सैनिको नियमः । अतः सेनापतेराज्ञामविगणय्य प्रधानामात्यस्याप्याज्ञायाः, विपरीतं समादिशन्त्याः, पालनं नियमविरुद्धम्' इत्येव प्रत्यवदत् ।

अननुभूतपूर्वं सेनाया एतत् अवशंवदत्वमनुभूय परं चकितः नियम्यात्मानं, प्राप्तायां परिस्थितौ किं नाम कर्तव्यम् -इति पर्यालोचयन् राक्षसश्च यावदात्मनैव 'किमयं भागुरायणोऽपि पर्वतेश्वरेणोपजापितः स्यात् ? परन्तु तथा सति महाद्वारं पिधाय पर्वतेश्वरसैन्यस्यैतद्वहिरेव रोधनं नोपपद्यते ।....यदि तु नोपजापितस्तर्हि कठिनेऽस्मिन् समये स समरसन्नद्धमपि स्वसैन्यं नैष्कर्म्याय समादिश्य कुत्र नाम गतः ?' इत्थं विचारयति तावदाजगाम तस्य कर्णपथं निनादयन् दिङ्मण्डलं कम्पयन् भूमण्डलं महान् स्फोटध्वनिः ।

तं महान्तं स्फोटध्वनिं, तत्कालपर्यन्तमस्फुटं श्रूयमाणानां पटहतूर्यादिविविधमङ्गलवाद्यानामाकस्मिकविरतिं, भयाकुलानामिवेतस्ततः पलायमानानामिवोच्चैः क्रन्दतामिव नागरिकाणां क्षुभितं कोलाहलञ्चाकर्ण्य-अकस्मादुद्विग्नतरचित्तः,—'किमिव नामापरमेतत् संकटमाकस्मिकं समापतितं स्यात् ? किमिव नामाशुभनिमित्तान्येतानि सूचयन्ति ? मां ततोऽपगतमवलोक्य नन्दवंशशत्रुभिः किमिव निर्घृणं कृत्यम् अनुष्ठितं भवेत् ?' इति चिन्तयन्नेव सः प्रजविनमश्वमारुह्यातित्वरयाऽऽगच्छन्तं, व्याकुलजनसंमर्दसंघट्टविदीर्णराजकीयवेषं धूलिधूसरसर्वाङ्गं भयकातरं स्वसेवकं सिद्धार्थकमपश्यत् ।

'किमिवायं निवेदयेत्' इति तर्कयति च तस्मिन् स सत्वरमुपसृत्यान्यजनश्रुतिं परिहरन् श्रमातिरेकापरिस्फुटाक्षरं भयाविस्पष्टवर्णं जगाद, 'स्वामिन् ! स्वामिन् ! अशनिरेवाद्य पतितो मगधसाम्राज्यस्योपरि । भवति परचक्रनिवारणेच्छयाऽर्द्धपथादेव इहाऽऽगते सुवर्णदासश्रेष्ठिप्रासादस्य पुरस्तादेव....पापैर्मगधेश्वररिपुभिः आदित एव गूढं विरचितां स्फोटकद्रव्यपूर्णां विशालां सुरंगिकां सहसा प्रज्वाल्यास्माकं स्वामी....ससुतः.... पश्यतां विस्मयजडानां नागरिकाणां निमेषावसरे यमसदनं प्रापितः । प्रकटीभूतगर्तान्तर्वर्तिनस्तेषां सैनिकाः गर्ते निपतितानां नरनारीजनानां

बालवृद्धानाञ्च शिरांसि हठात् छिन्दन्तः पर्वतेश्वरस्य जयं घोषयन्ति (किञ्चिद्विरम्य)····सक्रुच्च भवतोऽपि। तं जयघोषं निशम्य प्रायः सर्वे नागरिका अमानुषराजघातक्षुभिताः लुप्तप्रायविवेका अस्य क्रूरकृत्यस्य संयोजकं पर्वतेश्वरं····तत्सहायकञ्च भवन्तमेव मन्वाना भवन्तमेव ततोऽपसृतमन्वेषयन्तो महानगर्यां पर्यटन्ति। तद्यावदत्र नागच्छन्तीतः तावद् भवता नियम्य शोकं क्रोधञ्च·····'कथमयम् आत्मा प्राप्तपरिस्थितौ संरक्षणीयः इत्येव शीघ्रं चिन्तनीयम्। भाग्यवशात् भवतः परमसुहृदः श्रीशकटदासस्य प्रासादः समीप एव विद्यते। तदविलम्बमेव प्राणाधिकं तं सुहृदं शरणीकृत्यास्मिन् विषमे समये स्वामिनाऽऽत्मा निभृतं संरक्षणीयः।····किञ्चिच्छान्ते च जनसंक्षोभे स्पष्टतरीभूतायाञ्च रिपुव्यूहसंरचनायां कर्तव्यमग्रिमं पर्यालोचनीयम्—इत्यनुरोधः सेवकस्यास्य'।

राक्षसस्तु तदेतद्वृत्तमाकर्ण्यावाक्, तत् सर्वं श्रुतमप्यश्रुतमिव गृहीतमप्यगृहीतमिव, निःसन्दिग्धमपि सन्दिग्धमिव मन्वानो यावत्तं पुनः पुनः पृच्छति····तावदेव तस्य कर्णपथं समाययौ प्रतिक्षणं समुपसर्पन् महान् क्षुभितजनकोलाहलः। निशम्य च तं प्राप्तविषमपरिस्थितौ स्वसंरक्षणमेव युक्ततममिति विनिश्चित्य निस्तेजः, मुषितमिव, विप्रलब्धमिव न्यक्कृतमिवात्मानं गणयन्, प्रजविनमश्वमारुह्य झटिति सुहृदः प्रासादं ययौ सेवकानुसृतः।

कुमारश्चन्द्रगुप्तस्तु परचक्रवृत्तान्तोपलब्धिविस्मितममात्यराक्षसमनुचलितो विहाय जनसम्मर्दोत्फुल्लप्रासादततिं मार्गं मुख्यं, निर्जनेन मार्गेण केनचिच्छनैः शनैश्चलन् मार्ग एव चिरप्रतीक्षितं तं स्फोटध्वनिमश्रृणोत्।····'सम्राट् ससुतः नियतमेव गुरुवर्यक्रोधाग्नौ शलभगतिं प्राप्त' इति परिकलय्य च विनिवर्तिताश्वः, कञ्चित् कार्यविशेषमनुष्ठाय प्रत्यागच्छन्तमिवात्मानं सर्वजनसमक्षं प्रदर्शयन्, महता जवेन व्याकुलैरितस्ततः प्रधावद्भिर्नागरिकैः संकीर्णं राजघातस्थानं प्राप। एतादृशामानुषापराधक्रुद्धमिवात्मानं प्रकटयन् च स्वकर्तव्यपालनमिषेण तत्क्षणमेव गृहीताधिकारसूत्रः स्वसैनिकान् अत्याचारिपुरुषबन्धनार्थमादिशत्। स्वल्पयैव कालकवलया गर्ताभ्यन्तरे वर्तमानान् सर्वानेव नृशंसान् घातकपुरुषान् बन्दीकृत्य, राजकीये कारागृहे च विनिक्षिप्य, पश्यतां सामान्यप्रजाजनानां स्वविषयकमादरमनुरागञ्च दृढतरीचकार।

एवं नियम्य हत्याकाण्डलीलां, प्रशमय्य महान्तं जनसंक्षोभं स

कुमारः सभयं समुत्प्रेक्षमाणेषु संकटपरम्परां नूतनां सद्यःश्रुतपरचक्र-संकटवार्त्तासमुद्विग्नेषु प्रजाजनेषु अमात्यराक्षसमेवाऽऽभ्यन्तरशत्रुं संभाव्य मागधानां समुद्घोषयन् अपराधान्तरनिवारणापदेशेन सर्वानेव राक्षस-पक्षपातिनः प्रमुखान् नागरिकान् सेनाधिकृतांश्च स्थानबद्धान् विधाय, आरुह्य महाद्वारं प्राकारस्य, आदिदेश निभृतमेकामुत्तुङ्गवंशावलम्बिनीं रक्तपताकां कूटनिर्धारितसंकेतानुसारं चालयितुम् ।

तञ्च सङ्केतमधिगत्य, 'कथं नाम चिरयति अयममात्यराक्षसः ? अपि नाम नगराभ्यन्तरे किञ्चिदत्याहितं स्यात् ?' इति समुत्सुकायमानचित्तः पर्वतेश्वरः, समाश्वस्तः, मागधसाम्राज्यं प्राप्तप्रायं मन्यमानः, स्वसैन्येन सह महाद्वारस्य समीपमुपययौ ।

तञ्च समीपमागतं प्रहारार्हमवगम्य उत्तुङ्गप्राकारारूढः कुमारः आदित एव सन्नाहेनावस्थितान् स्वसैनिकान् रिपुं अनवरतबाणवर्षया शकलीकर्तुं समादिशत् ।

पर्वतेश्वरस्तु नितान्तमनपेक्षितां तां वर्षाम् अनुभूय परं विस्मितः, किङ्कर्तव्यताविमूढः 'किमयं राक्षसस्य विश्वासघातः ?····आहोस्वित् ज्ञातसर्ववृत्तान्तस्य मगधेश्वरस्य शासनोद्यमः ?' इति सन्देहाकुलः, कतिपयक्षणानन्तरमेव, प्रतिक्षणं न्यूनीभवत् असहायं स्वल्पबलं स्वबल-मवलोक्य, 'अस्यां परिस्थितौ पलायनमेव श्रेयस्करम्' इति विचिन्त्य युद्धपराङ्मुखो बभूव । तञ्च पलायंनपरायणमवलोक्य प्राकारशिखरात् सत्वरमवतीर्णः कुमारः प्रजवितुरङ्गमाधिरोहि बलमादाय, महाद्वारं समुद्घाट्य, पलायन्तं पर्वतेश्वरं महता वेगेनाऽऽचक्राम । गृहीत्वा तं जीव-ग्राहं पराभवमलिनमुखं कारागारे चिक्षेप, उद्घोषयामास चाऽऽकस्मिक-परचक्रसंकटनिवारणवार्त्तां निखिलेऽपि पाटलिपुत्रे ।

नागरिकास्तु नितान्तमनपेक्षितेन भयंकरेण तेन राजकुलसंहारेणाऽऽ-दित एवोद्विग्ना··अवश्यंभाव्यव्यवस्थाशङ्काकुलाः तत्रापि आकस्मिक-पराक्रमणभीताः तामुद्घोषणां निशम्य नितान्तं समाश्वस्ताः कुमारस्य कार्यनैपुण्यं पराक्रमं प्रत्युत्पन्नमतित्वञ्चाभिनन्दन्तोऽचिरादेव श्रुतिपथ-मापतितया 'यद्यप्येतादृशमभूतपूर्वममानुषं हत्याकाण्डमुभयलोकविरुद्धं स्वामिविश्वासघातञ्च साक्षात्कुर्वतां न्यायप्रियाणां स्वामिभक्तानां मागधानामस्मिन्नवसरे क्षोभः क्रोधस्तिरस्कारश्च स्थान एव····तथापि प्रधानामात्यस्यानुपस्थितावुपात्तसर्वाधिकारेण प्रधानसेनाध्यक्षेण भागुरा-

यणेन सर्वे प्रजाजना आश्वास्यन्ते यत्—'यैर्नामास्मिन् कुटिलषड्यन्त्रे स्वल्पमपि साहाय्यं प्रदत्तं स्यात्तेषां सर्वेषामपि–महत्तमपदाधिरूढानामपि निष्पक्षपातो दण्डो भविष्यति। अतः नियम्य क्रोधं परित्यज्य क्षोभं सर्वैरपि यथापूर्वं स्वस्वव्यवहारेषु प्रवर्तितव्यम्। यस्त्ववगणय्यैतच्छासनं न्यायपथं रुन्ध्यात्, अपराधिनो वा न्यायदण्डात् महाभयाद्रक्षितुं प्रयतेत स्वयमेव वाऽनधिकृत एवापराधिषु दण्डं धारयेत् स निरपवादं स्वयं दण्डविषया भविष्यति।' इति प्रोद्घोषयन्त्या राजकीययोद्घोषणयाऽधिकतरमेव समाश्वस्ताः!·····'अमात्यप्रमुखस्यानुपस्थितौ सेनापतिप्रमुखस्य सर्वाधिकारस्वीकारोऽस्यां परिस्थितौ योग्य एव' इति गदन्तः स्वस्वनिवासान् न्यवर्तन्त तस्य चिरस्मरणीयघटनाप्रवाहस्य दिवसस्य रोमाञ्चकारिणीर्विविधा घटना महताऽभिनिवेशेन चर्चयन्तः।

इत्थंप्रकाराभिश्च रोमहर्षकघटनाभिराकुलाकुले साक्षात्कृतन्यक्कृतब्राह्मतेजःप्रभावेऽह्न्यविदितगतयामं परिणतिं प्राप्ते, बलाढ्यमगधेश्वरजीवितावसाननिर्विण्ण इव भगवति सहस्रकिरणे पश्चिमसागराम्भसि निमज्ज्यादृश्यतां याते···तमनुशाचन्तीं दिनश्रियमिव दिनेश्वरानुरागिणो सायंसन्ध्यां बलात् समुत्सार्य नन्दवंशश्रीशोकभर इव घनेऽन्धकार भुवनतलमाक्रमितुं बद्धपरिकरे····घातयित्वा तं हठात् स्नपयितुमिव निखिलमगधसाम्राज्यं स्वचन्द्रिकामृतेनाऽऽसन्नोदयमगधसाम्राज्यस्वर्णयुगप्रीत इव सुप्रसन्ने पूर्वदिक्प्रान्तमधिरोहति चन्द्रे····कुमारश्चन्द्रगुप्तः कृतराजकोयशोकव्यञ्जकवेषो गर्तनिपतितान् सर्वानपि मगधराजवंश्यमृतदेहान् ससम्मानं राजकीयदाहभूमिमनाययत्, शोकाकुलानां प्रमुखराजपुरुषाणां समक्षञ्च शास्त्रविहितेनान्त्यविधिसंस्कारेणाग्निसमर्पितानकरात्, एकनिष्ठान् खड्गहस्तान् स्वसैनिकान् महानगरे शान्तिसंरक्षणार्थं तत्र तत्र योजयामास, सेनापतिप्रमुखस्य व्यापारान् निरीक्षितुं तत्सेवकर्मिषेण परमविश्वासभाजश्चारान् स्थापयामास, पर्वतेश्वरं कारागारे सुनिगडितं स्वयमवलोकयामास····जगाम च याममात्रावशिष्टायां निशायां कृतवेषपरिवर्तः सुगोपितखड्गमात्रसहायः निभृतं स्वं गुरुं द्रष्टुम्।

तदागमनं प्रशान्तेन चित्तेन प्रतिपालयन् द्विजवरेण्यस्तु तस्माद्विनयावनतात् सर्वां प्रशासनव्यवस्थां नगरस्य साम्राज्यस्य कृतां निशम्य परं सन्तुष्टो मन्दं मन्दं तमब्रवीत्—'वत्स! उच्छिन्नो धननन्दः ससुतो यथाप्रतिज्ञम्। अस्य महतो व्यूहस्य वास्तविकसूत्रधारविषये च नास्ति जनानां

कल्पनालेशोऽपि याथार्थ्यानुसारी। सर्वे जनास्तं मूर्खं पर्वतेश्वरमेवात्र मुख्यम् अपराधिनं मन्यन्ते। राक्षसञ्च तत्सहायकारित्वेन शङ्कन्ते। एषा च धारणाऽस्माभिः किञ्चित्कालं गूढं रक्षणीया। परतस्तु यथाऽनुकूलतरं तथा करिष्यामः। अस्माकं प्रधानतमम् उद्दिष्टं तावत् तव-मगधसाम्राज्याऽधीश्वरपदलाभरूपम् अद्याप्यसिद्धमेव। अनभ्रवज्रपात-निभामिमामापदं वीक्ष्य चकितेऽमात्यवरेण्ये क्वापि निभृतमात्मानं पर्यवस्थापयति सति....अमात्यप्रमुखपदप्राप्तिदुराशाकर्दथितमनसि भागुरायणेऽस्मद्वचनवशंवदे सति च....स्व एव तवाभीप्सितपदारोहः सुशकः तथापि अननुभूतपूर्वायामस्यामराजकायां परिस्थितौ प्रत्यग्रायाञ्च नन्द-वंशहत्याकाण्डस्मृतौ तवाभिषेको मागधानाम् उद्वेगं सन्देहं विरोधञ्चो-त्पादयेत्, एतच्च छिद्रं प्राप्य विरुद्धायाः प्रजायाः साहाय्येन वैरनिर्यात-नार्थं प्रयतमानो राक्षससदृशो राजनीतिपटुर्दुर्विजेय एव स्यात्। अतः सावधानतया व्यवहरद्भिरस्माभिः किञ्चित्कालपर्यन्तं भागुरायणमाध्य-मेनैव साम्राज्यं प्रशासद्भिरमात्यवरेण्यस्य प्रयत्नांश्च निर्निमेषैश्चार-चक्षुभिरवलोकयद्भिः शनैः शनैः एतादृशी परिस्थितिरुत्पादनीया यथा तव साम्राज्याधीश्वरपदाभिषेकः न्यायप्राप्त इव सर्वमङ्गलकारीव भासेत।....तदित ऊर्ध्वं वत्सस्तैस्तैरुपायैः प्रजाजनानां चेतांसि तथा वशीकरोतु यथा विस्मृतधननन्दशासनास्ते वत्समेवाधिकाधिकं सम्मान-यन्तो वत्सस्य मागधसाम्राज्यलाभं स्वलाभमेव मंस्यन्ते।'

—:※:—

## षोडशः परिच्छेदः

स्वगुरोरलौकिके बुद्धिवैभव आदित एव परं श्रद्दधानः कुमारश्चन्द्रगुप्तस्तु तदुपदेशं परिणामसुखं सर्वथाऽङ्गीकृत्य प्रतिनिवृत्तः ततः प्रभृति.... शोकविह्वलानामनाथानां भयातुराणां मगधराजदाराणां समाश्वासने, स्वामिनः समूलं विनाशं तथा साक्षात्कृत्य 'अवश्यंभाविनीतः परं सर्वविनाशिनी भयङ्कराऽराजकता' इति समुत्प्रेक्ष्य विचारमूढानामवसन्नगात्राणामनेतृकाणां मगधराजपुरुषाणामुच्चावचानां पुनरपि यथापूर्वं तत्तत्कर्तव्यानुपालनविनियोजने, स्वामिवंशस्य तथा विनिपातं साक्षात्कृत्य भयचकितस्याविदितसत्यवृत्तान्तस्यामात्यप्रमुखपदाभिलाषातम्यमानहृदयस्य 'सद्यःप्रत्यक्षीकृतभाविदर्शनसामर्थ्यानां सद्गुरुचरणारविन्दानां सेवैवात्र केवल उपाय' इति मनसि कृत्वा प्रत्यहमार्यं चाणक्यं साक्षात्कर्तुं गच्छतो भागुरायणस्य वशीकरणे, अतर्कितोपनतं लोमहर्षकं प्राचीनराजवंशघातं प्रत्यक्षीकृत्य क्षुभितानां समस्तशासनयन्त्रविदारिकाम् अव्यवस्थामवश्यंभाविनीं समग्रेऽपि साम्राज्ये समुत्प्रेक्ष्य भयव्याकुलानां सामान्यप्रजाजनानां पर्यवस्थापने च दत्तचित्तः शनैः शनैस्तथा साफल्यमलभत यथाऽचिरादेव विस्मारितवैधव्यदुःखास्ते राजदाराः, स्वस्वकर्तव्यानुष्ठानरज्यच्चेतसस्ते राजपुरुषाः, अमात्यप्रमुखपदं प्राप्तप्रायं मन्वानः स भागुरायणः, समाश्वस्तहृदयाः स्वदैनन्दिनव्यापारमग्नास्ते साधारणप्रजाजनाः तमेवैकमात्रं रक्षितारं प्रशासकं स्वामिनञ्च मन्तुमारेभिरे ।

तामिमां प्रत्यहं वर्द्धमानां कुमारस्य लोकप्रियतां सुगूढं निरीक्ष्य नितान्तं तुष्ट आर्यश्चाणक्यः 'उपनतप्रायस्तावद्वत्सस्य साम्राज्याधीश्वरपदारोहणसमय' इत्यात्मना सम्प्रधार्य स्वाभिलषितसिद्ध्यर्थं कृतोपक्रम आदौ भिक्षानिमित्तं सर्वत्र पर्यटतां स्वशिष्याणां माध्यमेन स्वयोगसामर्थ्यं तथा प्रख्यापयितुमारभत यथा कतिपयैरेव दिवसैः न केवलं राजधान्या मपि तु तत्समीपवर्तिषु प्रदेशेषु प्रससार श्रोतृमात्रमानसं कौतूहलपरवशं विदधती, 'मगधराजधान्याः बहिरेवैकस्य प्राचीनस्य देवालयस्य परिसरे विराजते कश्चिदद्भुतयोगसामर्थ्योपपन्नो योगिवरो, महत आगामिनः संकटात् भारतवर्षं

त्रातुं गुरुणाऽऽदिष्टः, विहाय शान्तमाश्रमपदं, मगधराजधान्यामवतीर्णः।.... तेन हि कालत्रयदर्शिनाऽऽदित एवाऽऽदिष्टोऽभूत् नन्दवंशस्य विषयोपभोग-जर्जरस्य समूलो विनिपातः। एषु च दिवसेषु........स योगीन्द्रः........ 'समस्ते भारतवर्षे बलाढ्यस्य, यावनाक्रमणेभ्यो भारतभूमेः रक्षणे समर्थस्य, सम्प्रति तु नियत्याऽराजकतां प्रापितस्यास्य मगधसाम्राज्यस्य कीदृशी भवितव्यता'—इति जिज्ञासाव्याकुलहृदयैः स्वभक्तैर्वारंवारं प्रार्थितः प्रकाशयितुं तदनुरोधवशात् भाविनं कालं अलौकिकप्रत्यासत्या साक्षात् कुर्वन् समाधौ आस्ते इति वार्त्ता, यां निशम्य प्रायः सर्वं एव नागरिकाः, प्रवुद्धास्तथा मूढाः, राजकीयपदाधिकारिणस्तथा वाणिज्योपसेविनो, वृद्धास्तथा तरुणाः कुमारचन्द्रगुप्तप्रशासनसमाश्वस्ता अपि तात्कालिका-निश्चितावस्थावसानम् अभिकांक्षन्तः, 'विदितसर्ववृत्तान्तः क्रोधोद्दीप्तो मलयकेतुः पितृपराभवनिर्यातनेच्छया दह्यमानो महान्तं सेनासन्नाहं कुर्वन् शीघ्रमेव मगधराजधानीं रोत्स्यति' इति सर्वत्र प्रसरन्त्याऽनिश्चेयोद्गमया वार्त्तया विचलिताः शीघ्रमेव प्रसिद्धिं प्राप्तस्य प्रशान्तस्य तस्य देवालयस्य परिसरे महतो वटवृक्षस्याधस्तात् समाधौ लीनं तेजोभासुरं विप्रवरमार्यंचाणक्यं प्रत्यहं साक्षात्कर्तुं प्रारभन्त।........तिरस्कृत्याधिकारगर्वं विनम्रभावेन तत्रोपतिष्ठतः कुमारचन्द्रगुप्तप्रमुखान् प्रशासनाधिकृतान् राजपुरुषान्, परित्यज्य बलावलेपं बद्धाञ्जलि समुपस्थितान् सेनापति-भागुरायणप्रमुखान् बलाधिकृतान्, विधूय धनार्जनलालसां सेवायां संलग्नान् चन्दनदासादीन् नगरवणिजश्च तत्र प्रतिदिनं वीक्ष्य तस्मिन् दैविक-प्रभावमण्डितेऽधिकतरमेव विश्वासमकुर्वन्।

एवमतीतेषु कतिपयेषु दिवसेष्वार्यश्चाणक्यः पर्याप्तप्रवृद्धमात्मनः प्रभावं परिगणयन्........प्रत्यग्रपल्लवारक्तैः स्वकरैर्देवालयारामवृक्षराजि-शिखरान् सस्नेहमिव परामृशति पश्चिमाचलचूडाचुम्बिनि भगवति सहस्र-किरणे........दिव्यसाक्षात्कारतेजोभासुर इवाऽऽरक्ते नयने किञ्चित् समुन्मीलयन्........बद्धाञ्जलि समुपस्थितमुत्सुकोत्सुकं महान्तं जनसम्मर्दमव-लोकयन्नपि अनवलोकयन्निव गम्भीरया वाण्योदघोषयामास, 'यदवश्यं भाव्यासीत् तद्भूतमेव। विषयलम्पटस्य धननन्दस्य ससुतस्य विनिपातो नियतेरभीष्टः सम्पन्न एव। वत्साः! युष्माकमियमराजकावस्थापि शीघ्र-मेव अन्तं प्राप्स्यति। शीघ्रमेव भारतवर्षे बलाढ्यतमं भवतामेतत् साम्राज्यं स्वानुरूपं शासकमुपलभ्य प्रगुणीभूतसामर्थ्यमार्यसंस्कृतेः संरक्ष-णार्थं बद्धपरिकरं भविष्यति।........स च युष्माकं भावी सम्राट् शूरोऽपि

विनीतः, समर्थोऽपि अप्रमत्तः, प्रजानुरञ्जनशीलः युष्माकमधीश्वरः अयं चन्द्रगुप्तः। नियत्याऽनुगृहीतोऽयं क्षत्रियकुमारः न केवलं युष्माकं, न केवलं मगधसाम्राज्यस्य, अपि तु समस्तस्य भारतवर्षस्य तथा मार्गप्रदर्शनं करिष्यति यथाऽचिरादेवेयं भारतभूः प्राचीनं स्ववैभवशिखरं पुनरारूढा दिवमप्युपहसिष्यति। अचिन्तनीया खलु दैवगतिः। "समूलमेवं विनष्टे नन्दवंशे कः खल्वस्य साम्राज्यस्याधीश्वरो नियतेरभीष्ट" इति जिज्ञासया ध्यायता मया,—अहो साक्षात्कृतं यदयं कुमारः स्वयं नन्दवंश्य एव। विचित्रा खलु भाग्यगतिः! अयं हि धननन्दात् किरातराजपुत्र्यां मुरादेव्यां सञ्जातः; भ्रूणावस्थायामेव कपटकुटिलाया अन्तःपुरनीतेः लक्ष्यतां प्रापितः, घातसमादिष्टैरपि विधिवशात् सञ्जातदयैर्घातकपुरुषैर्निर्जनेऽरण्ये परित्यक्तः नियतिप्रेरितेनेव केनचित् तन्मार्गगामिना पञ्चनदीयेन सामन्तवृद्धेन सदयं पालितः, गुणगणाकृष्टहृदयेन किरातराजेनाविदितकुलवृत्तान्तेनैव सकौतुकं स्वसन्निधौ स्थापितः, पुत्रनिर्विशेषं पालितः, अध्यापितश्च विविधासु शस्त्रविद्यासु, समुद्भूतयौवनकान्तिमनोहरतरेऽस्य मुखकमले चिरात् खलु वियुक्तायाः स्वभगिन्यास्तत् तत् सादृश्यं साक्षात् कुर्वताऽऽशादोलादोलायमानमनसा तेन 'मम पुत्रक' इति कृत्वा मुरादेव्याः सन्निधौ कौतूहलवशात् सम्प्रेषितः, मगधराजधान्याञ्चास्यामागत्यासामान्यसुलक्षणशालिनाऽऽकृतिविशेषेण स्नेहसिक्तेनार्थगम्भीरेण वचोविशेषेण च सर्वेषामेव सौहार्दविषयो बभूव। अचिन्तनीया खलु नियतेर्गतिः। विषयलालसामूढे धननन्दे ससुत एवं कपटकुटिलरिपुनीतिवह्नौ शलभगतिं प्राप्तेऽराजकस्यास्य महतः राज्यस्य परिरक्षणं तद्दशांकुरायत्तमेव तस्या अभीष्टम्। अतर्क्या खलु भाग्यस्य लीला। केन खलु स्वप्नेऽपि समुत्प्रेक्षितमासीद्यत् घोरे वन्यप्राणिभयंकरेऽरण्ये तथा परित्यक्तः अनाथः एकः बालकः समापतिते समुचिते समये स्वाधिकारसिद्धमेतादृशं महत् पदं प्राप्य यवनविभीषिकाभीताया भारतभूमेराश्रयस्थानं भविष्यति'—इति।

सायंप्रकाशितोद्भासितस्य विशालस्य तस्य वृक्षस्याधस्तान्निषण्णस्य धीरगम्भीराकृतेर्विप्रवरस्य तस्यैतां वाणीं निपीय मागधास्तु नितान्तं प्रभाविताः, 'येन खलु समुत्पन्ने सर्वविनाशेऽविचलितेन परचक्रसंकटं दूरीकृत्याऽराजकतां प्राप्तमस्माकं राज्यं संरक्षितं न्यासवच्च पालितं—सोऽयमस्माकं प्रियः कुमारः नन्दवंश्यः····राज्यस्यास्याधीश्वरपदार्हश्च नियत्या परिकल्पित····इत्यहो तस्या गतिरिति' परं विस्मिताः, अविदितचरं प्राक्तनं स्वकुलवृत्तान्तमकस्मादधिगत्य विस्मयहर्षखेदादिविरोधि-

भावनाकुलितहृदयं, स्वगुरुमुखारविन्दं ध्यायन्तं विस्मितनिमेषमश्रुपूर्णाभ्यां नयनाभ्यां, चन्द्रगुप्तं वीक्ष्य,....'अहो विनयशालिताऽस्माकं कुमारस्य यत् सम्प्राप्याऽपि महदेतादृशं पदं पुरेवाधुनापि विनयावनत एवास्त'—इति समुत्प्रेक्ष्याधिकतरमेव समावर्तितहृदयाः,....कुमारं स्वाधिपत्वेन स्वीचक्रुः। प्रार्थयामासुश्चाऽऽर्यं चाणक्यं....'कुमारं मगधसाम्राज्याधीश्वरपदे यथाविधि अभिषिक्तं, स्वकर्तव्यपालननिपुणैः स्वामिभक्तैः सेवकैरुपबृंहितप्रशासनसामर्थ्यं, यवनाक्रमणेभ्यो भारतभूमेः परिरक्षणार्थं बद्धकङ्कणं वीक्ष्यैव योगिचरणैः प्रशान्ता नगाधिपकन्दरा तपश्चरणार्थं पुनः शरणीकरणीया।'

चाणक्यस्तु स्वाभिलषितसंसिद्धिं निरपवादामेतां दृष्ट्वा नितान्तं प्रहृष्टोऽपि नात्युत्सुक इव, परोपकारभावनामात्रप्रेर्यमाण इव, तेषामिमां प्रार्थनामङ्गीचकार।

अनन्यसामान्यया रूपसम्पदा, निष्कलङ्केन चारित्र्येण, गुणानुरागिणा प्रसभगम्भीरेण व्यवहारेणाद्वितीयेन शौर्येण च्रादित एव कौतुकास्पदीभूतं चन्द्रगुप्तं स्वाधिपत्वेन प्राप्य नितान्तं प्रहृष्टाः कृतकृत्यंमन्या मागधा विस्मृत्य तादृशराजघातकाण्डं विधूय परचक्रभयं तिरस्कृत्य च कतिपयैरमात्यराक्षसपक्षपातिभिर्गूढमुत्थापितं चन्द्रगुप्तमातृविषयकमपवादं तथा प्रतिदिनं जहसुः ननृतुश्च यथा महानगर्यामेव स्वसुहृत्प्रासादे गूढं निवसन्, स्वस्वामिप्राणघातकवैरनिर्यातने कृतसंकल्पः, सुसम्बद्धं चारजालं सर्वत्र प्रसारयितुं प्रयतमानः कूटव्यूहस्य वास्तविकान् सूत्रधारान् परिज्ञाय तांल्लक्ष्यीकृत्य स्वराजनीतिप्रयोगान् व्यापारयन् राक्षसोऽपि हतोत्साहश्चिन्तयितुमारभत।

'अहो दैवदुर्विलासः! राजनीतिपटुरप्यहं तथा शत्रुभिर्वञ्चितो यथा न क्षणमपि बाह्यकपटप्रयोगं शङ्कितवान्।........अकस्मात् स्वामिकृपापात्रीभूतायाः पूर्वमपमानितायाः मुराया एव सकाशादपायमुत्प्रेक्षमाणः तदन्तःपुर एव सुगूढं चारजालं व्यापारयन् स्वसमक्षं विरच्यमानमश्रुतपूर्वसदृशं कपटव्यूहं न लक्षितवान्।......अहो तस्य विप्रस्य राजनीतिपाटवम्। केन खलूत्प्रेक्षितमासीद्यदनेकसंवत्सरपूर्वमेकदा कदाचित् राजराजेश्वरेण स्वभावानुसारं सभायामपमानितः निःसहाय एक ब्राह्मणस्तथा घोरां प्रतिज्ञां कृत्वा निर्गतः परिभवाग्निनाऽहोरात्रं दह्यमानः परित्यज्य स्वजात्युचितमध्ययनाध्यापनादि कर्म निरलसं स्वप्रतिज्ञापूर्तये प्रयतमानः

सुलक्षणेन तेजस्विना केनचित् क्षत्रियबालकेन संगतः तं राजनीतौ शस्त्र-विद्यायाञ्च तथा निपुणं विधाय संख्ययाऽल्पमपि कार्यनिपुणं स्वामिभक्तं बलं विधाय कृतवेषपरिवर्तः, इह ब्राह्मणोचितेन मिषेण केनचिदागत्य, राजगृहदौर्बल्यस्थलं प्राप्य, सम्पाद्य मुराया भावविह्वलायाः परमं विश्वासं, तद्द्वारेण सूत्राणि चालयन्, सम्राजं दुर्दैवोपहतमतिं तस्याः सौन्दर्यपाशे पुनर्बध्वा, मामपि दक्षंमन्यमानमन्यत एवापायशङ्कया तत्र व्यापृतध्यानं कृत्वा, तं क्षत्रियकुमारं प्रद्युम्नदेवपुत्रमिषेणान्तःपुरे सुप्रतिष्ठं कृत्वा, तद्द्वारेण समस्तमपि मागधं बलं शनैः शनैः स्वायत्तीकृत्य, प्रजा-जनेषु असन्तोषमुद्वेगञ्च तैस्तैरुपायैरुत्पाद्य, स्वकपटव्यूहं परिपक्वकल्पं दृष्ट्वा, मुराद्वारेण सम्राजं राजसभागमनाय प्रेर्य......राजमार्ग एव पश्यतामसंख्यानां मागधानां स्वप्रतिज्ञां तथा पूरयेत्' इति ।

'अहो तस्य विप्रस्य चातुर्यं यत्सम्पाद्य निभृतं स्वयमेवैतत् कपटजालं निर्दयेन मनसा, प्रकटतो गुरुनिर्देशमङ्गीकृत्य भारतवर्षरक्षणेच्छया हिमालयादिह सद्य एवागतं योगिवरेण्यमात्मानं ख्यापयन्......अधुना सर्वेषामेव मागधानां परमश्रद्धास्पदीभूतः सर्वानुमत्या कुमारं तं मगध-साम्राज्याधीश्वरपदेऽभिषेक्तु चेष्टते ।'

'न जाने किमत्र समुचितं मम कर्तव्यं भवेत् इति । इमं सर्वं कपटव्यूहं जानतोऽपि मम हस्ते नास्ति स्वल्पतमं प्रमाणं यत् पुरस्कृत्य सर्वजन-समक्षं तं सिद्धं कर्तुं प्रभवेयम् । प्रत्युत मय्येवैतदर्थं सर्वजनसमक्षमुपस्थिते स चतुरो विप्रस्तैः तैः प्रमाणैरेतद्राजहत्यापातकं ममैवोपरि पातयेत् । समुद्दीपितजनक्षोभाग्नौ च शलभायिते मयि स्वल्पोऽपि नावशिष्येतावसरः नन्दवंशस्य कस्यचिदपि पुनर्मागधसिंहासनारोहणस्य । अतो मन्ये विद्य-मानायां परिस्थितौ निभृतं स्थित्वा प्रतिपक्षव्यापारनिरीक्षणमेव कर्तव्य-त्वेनावशिष्यते ।'

'सम्प्रेषित एव मयाऽतिनिभृतं परमविश्वासार्हो दूतः हिमालयोपत्य-कायां कस्मिंश्चिदाश्रमे निवसतः सुगृहीतनामधेयस्य तातस्य सर्वार्थसिद्धेः कुशलजिज्ञासया । तद्वार्त्तामादाय प्रत्यागते तस्मिन् दूते गूढमवचितैः प्रमाणैरुपबृंहितशत्रुपक्षकपटव्यापाररहस्योद्भेदनसामर्थ्योऽहं सर्वजनसमक्षं विप्रहतकस्य तस्य कपटव्यूहं प्रोद्घाट्य स्वायत्तीकृतप्रजाजनमानसः सिंहासनाधिरूढमपि चन्द्रगुप्तं सिंहासनाद् दूरीकृत्य तातं सर्वार्थसिद्धिं तत्र स्थापयिष्यामि ।'

'मयि जीवति नन्दवंश्येतरः कश्चिद् युवकः मागधसिंहासनमधिरुह्य कुशली भवेत् इति तु नितान्तमसम्भवनीयम्। यस्तु मागधजनसामान्य-विश्वासः अयं युवा नन्दवंश्य एवेति स तावदतिचतुरस्य तस्य विप्रस्य वाणीमेव केवलामवलम्बते। अतश्च न प्रामाणिकः। राजनीतिपटोस्तस्य द्विजस्य तस्मिन्नपि कपटपाटवमेव संभावयामि'।

'तथा समादिष्टैरपि, अकस्मात् समुपजातदयाङ्कुरैर्घातोपजीवि-भिस्तैर्नृशंसैः सोऽर्भकः जीवन्नेव परित्यक्तः, क्रूरश्वापदभयङ्करेऽपि तस्मिन्नरण्ये केनापि जन्तुनाऽपरामृष्टः, यदृच्छया तत्रोपस्थितस्य साम-न्तस्य कस्यचिद्हस्ते निपतितः, तेन पुत्रनिर्विशेषं पालितः, स्वप्रतिज्ञा-पूर्तिव्यग्रचित्तेनानेन विप्रेण स्वयं समासादितः, किरातराजपुत्रकापदेशेन मुरासन्निधौ प्रवेश्य च स्वकपटव्यूहसाधनीकृत……इति हि तावन्नाति-विश्वासार्हा काकतालीयशृङ्खला।'

'मन्ये गूढं प्रमाणानि प्रबलान्यवचिन्वन् अहं विप्रस्य तस्यैतदपि कपटनाटकं सर्वजनसमक्षं विफलीकर्तुं प्रभविष्यामि। अस्तु, साम्प्रतं ताव-न्निभृतं समयं प्रतिपालयता मया प्रथमतो महाराजस्य कुशलवार्त्ताऽधि-गन्तव्या।……ततश्चोपाययोजनाऽङ्गीकर्तव्या। न चात्र कालातिपातः श्रेयस्करः।……तथा सति हि प्रथमत एवानुकूलेषु प्रजाजनेषु समुत्पा-दितविश्वासः, स्वस्य सुशासनेन तेषामधिकतरमेव श्रद्धास्पदीभूतः कुमार-श्चन्द्रगुप्तः प्रबलप्रमाणोपबृंहितसामर्थ्येनापि मया दुरुत्पाट्यः स्यात्।…… अपि नाम नियतिरेतस्मिन् महत्तरे कर्तव्ये मम साहाय्यकारिणी भवेत्?'

आर्यश्चाणक्यस्तु सर्वतः प्रसरद्भिश्चारनेत्रैरमात्यपक्षपातिनां राज-पुरुषाणां प्रधाननागरिकाणाञ्च गतागते गूढमवलोकयन्, तेषां संख्या-बलमुत्साहबलञ्च तैस्तैरुपायैः संक्षीणयन्, अमात्यवरेण्यस्य गूढां वसति-मादित एव जानन्, तदभितः प्रसारितचारजालः, विज्ञाय तस्योपाय-योजनां कौतुकाक्रान्तहृदयः, तत्कूटनीतेर्विफलीकरणात् प्राक् कुमारस्य मगधसम्राट्पदाभिषेको युक्ततर इति मनसि कुर्वाणो दिनमेकं शोभननक्षत्रं सकलेप्सितप्रदम् आसन्नमभिषेकतिथित्वेन सेवासमुपस्थितानां सेनापति— भागुरायण-सुवर्णदासादिप्रमुखानां मागधजनानां सम्मतिमादाय निरचि-नोत्……यदाकर्ण्य प्रावर्तन्त निखिलेऽपि मगधसाम्राज्ये स्वभावत एवोत्सवप्रियाणां तत्रापि प्रियदर्शनं कर्तव्यपालनतत्परं कुमारं चन्द्रगुप्तं स्वाधीश्वरत्वेन संप्राप्य द्विगुणीभूतोत्साहानां मागधानां राजधान्यां तेषु

तेषु नगरेषु ग्रामेषु ग्रामटिकासु च समुल्लासितजनमानसा महोत्सवाः···· येषु गीयमानमङ्गलगीतमधुरस्वरलहरीमयमिव मागधं नभोऽङ्गणं, गृहीतरमणीयवेष-विविधालङ्कारभूषित-नरनारीसुशोभित्तं कुसुमितमिव मागधम् अवनीतलञ्चाभवताम् ।

एवं मागधसाम्राज्यस्य सुदूरेषु प्रान्तभागेषु विचरद्भिः परमविश्वासपात्रैः गूढपुरुषैराभ्यन्तरिकरिपुव्यापारान् सततमवलोकयतः, अनुत्तेज्यैवोत्सवनिमग्नं सामान्यजनं निभृतं तान् प्रयत्नान् विफलीकुर्वंत आर्यचाणक्यस्य, स्वामिकुलविनिपातदुःखाग्निदन्दह्यमानमानसस्य, शनैः शनैः संक्षीयमाणसामर्थ्यं स्वपक्षमवलोक्य खिद्यमानस्य, सर्वार्थसिद्धिकुशलवार्त्तालाभाशातन्तुमवलम्ब्य तैस्तैरुपायैः स्वपक्षस्य प्रबलीकरणार्थमनवरतं प्रयतमानस्यामात्यराक्षसस्य, सद्योऽधिगतस्वकुलवृत्तान्तव्याकुलान्तःकरणस्यापि स्वभावधीरस्य बाह्याभ्यन्तरिकराजकीयपरिस्थितिनिरीक्षणदक्षस्य प्रजाजनानुरागसम्पादनेऽधिकमेव तत्परस्य कुमारस्य चन्द्रगुप्तस्य, विस्मृत्य सर्वंदुःखानि विधूय परचक्रभयं तिरस्कृत्य राक्षसपक्षपातिनामुपजापप्रयोगान् निर्बाधं, निर्मर्यादं. निःशंकं राज्याभिषेकमहोत्सवाम्बुधौ निमज्जतां मागधानाञ्च प्रायोऽविदित्त एव पक्ष एकोऽतिचक्राम ।

—:❋:—

## सप्तदशः परिच्छेदः

प्रादुरासीच्च····आर्यचाणक्येन स्वप्रतिज्ञापूर्तिदिवसत्वेन सविश्वासमपेक्षितः, विविधभावनाऽऽलोडितमनसा कुमारचन्द्रगुप्तेन महत्कर्तव्यभारसम्प्रदायकदिवसत्वेन सगाम्भीर्यं प्रतीक्षितः, सर्वार्थसिद्धिकुशलवार्त्ताऽलाभचिन्तितमानसेनामात्यवरेण्येन सनिर्वेदम् आशङ्कितः, अनवरतमहोत्सवप्रमुदितचित्तेन सामान्यजनेनापरिमितोत्साहमभिकांक्षितः, अभिषेकदिवसो, यस्मिन् दूरदेशविदेशाभ्यागतजनसंकुलं सुरभिशीतलसमीरणतरंगितासंख्यापताकं सर्वत्राऽऽबद्धतोरणं सुशोभितमहामार्गं मागधसाम्राज्यहृदयमिव समुल्लासितं पाटलिपुत्रं स्वागतमिव कर्तुमारभत चिरप्रतीक्षितायाः स्वसौभाग्यलक्ष्म्या वाद्यमानविविधमङ्गलवाद्यनिःस्वनैः श्रुतिमधुरैः ।

अथ नूतनमगधसम्राजोऽभ्युदयमपूर्वमवलोकयितुमिवोदयाचलशिखरमलङ्कुर्वति भगवति सहस्रकिरणे, विविधविकसितसुमनपरिमलवाहिनि तडागशीकरकणजनितजडिम्नि सुखितभारतभाग्यलक्ष्मीमन्दनिःश्वासे इव मन्दं मन्दं वहति प्राभातिके समीरे, प्रचलितमहोत्सवावलोकनार्थं परस्परमाह्वयत्स्विवोत्सुकोत्सुकेषु शब्दायमानेषु द्विजकुलेषु, भारतीयसंस्कृतेः समूलनिर्दलनेच्छयाऽवसरं प्रतीक्षमाणान् दुराचारिणो यवनान् तर्जयत्स्विव परिचालितपताकामिषेण प्रवृद्धात्मविश्वासेषु देवतायतनेषु, दैनन्दिनं कार्यजातं कथमप्यनुष्ठाय त्वरया राजयात्रामार्गं समापतत्सु गृहीतोत्सववेषेषु नागरिकेषु····अकस्मात्समुद्भूतगगनभेदकतूर्यनिःस्वनसंसूचितनिर्गमः, शशिकरधवलवेषधरः प्रत्यग्रकुंकुमतिलकालंकृतभालपट्टः, विविधकनकभूषणभूषितः कुमारश्चन्द्रगुप्त आशीर्वचनदानार्थमेव समुपस्थितं धौतधवलवेषं प्रत्यग्रचर्चितभस्मरेखाभासुरभालपट्टम् इष्टदेवतानामस्मरणचलदोष्ठपुटं स्नेहातिरेकोद्गताश्रुबिन्दुपूरिताऽऽरक्तनयनं, यवनोच्छेदप्रवृत्तं नूतनोदितं क्षात्रं तेजोऽभिनन्दयितुं समुपस्थितं पुरातनं ब्राह्ममोज इव भासमानमार्यं चाणक्यं प्रणम्य तेनापरिस्फुटाक्षरमनुमोदितो महत्तमकर्तव्यभारोद्वहनाय, राजप्रासादाङ्गण आगतः, तत्र समुपस्थितैः प्रधानैः राज-

पुरुषैः सबहुमानमभिनन्दितः, शस्त्रभीषणविग्रहेण सेनाध्यक्षेण भागुरायणेन प्रार्थितः, कल्याणलक्षणां विविधालङ्कारालङ्कृतां विचित्रवर्णभूतिभूषित-कलेवरां हस्तिनीमारुह्य स्वामिभक्तैरश्वारूढैर्भल्लभीषणैर्महाकायैः शरीर-संरक्षकैः सर्वतः परिरक्ष्यमाणः, राजप्रासादान्निर्गत्य. प्रधानैरधिकारिभिः सबहुमानमनुगम्यमानः, गगगचुम्बिप्रासादपरम्परानिबद्धोभयपार्श्वेन विविधतोरणालङ्कृतेन समुत्सुकजनसहस्रसम्मर्दाकुलाकुलेन जयनिर्घोष-मुखरेण सन्ततनिपतत्पुष्पवृष्ट्याऽऽच्छाद्यमानेन राजमार्गेण सुपरिचितेन शनैः शनैः संचलन् वृद्धैः सगद्गदमाशीर्वचनेन पुरस्कृतः, युवकैः सादरं नमस्कृतः, कामिनीभिः साकूतं निपीतः बालकैश्च सोत्साहं जयघोषैरभि-नन्दितः, नमयन्नुद्दण्डान्, प्रोत्साहयन् स्वपक्षपातिनः, अनुकूलयन् उदासी-नान्, अभिभवन् प्रतिपक्षिणः, प्रोद्दीपयन् प्रजानुरागं, द्विगुणयन् द्विजगणो-त्साहं प्राप विशालं विविधकुसुमतोरणमालाऽलङ्कृतं विकोषखड्गधारि-सैनिकसंरक्षितं प्रसरन्मङ्गलवाद्यध्वनिलहरीनिनादितम् अभिषेचनसामग्री-संयोजनव्यग्रमनस्कैर्वेदपारङ्गतै राजपुरोहितैर्व्याकुलाकुलं, मङ्गलकलश-धारिणीभिः प्रोत्फुल्लमुखकमलाभिः सुवासिनीभिः अलङ्कृतप्रवेशद्वारमभि-षेकमण्डपम् ।

प्रविश्य च तं यथाविधि प्रथमत एव तत्र समुपस्थितैर्विविधवेषवयोवृत्ता-न्तैर्देश्यविदेश्यराजकीयप्रतिनिधिभिः, मागधसाम्राज्यस्य विदूरेभ्यः प्रांतेभ्यः उपस्थितैः विविधव्यवसायार्जितापारधनराशिभिर्वणिग्भिः, अतुलितभुज-प्रतापदग्धरिपुमण्डलैः स्वामिभक्तैः सामन्तैश्च सादरं समुत्थायाभिवन्दितः, पावनेभ्यस्तीर्थेभ्य आगतैर्विविधशास्त्रकोविदैर्ब्राह्मतपस्तेजोभिरिव रक्षणा-र्थमवतीर्णस्य क्षात्रप्रभावस्याभिनन्दनार्थं स्वयमपि विग्रहमादाय भूतलमव-तीर्णैः विप्रैर्धीरगम्भीरया तपःपरिपूतयाऽऽशिषाऽनुगृहीतः, कनकवेत्रधारि-प्रतिहारिभिरुपदिश्यमानमार्गः, अभिषेकस्थानं प्राप्तः, सुतीक्ष्णखड्गोदग्रै-र्लोहकवचावृतकायैर्महाप्रमाणैश्चतुरङ्गसेनाध्यक्षैः सर्वतः परिरक्ष्यमाणं, धवलचामरहस्ताभी रमणीयवेषधारिणीभिः नूतनस्वामिपरिचर्यौत्सुक्य-वशात् स्वयं परिवीजनार्थम् अवतीर्णाभिराशाभिरिव राजदासीभिः परि-वीज्यमानं, बद्धाञ्जलि समुपस्थितैः मन्त्रिभिरलङ्कृतोभयपार्श्वं, सौवर्णं, विविधरत्नप्रभाभासुरं, मगधसाम्राज्यलक्ष्मीहृदयमिव सिंहासनमारूढः, सर्वप्रमुखेण राजपुरोहितेन कृतमङ्गलतिलकः, देशविदेशाऽऽमन्त्रितैः वेद-पारङ्गतैः ब्राह्मणैः समन्त्रोच्चारं यथाविधि चतुःसमुद्रसप्तसिन्धुसमानीतैः पावनैर्जलैरभिषिक्तः मूर्तिमतीभिर्मागधजनभावनाभिरिव सुवासिनीभिः

हर्षविकसितनयननीरजाभिः कृतनीराजनः मगधसाम्राज्याधीश्वरत्वमलभत ।

उदगाच्च तस्मिन् क्षणे प्रोद्घोषयन् नूतनमगधसम्राजो यशः भीषयन् मागधसाम्राज्यरिपून्, समाश्वासयन् मागधसाम्राज्यसुहृदः, दिङ्मण्डलनिनादी, महान् तूर्यध्वनिः''''युगपत्प्रहतविविधमङ्गलवाद्यनिनादानुसृतं यं श्रुत्वा शतगुणितोल्लासाः प्रमोदातिरेकविस्मृतस्वपरभावाः उल्लङ्घितसर्वमर्यादा मागधाः जयजीवेत्यादिभिर्घोषैरम्बरतलं, सर्वतो मुक्तहस्तं क्षिप्यमाणैः सान्द्रैर्गन्धचूर्णैराशाचक्रं, सरभसं पतद्भिर्नृत्यपदक्षेपैः धरातलञ्च प्रकम्पयितुमारभन्त ।

एवं समुल्लङ्घ्य सर्वमर्यादाः उन्मुक्तभावं प्रवहद्भिः जनसामान्योल्लासैर्मन्थरगताविव शनैः शनैः परिणतिं प्राप्ते तस्मिन् अहनि, अचिरोदितस्य मगधसम्राजस्तच्छतगुणितं तेजो वीक्ष्य लज्जारक्तमुख इव पश्चिमाम्बुनिधौ निपत्यादृश्यतां याते भगवति प्रभाकरे, प्रफुल्लचेतोभिर्मागधैरुत्क्षिप्तेषु गगनवितानसंलग्नेषु पुष्पेष्विव सायन्तनाकाशतलमलङ्कुर्वत्सु असंख्येषु नक्षत्रेषु, देवतायतनेषु, सभामण्डपेषु प्रासादेषु नगरारामेषु राजमार्गेषु नगरचत्वरेषु महाप्राकारे—तत्र-तत्र राजधान्यां प्रज्वाल्यासंख्यान् मन्दवायुलहरी-प्रकम्प्यमानतेजःशलाकान् दीपान् निशामुखमपि सुप्रभातीकुर्वत्सु प्रवर्द्धमानोत्साहभरेषु नृत्यगीतवाद्यमहोत्सवाम्बुधौ अधिकाधिकमेव निमज्जत्सु मागधेषु नरनारीजनेषु''''सम्राट् चन्द्रगुप्तो धृतसामान्यमागधवेषः सर्वतः प्रचलितमहोत्सवपरम्परालुण्ठितचित्तैः रक्षकैरलक्षितः, निर्गत्य प्रज्वलितप्रदीपपरम्पराप्रभाप्रकाशितात् गगनचुम्बिनो महाप्रासादात् निगूढकृपाणमात्रद्वितीयः निर्जनेन पथा केनचित् प्राप्तोऽतिपरिचितं शान्तं नीरवं देवालयाराममदृष्टपूर्वमहोत्सवावलोकनकौतूहलादधिगत्य स्वगुरोराज्ञां राजधानीं प्रविष्टैराश्रमयुवकैः शून्यशून्यं'''' तत्र शान्तविहगकूजनस्य निवातनिश्चलस्य स्वयमपि समाधिमभ्यस्यत इव महतस्तस्य वटवृक्षस्याधस्तात् निःस्तब्धं निषण्णस्य जपमालाव्यापृतकराङ्गुलेः स्वगुरोः पादकमलयोर्विनतोऽनुग्रहदृष्टिमयाचत ।

आर्यचाणक्यस्तु''''बलाढ्यतमभारतीयसाम्राज्याधीश्वरपदारूढस्यापि पूर्ववदेव विनयनम्रस्य पुत्रतुल्यस्य तस्य सौम्यां मूर्तिमवलोक्य सगद्गदोऽभिषेकस्नानार्द्रे मूर्ध्नि आघ्राय, सद्यःप्रमृष्टाभिषेककुङ्कुमतिलकाव-

शेषरञ्जिते ललाटफलके परिचुम्ब्य शुभाशीर्वचनैः सन्तोष्य, शनैः शनैरुवाच—

'वत्स ! स्वकर्तव्यपालनविमुखाद्विषयोपभोगकर्दमलिप्तमनसस्तस्मात् धननन्दात्—परिहार्यं सामान्यजनसंक्षोभम् अदत्त्वा च यवनेभ्यस्तच्चिर-प्रार्थितमान्तरिकविप्लवावसरं एतन्महत् साम्राज्यं हृत्वा तदधीश्वरपदे कर्तव्यदक्षं सुविनीतमदम्योत्साहसम्पदोपेतं त्वां स्थापयतो मम पूर्णकल्प एव प्रतिज्ञाभरः।

'त्वं हि महत्तमे कुले समुत्पन्नः आबाल्यादनुशासितः, महतोऽस्य राज्यस्य परिपालनं संरक्षणं परिवर्द्धनञ्च सुनिपुणं कर्तुं समर्थ एव। त्वामेव सुप्रतिष्ठितमवलोक्य ऋणमुक्तमिवाऽऽत्मानं भारतमातुः परिकल्पयत् उत्सुकायते मम मानसं पुनरपि हिमालयोपत्यकास्तपश्चरणार्थमुप-सेवितुम्।

'एका एव तु चिन्ता मां बाधते। न सम्पादिता वत्सस्य कृते निष्क-लङ्का साहाय्यसम्पद् यामवलम्ब्य—मयि इतो निवृत्ते वत्सो महत्तराणां कर्तव्यानां परिपालने समर्थः स्यात्। सन्ति नाम सेनापतिभागुरायणादयः सेनाधिकृताः, सुवर्णदासादयश्च वणिक्श्रेष्ठाः परन्तु न ते तावद्वत्सस्य निरपवादविश्वासयोग्याः। यैर्हि नाम तत्तत्प्रलोभनवशात् स्वस्वामिनो वंशपरम्परासेवितस्य विनिपातनेऽस्माकं तथा साहाय्यमनुष्ठितं तेषु अनति-विश्वास एव वत्सस्य कल्याणप्रदः।

'एक एव नाम मगधप्रशासनाधिकृतेषु प्रमुखतमेषु वत्सस्य आत्य-न्तिकविश्वासयोग्य इव लक्ष्यते। स चामात्यवरेण्यो राक्षसः। सत्यम्....। स्वामिनस्तादृशं घातं साक्षात्कृत्य नितान्तमुद्विग्नः स्वस्वामिवैरनिर्यात-तनार्थं कृतप्रतिज्ञः, कपटव्यूहसञ्चालकेभ्योऽस्मभ्योऽपायमात्मनः शंकमानः, स्वसुहृदावासे निभृतं निलीनः, चारनेत्रैरस्माकं गतिविधिं सततं निरीक्ष-माणः वत्सस्य नन्दवंश्यत्वेऽविश्वसन्, वृद्धस्य सर्वार्थसिद्धेः पुनरपि मगध-सिंहासनारोपणे सोत्साहः, तन्मात्रेणाभिप्रायेणावशिष्टान् स्वपक्षधरान् अवचिन्वन्, सः वत्सस्य बलवत्तमः शत्रुः। तथापि सर्वार्थसिद्धेर्विषये नैराश्यं लम्भितः वत्सस्य नन्दवंश्यत्वविषये विश्वासञ्च, धन-नन्दहत्याकाण्डोद्देश्यविषये समुद्बोधितः सः तिरस्कृत्याऽस्माकम-नुरोधं गजनिमीलिकया समुपेक्ष्य प्रत्यहं वर्द्धमानं यवनसंकटं मगध-

साम्राज्यस्य चिरन्तनानां रिपूणां वशंवदो भूत्वा अस्मन्नाशमात्राय प्रयतमानः अस्माकं खड्गमात्रजय्यः स्यात्—इति तु न मम अन्तरात्मा गदति। बलवती नूनं तस्य स्वामिभक्तिः। बलवत्तरा तस्य नन्दवंशभक्तिः। बलवत्तमा तु तस्य स्वमातृभूमिभक्तिः।'

'महती खलु ममाऽऽकांक्षा तत्सदृशेन राजनीतिधुरन्धरेण स्वामिभक्तेनामात्यवरेण्येनोपोद्बलितसाहाय्यसम्पदं वत्सं वीक्ष्य समाश्वस्तः निश्चिन्तेन मनसा तपस्तप्तुं पुनरपि नगाधिराजवनराजीः शरणीकरिष्यामि' इति।

'एतां सफलीकर्तुं तास्ताः उपाययोजनाः पर्यालोचयता मयाऽद्यैव प्रभाते प्रस्थिते वत्सेऽभिषेकमण्डपं सुचिन्तितोपाययोजना एका यामनुसरतामस्माकं न केवलम् अमात्यराक्षससदृशराजनीतिधुरन्धरपुरुषविशेषलाभः अपितु मलयकेतुसदृशरिपुतेजोविनाशोऽपि नितरां सुशक्यः।'

उपक्रम्य चेत्थं स विप्रवरो विनयावनतायैकाग्रचित्ताय तस्मै भाविकार्यपद्धतिं मन्द्रस्वरेण सूचयामास। सुगृह्य च तां स्वगुरोः नवीनतमं राजनीतिपाटवाविष्कारं वीक्ष्य परं प्रभावितः स सम्राट् तदनुष्ठानभारमङ्गीकृत्य तदनुज्ञातः स्वप्रासादं न्यवर्तत।

प्रससार चाचिरादेवैकस्मिन् सुप्रभाते नातिप्रौढे चण्डकिरणे सुप्तोत्थितायां मगधराजधान्यां, राजकीयसमुद्घोषकैः सडिण्डिमनिनादमुद्घुष्यमाणा राजकीया घोषणा यत्—

'चतुःसमुद्रवलयाङ्कितवसुन्धराधिपतिः सुकीर्तिधवलितदिङ्मण्डलोऽसह्यप्रतापानलदग्धरिपुमण्डलः सम्राट् चन्द्रगुप्तः समाज्ञापयति—अद्य प्रथमे सायन्तने यामे राजकीये न्यायभवने सम्राट् स्वयं तथा निर्वृत्तस्य भीषणस्य नन्दवंशघातकाण्डस्य तथ्यस्य गवेषणं, तादृशमहापातकाऽनुष्ठातृणां दण्डविधानं, मगधसाम्राज्यद्रोहिणः दुःसाहसिकस्य पर्वतेश्वरस्य न्यायविचारञ्च करिष्यति' इति।

निशम्य तु तां समुपजातकौतूहलाः लोमहर्षकराजहत्याकाण्डवृत्तान्तश्रवणोत्सुकाः मागधाः कथञ्चित् परिसमापित-दैनन्दिनव्यवहारा अपराह्णत एव न्यायसभाभवनं गन्तुं प्रारभन्त····येन तदचिरादेव चर्चामुखरनरनारीजनपूरितमुख्यसभागृहं सोत्कण्ठमागधपुरन्ध्रीभूषितवातायनं

राजदर्शनमात्रकुतूहलिबालकवृन्दाधिष्ठितवृक्षोद्यानं चिरायितालब्धप्रवेश-नरव्याकुलप्रवेशमार्गं मानवमयमिव बभूव ।

अथ यथासमयं प्रविष्टेषु, यथाऽधिकारं स्वासनानि भूषयत्सु, शुभ्र-वस्त्रेषु धीरगम्भीरेषु न्यायाधिकृतेषु राजपुरुषेषु, उपस्थिते सशस्त्रसैनिक-परिवेष्टिते मलिनवेषे निष्प्रभे शृङ्खलानिगडितहस्तयुग्मे पराभवम्लाने पर्वतेश्वरे, उपस्थापितेषु सशस्त्रसैनिकपरिमण्डलितेषु लौहशृङ्खलानि-गडितहस्तपादेषु प्रवृद्धश्मश्रुजालभीषणतरदर्शनेषु आरक्तारक्तनयनेषु नन्द-वंशघातकेषु पुरुषेषु, कौतूहलविरतवार्त्तालापेषु प्रोन्नमितवदनेषु तानेव निर्निमेषमवलोकयत्सु सभाभवनाभ्यन्तरवर्तिषु नरनारीजनेषु, रत्नखचित-सौवर्णयष्टिधारिभिः प्रतिहारिभिः 'इतो इतो देव' इति गम्भीरया सभा-गृहनिनादिन्या वाण्या समुपदिश्यमानमार्गः, शशिकरधवलवेषः निष्कलङ्क-मौक्तिकमालाऽलङ्कृतवक्षःकपाटः सम्राट् चन्द्रगुप्तः प्रविश्य सभागृहं स्वीकृत्य च सादरं ससंभ्रमञ्चोत्थितानां सभ्यानां न्यायाधिकृतानाञ्च प्रणामान्, सभाध्यक्षपदमलञ्चकार आदिदेश च न्यायाधिकृतेषु मुख्यतमं विचारप्रारम्भणार्थम् ।

तेन च नीरवे तस्मिन् महति सभाकक्षे निनदन्त्या धीरगम्भीरया वाण्या सविस्तरं निवेदिते राजहत्याकाण्डवृत्तान्ते, नन्दवंशघातकत्वेन समुपस्थापितान् क्रूराकृतीन् पुरुषान् एकैकशः तथ्योद्घाटनकुशलमतिनाऽ-परेणाधिकारिणा परीक्षयाञ्चक्रे, तन्मुखेभ्यश्च राक्षसपक्षपातिभिर्नाम गूढपुरुषैः प्रचुरद्रव्यलोभेन तादृशनिर्घृणकार्यानुष्ठानार्थं क्रीतान् विनि-युक्तांश्च तान् विज्ञाय क्रुद्धो नाम सहसा पर्वतेश्वराभिमुखः उपहसन्निव तच्छौर्यदर्पं, 'भवत्सदृशरणनीतिधुरन्धरस्य मुष्टिमेयबलमात्रसाहाय्येना-कस्मात् पाटलिपुत्रसदृशबलाढ्यराजधानीसमाक्रमणदुःसाहसमस्माकम-नल्पविस्मयजनकम्' इत्यगदत् ।

पर्वतेश्वरस्तु परिभवदुःखदन्दह्यमानमानसः उपहसन्तीं तां यूनो मगध-सम्राजः प्रश्नवाणीं निशम्याधिकतरमेव क्षुभितः, परित्यक्तजीविताशः, श्रावयन् तीव्रस्वरया वाचा सर्वानपि सभ्यान् आत्मानममात्यराक्षस-कूटनीतिभक्ष्यमुद्घोषयामास । समर्पयामास च तत्कालपर्यन्तं सुगोपितं गूढाऽऽवाहनपरं मुद्राङ्कितं राक्षसस्य पत्रं प्रमाणत्वेन । सम्राट् तु सुचिर-मधीत्येव तत् सन्दिहान इव तत्प्रामाणिकत्वे, न्यायाधिकृतेभ्यस्तद्ददौ । तैश्च तन्मुद्राप्रामाणिकत्वे सर्वसम्मत्या स्वीकृते,—परमुद्विग्नो नाम,—

राक्षसस्य स्वामिद्रोहितां प्रस्थापयत् अपरं प्रमाणं प्राप्य, 'आभ्यन्तरिक-कलहरूपच्छिद्रावसरं लब्ध्वा परराज्याक्रमणं खलु शास्त्रसम्मतार्थनीतिः। सा चानेन कपटनीतौ नातिकुशलेन नृपेणानुसृता। अतो नायमक्षम्य-दोषभाग्', इति विचारयन्तो, भारतवर्षस्य वर्तमानपरिस्थितौ सर्वेषा-मेव भारतीयनृपाणां परकीययवनाक्रमणप्रतिरोधार्थं सौहार्दमूलकमैक्यं नितरामभीष्टम्, अतोऽनेनापराधक्षमापणेनानुकूलीकृतो एतत्सुतो मलय-केतुः विस्मृत्य परम्परागतमुभयपक्षहानिकरं वैरभावमस्माकं परमसुहृत् भूत्वा यवनप्रतिरोधे साहाय्यकारी भवेत्—इत्याशंसमानाश्च वयं पर्व-तेश्वरं निगडबन्धनात् मुञ्चामः, बहुमानयामः स्वसुहृत्त्वेन, राजहत्या-सदृशमुभयलोकविरुद्धं पातकमर्थलोभेन कुर्वतामेतेषाञ्चाऽऽजीवन-कारावासं सश्रमं दण्डरूपेणोद्घोषयामः' इति श्रावयित्वा स्वनिर्णयं, पश्यतां चकितानां सर्वेषां सभ्यानां, मोचयित्वा राजबन्दिनं निगड-बन्धनात्, विस्मयजडं भावनातिरेककम्पमानगात्रम् अश्रुजलप्लावित-श्रान्तनयनं, तं सादरमासन एकस्मिन् स्थापयामास, समुद्घोषयामास च·····'एवं सुचिरं विचार्यमाणानि तानि तानि प्रमाणानि नूनं मगधसाम्रा-ज्यस्यैकनिष्ठसेवकत्वेन प्रसिद्धं राक्षसमेव राजहत्याकाण्डपर्यवसितस्यास्य महतः कपटव्यूहस्य मुख्यसञ्चालकत्वेन संसूचयन्ति। तथापि न्यायप्रिया वयं प्रबलेष्वपि एतेषु प्रमाणेषु अविश्वसन्तः अश्रुत्वाऽमात्यवरेण्यस्याऽऽत्म-निवेदनं तं स्वामिहत्यासदृशमहापातककलङ्कितमुद्घोषयितुं नोत्सहामहे। आशास्महे चैतावत्कालपर्यन्तं वृथैव निभृतं क्वापि तिष्ठन् स्वसम्बन्धिनीं दोषाशंकां सर्वत्र प्रसृतां स्वाचरणेन परिपोषयन् अमात्यवरेण्यः साक्षात्-कृत्याऽऽत्मनोऽनुचितं वर्तनं दोषमिममसह्यमितः परं सोढुमसमर्थः शीघ्र-मेवास्माकं न्यायभवने स्वयमागत्य, निर्भयः प्रबलतराणि प्रमाणानि समुपस्थापयेत् आत्मानञ्च निर्दोषं प्रख्यापयेत्। यदि तु नाम तेनास्माक-मौदार्यमसम्मानयता स्वात्मनः निष्कलङ्कता शीघ्रमेव न्यायदेवतां साक्षीकृत्य न प्रमाणिता तर्हि वयं मागधन्यायानुशासनमनुसरन्तः उपस्थापितप्रमाणान्येव प्रमाणीकुर्वन्तः तं न्यायदेवताशासनाद्गोपयितुं प्रयतमानान् दुःसाहसिकान् तत्सुहृदश्च मृत्युदण्डार्हान् उद्घोष-यिष्याम' इति।

उदीर्य चैवं न्यायासनात् सहसोत्थितः, स्वीकृत्य ससम्भ्रमुत्थितानां न्यायाधिकृतानां सभ्यानाञ्च सादरप्रणामान्, दण्डधारिभिः प्रतिहारि-

भिरुपदिश्यमानमार्गः न्यायभवनात् निर्ययौ। उदगाच्च सहसा प्रतिनिवर्तमान-चर्चामुखर-नरनारीजनसहस्रकोलाहलसम्मिश्रितः न्यायसभाधिवेशनसमाप्तिसंसूचको महान् तूर्यध्वनिः।

अमात्यराक्षसस्तु सभायाः सद्यः प्रत्यागताद्भाव्यपायशंकासमुद्विग्नात् वणिक्श्रेष्ठात् स्वमित्राच्चन्दनदासात् श्रुतसर्वन्यायविचारः, अचिराधिगतसाम्राज्यं जनप्रियं स्वशिष्यं मुखरीकृत्योद्देश्यविशेषसिद्ध्यर्थं प्रयतमानमार्यचाणक्यं सर्वसूत्रसञ्चालकत्वेन समुत्प्रेक्षमाणोऽपि तस्योद्देश्यशेषस्य निर्धारणेऽसमर्थः, 'तथा भ्रंशितस्य नन्दवंशस्य पुनरपि सिंहासनाधिरोपणे बद्धपरिकरान्निभृतमिह स्थित्वा नन्दवंशानुरागिषु तेषु तेषु राजपुरुषेषु च वास्तविकपरिस्थितिनिवेदनपूर्वकमुपजापप्रयोगाननुतिष्ठतो मत्तोऽपायमाशंकमानो नूनं मां विनाशयितुमिच्छति स विप्रः। एतत् सर्वं न्यायविचारकपटनाटकमवश्यमीहितस्य तस्य प्रहारस्य भूमिकामात्रम्। विनष्टे च मयि एकमात्रावशिष्टस्य सुगृहीतनामधेयस्य वृद्धस्य सर्वार्थसिद्धेः पुनरपि सिंहासनाधिरोपणे बद्धपरिकरस्यान्यस्य सबलस्य नन्दवंशभक्तस्याभावात् शनैः शनैरनुकूलीभूतेष्ववशिष्टेषु नन्दवंशानुरागिषु निर्बाधं शासनं स्वशिष्यस्य संभावयति स द्विजः। तदधिकतरकालपर्यन्तमिहावस्थानं न श्रेयस्करम्। केनापि मिषेणेतो निर्गतस्य, तथा विप्रकृतस्य पर्वतेश्वरपुत्रस्याऽऽश्रये गत्वा सर्वां वस्तुस्थितिं तस्मै निवेद्य स्वामिनः पुनरपि सिंहासनाधिरोपणे तत्साहाय्यं सम्प्रार्थ्य तैस्तैः प्रलोभनैः तं वशीकृत्य तत्सहयोगेनाऽऽभ्यन्तरिकनन्दवंशानुरागिप्रजाजनोपजापनेन च स्वप्रतिज्ञापूर्तये प्रयतमानस्य मम यथा साफल्यसम्भवः न तथा दिवाभीतरीतिमनुसृत्येह निभृतं स्थायिनः, अहोरात्रं प्रतिपक्षिणः प्रहारं सर्वान्तकरमुत्पश्यतः' इत्यात्मनैव सुचिरं पर्यालोच्य स्व-भाविकार्यपद्धतिं प्राणाधिकाय स्वमित्राय चन्दनदासाय न्यवेदयत्।

तदनुमोदितश्च निधायात्मनः कृत्स्नमपि कुटुम्बभारं तस्यैव प्रासादे, तस्मिन्नेव निशामुखेऽभिषेकमहोत्सवावलोकनेन नयनोत्सवं विधातुं राजधान्यामागतमपरितृप्तमपि कार्यवशाद् गृहं प्रतिनिवर्तमानं ग्रामीणमन्यतमं पांसुलपादमात्मानं प्रकटतो दर्शयन्, स्वसदृशवेषधारिणा सेवकेन सिद्धार्थकेनानुगम्यमानः, सन्ततप्रवहमानापारजनौघदुर्लक्ष्यविशेषः राजधान्या निर्गतः, दिनानि कानिचित्तथैवानवरतं प्रवसन् नातिप्रसिद्धस्य नन्दवंशभक्तस्य वृद्धस्य सामन्तस्यैकस्य गृहे कृतविश्रामः तत्प्रदत्तमश्वमेकमारुह्य

प्रचलितः, स्वपितुस्तादृशं पराभवं सोढुमसमर्थाय परम्परागतवैरनिर्यातनार्थं दृढतरबद्धपरिकराय मृगयापदेशेन विहाय राजधानीं स्वामात्येषु मगधसाम्राज्यसीमासमीपवर्तिनि निविडे वनप्रदेशे सहाश्वारोहिण्या सेनया क्लृप्तनिवासाय चारनेत्रैः प्रतिपक्षिणः बलाबले पर्यालोचयते मलयकेतवे स्वागमनं दूतमुखेन निवेदयामास।

मलयकेतुस्तु मगधराजधान्याः सद्यःप्रतिनिवृत्तेभ्यो गूढदूतेभ्यो विज्ञाय साम्राज्याभिषेकमहोत्सवं निर्विघ्नं सोत्साहञ्च सम्पन्नं किञ्चिन्न्यूनीभूतावेशः, निशम्य राजकीयन्यायसभावृत्तान्तं परं विस्मितः, 'मम पितुस्तथा सम्माने नूतनसम्राजः कीदृग् नाम स्वार्थं' इति विनिश्चेतुमपारयन् भाविकार्यपद्धतिमात्मनैव बहुधा कल्पयन्, धूमकेतुमिवाकस्मादुपस्थितं मागधसाम्राज्यस्य प्रधानतमं राजपुरुषमवलोक्याधिकतरमेव सन्देहदोलामारूढः, संवृताकारः, 'प्रवेश्यतां सबहुमानम्' इति प्रकटमाज्ञापयामास।

सादरं प्रवेशितात् धूलिधूसरितसर्वाङ्गात् निस्तेजस्कात् कृतासनपरिग्रहात्तस्मात् मगधसाम्राज्यशत्रूणां नन्दवंशपतनपर्यवसायिनं कूटवृत्तान्तमादितो निशम्य, तादृशे महति कपटव्यूहजालेऽविश्वसन्, निशम्य तस्य सहयोगदानप्रार्थनां 'नूनमयमस्माकं शत्रूणां कपटप्रकरणस्य नूतनोऽङ्कः। विषयलोलुपतया संक्षीणोत्साहसम्पदं धननन्दं ससुतं सिंहासनात् भ्रंशयित्वा स्वमनोरथपरिपूर्तिसमर्थञ्चैकमज्ञातकुलशीलं मागधं युवकं नन्दवंश्य इति तत्स्थाने स्थापयित्वा, कुटिले स्नेहकपटजाले तातं तथा निगड्य्य, उत्साहस्य परमां काष्ठामधिरूढाः समस्तमपि भारतवर्षं यवनाक्रमणनिवर्तनव्याजेन स्वयमाक्रमितुमिच्छन्त एते मागधा राजपुरुषाः स्वोद्दिष्टपरिपूर्तौ मामेव प्रतिरोधं मुख्यं मन्वानाः निक्षिप्यान्यत् कपटजालं तत्र मामपि निगडयितुं विनाशयितुञ्चेच्छन्ति। अयञ्च तेषामग्रणीः—मन्ये एतदेवोद्दिष्टमादितः परिकल्प्य अन्येषां प्रच्छन्नानां कपटनाटकाभिनेतॄणां सहमत्या मगधसिंहासनाधिरूढान्नूतनात् सम्राजः समुद्भूतप्राणसंकटमिवात्मानं प्रकटयन् तद्रिपुं मां शरणीकृत्य प्रोत्साह्य च मगधराज्याक्रमणायाकस्मात् तस्मिन् कपटजाले पातयितुमिहाऽऽगतः। एवमेतत्। अन्यथा प्रागनेकवारं परीक्षितमस्य मागधसाम्राज्यप्रेम क्व, क्व च तस्यैवाऽऽक्रमणार्थं मामेवमुद्दीपयितुमिहैवागमनं। भवतु नाम, शठं प्रति शाठ्यम् इति राजनीतेः सदातनो नियमः। मां कपटगर्ते पातयितुमिहा-

ऽऽगतमिमं प्रति कपटेनैव व्यवहरन्, मिथ्यैवाऽऽश्वासयन् स्वसमीप एव स्थापयित्वा गूढचारनेत्रैरेतस्य गतागतेऽवलोक्य समुपस्थिते समुचितेऽवसरे प्रहारेणैकेनैवैन मेतन्मनोरथाधारभूतं मगधसाम्राज्यञ्च निखिलं विनाशगर्ते पातयिष्यामि' इति पर्यालोच्य, अविश्वसन्तमिवात्मानं प्रकटतो दर्शयन् तत्सदृशराजनीतिधुरन्धरपुरुषसाहाय्यलाभसंसूचितायां भाग्यसम्पदि अत्युत्सुकमिवात्मानं प्रकाशयन् मागधसाम्राज्याक्रमणे तस्यानुरोधं स्वीचकार।

प्रार्थयामास च 'योग्यमवसरं प्रतिपालयद्भिर्बहुमूल्येन मार्गप्रदर्शनेन मामनुगृह्णद्भिराक्रमणसन्नाहं कारयद्भिरमात्यवरेण्यैरितः प्रभृति सन्निधावेव मम वासः कार्य' इति।

अमात्यराक्षसोऽप्यविदिततदीययथार्थाऽभिप्रायस्तस्येममनुरोधं स्वीचकार।

—:※:—

## अष्टादशः परिच्छेदः

प्रससार च दावानलवेगेनाचिरादेव न केवलं पाटलिपुत्रेऽपि तु समस्ते मागधसाम्राज्ये समुत्तेजयन्ती जनसामान्यहृदयं वार्त्ता यत्—'साम्राज्यस्य वंशपरम्परागतोऽमात्यवर्यः कीर्तिशेषस्य सम्राजो धननन्दस्य विश्वासैकभाजनं, राक्षसः, नूतनसम्राजा न्यायदेवतासमक्षं स्वनिर्दोषित्वप्रख्यापनार्थं प्रदत्ताऽवसरोऽपि, वहन् स्वामिघातमहापातककलङ्कं, रक्षत्सु सर्वाणि निर्गमद्वाराणि नगरसैनिकेषु पाटलिपुत्रान्निभृतं प्रपलायितः तिरस्कृत्य मागधं सौहार्दप्रस्तावं तत्साम्राज्यविनाशार्थमेव बद्धपरिकरेण पर्वतेश्वरपुत्रेण मलयकेतुना मिलितो, मगधशासनयन्त्रस्य सैन्यबलस्य च तानि तानि रहस्यानि प्रकाशयन् तत्समक्षं, अदत्त्वा स्वल्पमप्यवकाशं नूतनसम्राजे चन्द्रगुप्ताय मागधसामर्थ्यस्य पुनः संघटनार्थं, मगधराजधानीसमाक्रमणाय प्रोत्साहयन्नास्ते। सन्दिग्धराजपुरुषत्वेन तथा प्रोद्घोषितस्यापि असाधारणव्यक्तिमत्त्वसुलक्ष्यस्यापि चिरपरिचिताकृतेरपि तस्य राजधानीतः तथा प्रपलायनेन मलयकेतुसदृशसहजशत्रुसमाश्रयणेन च नितरां क्रुद्धेन सम्राजा सर्वजनसमक्षमधिक्षिप्तोऽननुभूतपूर्वेणापमानेन परं निर्विण्णो भागुरायणश्च राजधान्यां प्रसार्य चारबलं राजद्रोहिणो राक्षसस्य प्रपलायने साहाय्यकर्तॄन् अहोरात्रम् अन्वेषयन्नास्ते' इति, यां निशम्य प्रायः सर्वेऽपि न्यूनीभूतसाम्राज्याभिषेकमहोत्सवोल्लासा राक्षसस्य स्वामिद्रोहित्वे दृढतरीभूतविश्वासाः 'तत्सदृशेन मागधसाम्राज्यमर्मस्थलाऽभिज्ञेन परिवर्द्धितसामर्थ्यो मलयकेतुः सत्यमेव कदाचित् मगधराज्यमाक्रमेत्' इत्याशङ्कया किञ्चिदभिभूता व्यग्रा इव बभूवुः।

इयञ्च तेषां व्यग्रता कतिपयदिनानन्तरमेव सर्वत्र प्रसृतया 'सर्वस्पर्शि गूढपुरुषजालं राजधान्यां प्रसार्य राक्षसपक्षपातिनोऽहर्निशमन्वेषयता भागुरायणेन नगरस्य सर्वप्रमुखः श्रेष्ठी वृद्धश्चन्दनदासः एवाऽपराधित्वेन निगृहीतः, 'स्वामिद्रोहपातकेन कालत्रयेऽप्यस्पृष्टाय विपरीतभाग्यचक्रवशाद्दोषभाजनीभूताय मागधसाम्राज्यरक्षणबद्धपरिकराय प्राणाधिक-

मित्रायामात्यराक्षसाय साहाय्यं यथाशक्ति ददता मयोभयलोकगतिरेव पालिता' इति सगर्वमङ्गीकुर्वन्, मगधसम्राजः समक्षमुपस्थापितः, सम्राजा च क्रोधवशादनाहूयैव न्यायसभाधिवेशनं विधिवत् सन्दिग्धापराधिन्यायविचारार्थं स्वयमेव न्यायदण्डं धारयता साम्राज्यद्रोहसदृशभीषणदोषप्रत्याख्यानार्थं प्रमाणानि समुपस्थापयितुमाज्ञप्तः, 'वंशपरम्परया मगधसाम्राज्यसेवकस्य महनीयकीर्तेः शत्रुभिरपि संस्तुतस्वामिभक्तेः स्वप्नेऽपि नन्दवंशस्याऽनिष्टमचिन्तयतः प्रियसुहृदः अमात्यवरेण्यस्य परिरक्षणं साम्राज्यद्रोह इत्येव तावन्नाङ्गीकरोमि। तत् कीदृग् नाम तत्सदृशभीषणदोषप्रत्याख्यानम् ? कीदृशश्च तत्र प्रमाणोपन्यासः ?' इति सगर्वं वदन्, 'यदि भवतः सुहृन्निष्कलङ्कस्तर्हि के तावत् नन्दवंशविनाशपर्यवसायिकपटसूत्रधाराः'– इति सम्राजा स्वयं पृष्टः, 'यैस्तावत् कपटकुटिलैस्तद् भीषणं कृत्यं सम्पादितम् तान् मम सुहृत् सुष्ठु जानाति। नियतिः नूनं तान् यथासमयं जनताजनार्दनसम्मुखं न्यायविचारार्थं समुपस्थापयिष्यति' इत्येव गदन्, अपराधिनामरहस्योद्घाटनार्थं विस्मितेन सम्राजा वारं वारं समाज्ञप्तोऽपि, 'न कोऽपि लाभस्तेन रहस्येनास्यां परिस्थितौ समुद्घाटितेन—' इत्येव वदन्, अनादरकुपितचेतसा क्रोधातिरेकारक्तनयनेन सम्राजा समुपस्थितप्रमाणान्युररीकृत्य राक्षसमेव स्वामिद्रोहकलङ्कितं चन्दनदासञ्च तत्प्रपलायनसाहाय्यकारिणं विनिश्चित्य मृत्युदण्डार्हत्वेन समुद्घोषितः, आगामिन्याममावास्यायां पश्चिमाम्बुनिधौ निमज्जति सहस्रकिरणे महाप्राकाराद्बहिः परिकल्प्यमानस्य यमराजतर्जनीभीषणस्यायःशूलस्यावतंसीभूय प्रेतराजसदनातिथिर्भविष्यति' इति वार्त्तयाऽपरयाऽधिकमेव समुत्तेजिता बभूवुः।

अमात्यराक्षसस्तु मलयकेतुना तथा सबहुमानं स्वसन्निधौ स्थापितोऽपि वैरनिर्यातनोत्सुकोत्सुकः, हिमालयोपत्यकावर्तिषु तेषु तेष्वाश्रमेषु विश्वासपात्रीभूतान् गूढदूतान् संप्रेष्य वृद्धस्य सर्वार्थसिद्धेर्वृत्तमधिगन्तुं प्रयतमानः, साहाय्यप्राप्त्याशया शरणीकृतस्य मलयकेतोः स्वभावं निभृतमवलोकयन्, प्रत्यहं समापतद्भ्यो गूढपुरुषेभ्यो मगधराजधानीवृत्तान्तं जानन्, स्वप्रपलायनजनितं मागधशासनसूत्रधारिणां चित्तक्षोभमपेक्षमाणोऽपि चन्द्रगुप्तभागुरायणयोर्वैमनस्योद्भववार्त्तां निशम्य किञ्चित् कौतूहलाक्रान्तः, 'प्रसारितेऽपि विस्तृते गूढचारजाले भागुरायणो मम साहाय्यकारिणं चन्दनदासं नैव कदापि लमेत' इति समाश्वस्तहृदयो-

ऽचिरादेव कर्णपथमापतिततयाऽशनिपातसन्निभया तद्बन्दीकरणवार्त्तया विस्मितः अविगणय्यापरिमिता अपि यातनाः स्वसुहृत्कुटुम्बनिवास-रहस्यं भागुरायणस्य पुरतोऽप्रकाशयतस्तिरस्कृत्य परिणामभयञ्च स्वसुहृत्-साहाय्यकारित्वं साभिमानं मगधसम्राजं श्रावयतस्तस्य मनोबलं वीक्ष्य मुग्धहृदयः 'तृणीकृत्यैतान् क्षुद्रान् प्राणान् सुहृदयं प्राणसंकटादस्मात् रक्ष-णीयः' इत्यात्मनैव सम्प्रधार्य, 'मत्प्राणापघातसम्भावनां मनसिकृत्य स्वस्वार्थविघाताऽऽशंकया प्रेर्यमाणो मलयकेतुः कदाचिन्मां अस्मात् कर्त-व्यात् बलाद्व्यावर्तयेत्' इति विचार्यानिवेद्यैव तस्मै स्वमनोगतं मिषेण केनचित् तत्स्कन्धावारान्निर्गतः, जवनाश्वारूढः, प्राक्शरणीकृतस्य तस्यैव नन्दवंशभक्तस्याल्पख्यातेः वृद्धसामन्तस्यावासं प्राप्तः, तत्र च सङ्गतैरपरैः कैश्चिन्नन्दवंशभक्तैः कवचावृतकायैः शस्त्रभीषणैरश्वारो-हिभिः सामन्तैस्तदनुयायिभिश्चोपोद्बलितसामर्थ्यस्ततः प्रस्थितः परिहरन् मार्गस्थानि सैनिकरक्षास्थानकानि प्रभञ्जनगत्या मार्गमाक्रामन्, प्राप मित्रकार्यार्थं प्राणानपि त्यक्तुं प्रवृत्तस्य स्वनामधन्यस्य चन्दनदासस्य निधनं तादृशं द्रष्टुमसमर्थ इव पश्चिमाम्बुनिधौ निपत्य अदृश्यतां याते भगवति मित्रे, तद्हत्याप्रसङ्गं रोद्धुमसमर्थानाम् अगतिकानां चन्दनदास-सुहृदां हृदयेषु अविरतज्वालं ज्वलतो दुःखाग्नेर्ध्वंजेनेव प्रतिरुध्यमाने ध्वान्तेन दिक्चक्रे, दोषबहुले कलिकाले दुर्लभस्य तादृशस्य त्यागवृत्तान्त-स्योदन्तमधिगत्य सकौतुकं दिदृक्षयोपस्थितानां दिविषदां यानमण्डलेनेव व्याकुलिते नक्षत्रमण्डलेन गगनाङ्गणे. महाप्राकारस्य बहिरेव विद्यमानं वधप्रसङ्गावलोकनौत्सुक्यवशात् परित्यज्यान्यत् कार्यजातं समुपस्थितैः श्वचिद्राजदण्डस्य न्याय्यान्याय्यतां सावेशं प्रतिपादयद्भिः, अन्यत्र समु-चितावलोकनस्थानलिप्सया परस्परं कलहायमानैः, कुत्रचित् दृष्टपूर्वान् मृत्युदण्डप्रसङ्गान् सरोमाञ्चं श्रावयद्भिर्विविधवयोवेषवृत्तान्तैर्मागधनर-नारीजनैर्व्याकुलं वधस्थानम्। दधाव च किञ्चिदप्यन्यूनीकृतवेगः, आकाशात् पतितमिव भूमिं विदार्योत्पतितमिव घनीभूतमन्धकारपुञ्जमिव चलाय-मानमकस्मादवतीर्णं स्वल्पसंख्यमपि वेगदुष्प्रसह्यं लौहकवचावृतसर्वाङ्ग-तया दुर्लक्ष्यविशेषमश्वारोहिदलमवलोक्य भयकान्दिशीकैः आक्रोश-मुखरैर्मार्गपतितैर्जनैः प्रदीयमानप्रसरणावसरो वधस्थानमध्यवर्ति प्रज्व-लितदीपदण्डधारिभिश्चतुर्दिगवस्थितैः कारागारपुरुषैः प्रकाशितविशेषं, रक्तवस्त्रधारिणा रक्तचन्दनचर्चितपूर्वकायेण कर्णिकारकुसुममालाभूषित-वक्षःकपाटेन धीरगम्भीरमूर्तिना वृद्धेन चन्दनदासेन भूषितं, प्रतिफलित-

दीपदण्डप्रकाशेन रक्तकुसुममालालङ्कृतेन रक्तरञ्जितयमराजतर्जनीसदृशे-नायःशूलेन भीषणदर्शनं वधस्थलमुद्दिश्य। प्राप्य च तन्निमिषावसरे—'किमेतत्'—इति पश्यत्सु मुखं व्यादाय समस्तेषु नर-नारीजनेषु, 'मित्र-बलमेतदमित्रबलं वा' इति निश्चेतुं प्रयतमानेषु कतिपयेषूपस्थितेषु मृत्यु-दण्डदानाधिकृतेषु राजपुरुषेषु विस्मृत्य स्वकार्यं साश्चर्यमवलोकयत्सु राज-कीयेषूद्‌घोषकेषु, हठान्निवार्य वध्यपुरुषरक्षाधिकृतान् कतिपयान् सैनिकान्, अदत्त्वैव तेभ्यः खड्गोत्क्षेपायापि अवसरं, तडिद्वेगेन वध्यपुरुषं निगडित-मेव महाप्रमाणे तुरगे स्वीये आदाय,—आत्मानं पर्यवस्थापयितुमपारयत्स्वेव मागधसैनिकेषु, प्रभञ्जनगत्या तस्मात् स्थानान्निष्क्रान्तो भल्लभीषणैः स्वानुयायिभिरनुगम्यमानः, निमिषान्तरे सर्वतः प्रसृतघनान्धकारदुर्लक्ष्यो बभूव।

प्रवसंश्च तथैव गत्या प्रतिनिशं, परिहरन् जनसामान्यसम्पर्कं क्वापि प्रतिदिनं निभृतस्थानानिलयनेन, अवश्यंभावितयोत्प्रेक्षितमपि मगधसैन्यानु-धावनमननुभूय किञ्चिद् विस्मयमानचित्तः, निक्षिप्य स्वसुहृदं निगूढे स्थाने, मलयकेतुस्कन्धावारं प्रत्याजगाम। यथावसरं तं साक्षात्कृत्य सोत्साहं स्वाभियानवृत्तान्तं सफलीभूतमादितः प्रभृति सविस्तरमकथयत्। न्यवे-दयच्चात्मानं निगूढनिहितकुटुम्बभारं सुरक्षितमित्रसम्पदं नन्दवंशरिपूणा-मुत्पाटनेऽधिकतरमेव सामर्थ्योपेतम्।

दीर्घशंकी मलयकेतुस्तु-अनिवेद्यैव तस्मै स्वाभीप्सितमनधिगत्यैव तस्यानुज्ञाम् अवधीर्यैव तस्य साहाय्यं—तादृशस्य कार्यस्य कृते स्वस्क-न्धावारात्तथा निर्गतं तं ज्ञात्वाऽऽदित एव दुर्मनायमानः, सफलं सकु-शलञ्च तं प्रत्यागतं निशम्याऽपि नात्युल्लसितः, कृताकारसंगोपनस्तस्या-भियानवृत्तान्तकथनमात्मप्रौढिप्रख्यापनमेव मन्यमानोऽपि प्रकटतः परं मुदितमात्मानं तत्साफल्योपलब्ध्या दर्शयामास।

'कतिपयसैनिकमात्रसाहाय्यस्यालक्षितस्यैव केनापि मागधसैनिक-दलेन मगधसाम्राज्यप्रदेशे प्रसरणं, साक्षाद्राजधानीप्राङ्गणवर्ति वध-स्थानं यावत् निर्विरोधं गमनं, मन्त्रप्रयोगजडीकृतानामिव पश्यतामसं-ख्यानां मागधानां राजपुरुषाणां सशस्त्रसैनिकानाञ्च स्वमित्रस्य मृत्युमुख-प्रविष्टकल्पस्यापहरणं, ततश्चापसरणं, विशालमागधसाम्राज्यप्रदेशान्निः-सरणेच्छया च प्रवसतः केनापि मगधसैन्यदलेनाप्रतिरोधनं, एतत् सर्वं मम प्राक्तनीमेवाशंका द्रढयति। प्रसार्यं नूतनं कपटजालं तस्मिन् मामे-

कमात्रं बलाढ्यं मगधशत्रुं निगडयितुं विनाशयितुञ्च प्रयतमानानां मद्रिपूणां अग्रणीरयं तैस्तैरुपायैः मम मनसि विश्वासभावनामुत्पादयितुं प्रयतमानः, स्वसुहृन्मोचननाटकेनैतेन स्वकार्यं साधयितुमिच्छति। तच्छठं प्रति शाठ्यमेवावलम्बनीयम्'—इति चिन्तयंश्च कौतूहलादिव तस्याभियानवृत्तान्तविशेषान् तांस्तान् पृच्छन् नाम चिरमास्त।

एवं मागधराजधान्या बहिरेव देवतायतने परमशान्ते विराजमानस्य प्रत्यहं दर्शनार्थं समापततो भक्तगणस्योपरि पावनमुपदेशामृतं वर्षतः स्वप्रतिज्ञापूर्तयेऽहर्निशं गूढं प्रयतमानस्यापि प्रकटतः राजकारणविषये परममौदासीन्यं प्रदर्शयतः, सद्योऽधिगतसाम्राज्यस्य स्वशिष्यस्य चन्द्रगुप्तस्य महत्त्वं जनसाधारणसमक्षमक्षुण्णमभिकांक्षतो, राक्षसस्य सौहार्दप्राप्तिमेव केवलां समुद्दिश्य विविधान् उपायान् माध्यमेन तस्यैव प्रयुञ्जानस्याऽऽर्यचाणक्यस्य, प्रतिदिनं गूढोपदेशप्राप्तिमिषेण स्वगुरुं प्रत्यक्षीकृत्य तेन सह रहसि दैनिकीरन्यविधाश्च विविधा घटनाः पर्यालोचयतो, भाविकार्यपद्धतीश्च निर्धारयतः, प्रकटतस्तु केवलमात्मानमेव निखिलशासनयन्त्रसञ्चालकमाभ्यन्तरिकबाह्यराजनीतौ अवशंवदं कस्यापि प्रदर्शयतः, समस्तेऽपि मगधसाम्राज्ये देशदेशान्तरेषु च सर्वत्र प्रसृतैः परमविश्वासभाजनैश्चारनयनैर्बाह्याभ्यन्तरिकप्रतिपक्षिव्यापारान्निगूढमवलोकयतः, राक्षसपक्षधरान् तैस्तैरुपायैर्वशीकुर्वतः, बाह्यप्रतिपक्षिषु मगधसाम्राज्यचिरशत्रुं मलयकेतुमेवैकमुपद्रवकारिणं विनिश्चित्य तस्य सेनाया बलाबले गतागते च सततं पर्यालोचयतः, तन्मित्रससदि आभ्यन्तरतमायामुपजापप्रयोगान् प्रयुज्य सङ्कल्पितां कार्यपद्धतिमादित एव जानतः राक्षससम्बद्धां तस्याश्रद्धां सुविज्ञाय तां प्रतिदिनं गूढं तत्समीपवर्तिभृत्यवेषधारिस्वचारणमाध्यमेन समुत्तेजयतः, भागुरायणं पूर्ववन्निभृतं सम्मानयतोऽपि सर्वसमक्षं कृत्रिमकलहप्रदर्शनेच्छया तेषु तेष्ववसरेषु,-तत्पूर्वसम्मत्या-अधिक्षिपतः प्रतिदिनम् अधिकाधिकमसन्तुष्टमिव तेनात्मानं दर्शयतः, स्वसेनाबलं शासनयन्त्रञ्चाक्षुण्णशक्तिकं विधाय स्वस्य सुशासनेनार्जितप्रजाजनानुरागस्यापि परकीयेषु—विशेषतो मलयकेतो राज्ये—वाणिज्यापदेशेन सञ्चरमाणानां गूढपुरुषाणां माध्यमेन विविधा असत्या मागधजनसमुद्वेगवार्त्ताः प्रसारयतः सम्राजश्चन्द्रगुप्तस्य, हिमालयवर्तिषु प्रसिद्धाप्रसिद्धेष्वाश्रमपदेषु सञ्चरद्भ्यो गूढदूतेभ्योऽनधिगत्य नन्दवंशावशेषस्य सर्वार्थसिद्धेर्वार्त्तां प्रत्यहं निराशयाऽऽक्रम्यमाणहृदयस्यापि तैस्तैस्तर्कैः तत्कुशले

विश्वासमात्मनः पुनः पुनरुज्जीवयतः, शरणीकृतस्य पर्वतेश्वरपुत्रस्य संशयशीलमतिचञ्चलमविश्वसनीयञ्च स्वभावं प्रतिशोधभावनातीक्ष्णं प्रत्यपकारपरायणञ्च चरित्रं प्रतिदिनं स्पष्टतरमनुभूय शनैः शनैरुद्वेगभावनाभिभूयमानहृदयस्यापि 'सुगृहीतनामधेयं श्रीसर्वार्थसिद्धिं पुनरपि मगधसिंहासने स्थापयितुं प्रयतमानस्य ममायं मलयकेतुः साधनमात्रम्' इति विचार्याऽऽत्मानं पर्यवस्थापयतः, मलयकेतुना वारं वारं मागधशासनयन्त्र-सेनाबलदौर्बल्यस्थलानां मर्मणाञ्चाऽऽक्रमणाऽसहानां विषये परिपृष्टस्यापि 'प्राप्यैव स्वामिनः कुशलवार्त्तां विनिश्चित्यैव तस्य पुनः सिंहासनाधिरोहणेच्छां चन्द्रगुप्तोन्मूलने व्यवसायः कार्यः' इति स्थिरीकृत्य सङ्कल्पं स्वमनसि, 'एतादृशेनाचरणेनास्य मलयकेतोर्मद्विषयकश्चिरन्तनोऽविश्वासो दृढतरीभविष्यति नूनम्'—इति ज्ञात्वाऽपि मागधप्रशासनमर्मस्थलोद्घाटनं तैस्तैः अपदेशैः परिहरतः, अनिच्छतोऽपि वारं वारं मलयकेतुं चन्द्रगुप्तेन सह मनस्येव तुलयतोऽमात्यवरेण्यस्य,"""बहोः कालादभिलषितस्य मगधसाम्राज्यस्य स्वायत्तीकरणार्थं समुत्सुकस्यापि 'अत्र बलप्रयोगः सद्यः फलप्रदःस्यात्"""कूटनीतिप्रयोगो वा' इति सन्देहदोलादोलायमानचित्तस्य, अचिराधिगतसाम्राज्यं चन्द्रगुप्तं राजनीतावपरिपक्वमतिं समुत्प्रेक्ष्य तन्निर्मूलने कृतनिश्चयस्यापि तत्रोपायमेकं विनिश्चेतुमपारयतः, शरणागतेऽपि साहाय्यप्रार्थिन्यपि सुविज्ञातमगधसाम्राज्यभक्तौ राक्षसे विश्वस्य निरपवादं तत्प्रदर्शितेन मार्गेणोपाययोजनां विधातुमपारयतोऽपि तं शत्रुराज्यमर्मस्थलाभिज्ञम् भाग्यवशात् स्वयमागतं निष्कासयितुं स्वराज्यादनिच्छतः, सर्वत्र सततं प्रसरन्तीषु नूतनसम्राजश्चन्द्रगुप्तस्य निरन्तरं प्रवर्द्धमानां लोकाप्रियतां प्रख्यापयन्तीषु जनसामान्यवार्त्तासु-अपरीक्ष्यैव तासां सत्याऽसत्यतां,—अधिकाधिकं विश्वसतः, 'अपि नाम नियतिः मागधक्षोभाग्नौ शलभगतिं प्रापय्य इमं चन्द्रगुप्तम् अराजकताव्याकुलं समस्तमपि तत् साम्राज्यं परिस्थितिनिरीक्षणमात्रव्यापृताय मह्यमुपायनीकरिष्यति'—इति दुराशाऽऽग्रास्यमानविवेकस्य मलयकेतोश्च, अविदितकल्पा एव व्यतीयुः केचन मासाः।

—:❀:—

# एकोनविंशः परिच्छेदः

प्रससार च एकस्मिन्निशामुखेऽकालवात्येव समुत्तेजयन्ती मागधजन-सामान्यहृदयमादित एव परचक्राशंकातम्यमानमनिर्देश्योद्गमा निगूढ-त्वरितप्रसरा दुर्वार्त्ता यत्—'प्रवर्द्धमानबाह्यान्तररिपुसामर्थ्योद्विग्न-स्याशान्तमनसो मगधसम्राजस्तीक्ष्णानधिक्षेपवादान् अधिकतरं सोढुम-समर्थो भागुरायणः सह कैश्चिदभिन्नहृदयैः प्रमुखतमैः राजपुरुषैः राजधानीतः कृतवेषपरिवर्त्तनदुर्लक्ष्यव्यक्तिः गूढं निर्गत्य, परित्यज्य वंश-परम्परागतां मगधसाम्राज्यनिष्ठामेकपदे एव, मगधरिपोर्मलयकेतोराश्रये गत' इति, यस्याः प्रभावेण भाविसम्भवाऽऽधिदैविकसंकटपरम्परासाक्षा-त्कारसमुद्विग्न इव तन्निरासनव्यग्र इवाऽऽर्यचाणक्यः, विचलितान्तः-करण इव 'आधिदैविकसाहाय्यसम्पदेवात्र एकमात्रमाशास्थानम्' इति मनसि कृत्वा गुरुचरणावधिकाधिकमाराधयन्निव सम्राट् चन्द्रगुप्तः 'किन्तु नन्दवंशरिपूणामेतत् प्रच्छन्नप्रयोजनं कपटमन्यतमम् उत सत्यमेव स्वभावोदग्रो भागुरायणोऽचिराधिगतसाम्राज्यस्याल्पवयसस्तस्य चन्द्रगुप्त-स्याधिक्षेपान् सोढुमसमर्थोऽन्यैः स्वमित्रैः सह इत्थं कृतवान्'—इति विनिश्चेतुमपारयन् राक्षसः, अकल्पितोपनतामेतां सुवार्त्तां विज्ञाय समु-ल्लसितहृदयः हस्तगतमिव मगधसाम्राज्यं कल्पयंश्च मलयकेतुर्बभूव।

भागुरायणस्तु आर्यचाणक्योपदिष्टां सम्राजा च निभृतमनुमोदितां कार्यपद्धतिमनुसरन्नपि वस्तुतः सर्वसमक्षमात्मानं परित्यज्य साम्राज्य-लाभोन्मादर्दुर्विदग्धं दैवोपहतं मगधसम्राजं स्वात्मपरिरक्षणेच्छया विहाय मगधसेवां प्रपलायितमिव प्रदर्शयन्, सहप्रवसद्भिरभिन्नहृदयैरपि मागध-राजपुरुषश्रेष्ठैरज्ञातवास्तविकप्रयोजनः, गृहीतसामान्यवणिग्वेषः, वस्तुतः ज्ञातसर्ववृत्तान्तेन सम्राजाऽनुमोदितप्रवासोऽपि प्रकटतः स्वचातुर्येण परिहरन्तमिव मागधसैनिकसांमुख्यप्रसङ्गान् आत्मानं दर्शयन्, प्रवसन् सततं, प्रापाचिरादेव मागधसाम्राज्यसीमासमीपवर्तिनि गहने वने क्लृप्तं, खड्गभीषणैः महाप्रमाणैः सैनिकैः संरक्ष्यमाणं, संततयुद्धसन्नाहव्याकुलं,

स्कन्धावारं मलयकेतोः। साक्षाच्चकार चादित एव संसूचितस्वागमनं गूढदूतमुखेन, स्कन्धावारैकदेशे विशेषतः संरक्ष्यमाणे स्वागमनं प्रतिपालयन्तं तम्।

मलयकेतुरपि स्वभावत एव शस्त्रसामर्थ्यपूजको मगधसाम्राज्यस्य बलाढ्यतमात् सैनिकबलान्नित्यं खिद्यमानः, स्वप्नेऽप्यप्रत्याशितमेतादृशं मागधसैनिकव्यवस्थाभेदं स्वयमुपस्थितं साक्षात्कृत्य परं हृष्यन्, स्वसमक्षमादरविनम्रमाश्रययाचिनं भूतपूर्वं मागधसेनापतिप्रमुखं वीक्ष्यानतिदोलायितहृदयमिव प्रशान्तमिवात्मानं दर्शयितुं परं प्रयतमानः, 'शरणागतेभ्योऽभयदानमस्माकं वंशपरम्परागतो धर्मः। तत् परित्यज्याणीयसीमपि अपायशङ्कां तस्माद् दुर्विनीतात् चन्द्रगुप्तात् स्वस्थचित्तैः भवद्भिरिह स्थातव्यम्। यथावसरं भवतः पुनः स्वानुरूपे महत्तरे कार्यभारे नियोक्ष्यामः। कर्मठा हि कर्मण्यनुरूपेऽनियुक्ताः निःशब्दं खिद्यन्त' इति स्वैरं स्वैरं गदन् प्रभूतैस्तैस्तैः सम्मानैः सन्तोष्य राक्षसतुल्यवैभववृत्तान्ते पटगृहे विश्रामार्थं विससर्ज।

भागुरायणस्तु एवं प्रविश्य मगधरिपुपक्षस्याभ्यन्तरतमे वर्तुले, प्रारब्धोपजापक्रियः, आदौ तर्कयित्वाऽमात्यस्योद्देश्यप्रणालीं तदनुरूपां कार्यपद्धतिञ्च, सुनिपुणमधीत्य तस्य मलयकेतुविषयकमनादरभावं मलयकेतुमनस्याविश्वासभावनां समुद्भावयन् शनैः शनैः सूक्ष्ममतिमात्रविभाव्यान् तान् तानुपायान् तथा प्रयोक्तुमारभत यथा नातिचिरादेवामात्यराक्षसः तद्विषये आदित एवाश्रद्दधानः तं स्वभावत एव क्षुद्रस्वार्थसेवामात्रपरायणं मन्यमानो, 'दिवङ्गतस्य परमसरलस्वभावस्य सम्राजो धननन्दस्य तथा विनिपातनेनाप्यकृतकृत्योऽयं भागुरायणोऽधुना मागधानां सहजशत्रवे मलयकेतवेऽस्थिरमतये समस्तं तेषां साम्राज्यमुपायनीकर्तुं प्रयतते—इत्यहो स्वार्थान्धताऽस्य' इति अधिकतरमेवोद्विग्नः, प्रत्यहं निवर्तमानेभ्यः 'नगाधिराजोपत्यकावर्तिषु तेषु तेष्वाश्रमेषु सुनिपुणमन्विष्टा अपि श्रीसर्वार्थसिद्धिचरणाः नास्माभिरक्षिलक्ष्यीकृता' इत्येवोदन्तं विज्ञाय दूतेभ्योऽधिकतरमेव खिन्नतां भजन्, 'अनधिगत्य तस्य कुशलवार्त्तां न खलु प्रोत्साहनीयोऽयं मलयकेतुर्मगधसाम्राज्याक्रमणविषये' इति कृतदृढनिश्चयः, तेषु तेष्ववसरेषु सुगूढानां नाम मागधसेनाव्यवस्थारहस्यानामतिनिभृतमुद्घाटनमिव कुर्वन्तमात्मानं प्रदर्शयता, प्रतिदिनमात्मानं मलयकेतुसेनायन्त्रस्य समर्थतरीकरणे व्यापृततरमिव प्रकटयता,

प्रत्यहं समापतद्भिः विविधवयोवेषवृत्तान्तैः स्वामिभक्तैः स्वचरैः कथ्यमानैः कृतकैर्मागधजनाशान्तिवृत्तान्तैः संततप्रवर्धमानकार्योत्साहशक्तिमिवात्मानं दर्शयता भागुरायणेन बलावलेपस्य परां कोटिं लम्भितस्य, स्वीयैः गूढैः पुरुषैः रिपुपक्षस्य वास्तविकस्थितेः निरीक्षणेऽपि संक्षीयमाणवृत्तेः, निखिलमपि मगधसाम्राज्यं हस्तगतकल्पं मन्यमानस्य समस्तभारतवर्षविजयाशाकदर्थ्यमानमानसस्य दुर्दैवविमोहितस्य पर्वतराजपुत्रस्यात्यधिकावधीरणविषयीबभूव ।

अतिथिबभूव च नातिचिरादेवैकस्मिन् निशामुखे लोहकवचावृतमहाकायैः सुतीक्ष्णभल्लोदग्रहस्तैः सैनिकैः सर्वतः प्रतिषिद्धप्रसरस्य मलयकेतुस्कन्धावारैकदेशक्लृप्तस्य कारागारस्य⋯⋯तस्मिन्नेव दिने हिमराजोपत्यकाया अतिदुर्गमप्रदेशेऽवस्थितादाश्रमपदादेकान्नातिप्रसिद्धात् प्रत्यागतात् परमविश्वसनीयात् दूताद्विज्ञाय सर्वार्थसिद्धेः स्वर्गारोहणसमाचारं छिन्नाशातन्तुः, किङ्कर्तव्य-विमूढः, विजिगीषायाः परां काष्ठामधिरूढेन पितृवैरनिर्यातनार्थं सन्नद्धसमस्तसामर्थ्यमात्मानमुत्प्रेक्षमाणेनाधीरमनसा मलयकेतुना सादरमिव स्वपटावास आहूतः, सविनयमिव समुपावेशितः, सगौरवमिव निवेदितः, 'अयमेव वैरनिर्यातनस्यानुकूलतमोऽवसर' इति व्यञ्जयन्तीनां तासां तासां बाह्यानामाभ्यन्तराणाञ्च परिस्थितीनां विषये, सबहुमानमिव पृष्टस्तत्सम्मतिविषये, अश्रद्दधानमेव मागधसाम्राज्याशान्तिवृत्तान्तात् आत्मानं प्रकटयन्, अनुपस्थितमेवाऽऽक्रमणयोग्यमवसरं संसूचयन्, अपर्याप्तमेवाद्यापि पर्वतराजसैन्यबलं तादृक्कार्यभारे निर्धारयन्, समीपोपविष्टेन स्मेरमुखेन भागुरायणेन 'कियता नाम कालातिक्रमेण समुपस्थास्यति वैरनिर्यातनकालः स्वामिनः श्रीमतां मतेन ? कथञ्च नाम दुर्धर्षणीयतां लम्भनीयं स्वामिनः सेनाबलम् ? उपदिशन्तु नाम महाभागाः' इति सोपालम्भं प्रार्थितः, असमर्थः सोढुं तस्य साकूतं वचः, आदित एवाशान्तस्वान्तः, सहसा परित्यज्य देशकालस्थितिव्यक्तिविचारं विधूय चावश्यम्भाविपरिणामविवेकं निरतिशयतिरस्कारकटु व्यञ्जनापटु प्रतिब्रुवन्, स्वाभिन्नहृदयसुहृदः एतादृशमधिक्षेपं सोढुमसमर्थेन क्रोधारक्तलोचनेन वेपमानगात्रेण भागुरायणस्य शमवचांसि अवधीरयताऽधिक्षेपवचांसि वमता राज्ञा मलयकेतुना सहसा स्वीयैरङ्गरक्षकैः खड्गभीषणहस्तैरवनीतलसमवतीर्णैरिव कृतान्तदूतैः सैनिकैः शृङ्खलाभूषणं लम्भितः ।

मलयकेतुस्तु प्रतिदिनं समानीयमानेषु मागधजनाभ्यन्तरिकविद्रोह-वृत्तान्तेषु कपटमात्रमवलोकयतः, प्रत्यहं समुचितावसरप्रतीक्षामात्रोप-देशिनोऽविश्वासमूर्तेः राक्षसस्य प्रभावात् मुक्तमत्यधिकप्रवृद्धोत्साह-सम्पदमिवाऽऽत्मानं विभावयन्, गूढैर्दूतैः प्रतिदिनं मागधरिपुपक्षस्याभ्यन्त-रिकसत्यवृत्तान्तान् मगधसम्राजः सेवायां संप्रेषयता, निगूढं प्रत्यानीतैस्त-दनुमोदनपरैः मौखिकसन्देशैश्च प्रवर्द्धितोत्साहेन, संततप्रज्वलन्मागध-साम्राज्यसेवाभावेनापि प्रकटतस्तद्विनाशमेकमात्रं ध्येयमभिलक्ष्याहर्निशं प्रयतमानमिवात्मानं दर्शयता भागुरायणेनोत्साहस्य परां काष्ठां लम्भितः, 'समये समये सेनापतिवरेण्यादुपलब्धैः प्रतिदिवसमागच्छद्भ्यो विविध-वयोवेषवृत्तान्तेभ्यो गूढचरेभ्यश्चोपलभ्यमानैः मागधसेनायन्त्रभेदैः विदित-दौर्बल्यस्थलमेव मम मागधशासनयन्त्रम्। तन्मन्ये यदि नामाहमकुर्वन् विशालमेनासन्नाहं मागधदेशमात्रोपरोधञ्च, परिहरन् अपरिमितजनधन-हानिं मागधजनसामान्योद्वेगञ्च, 'शठं प्रति शाठ्यम्' इति न्यायमनुसरन्, कपटमूर्तेस्तस्य चन्द्रगुप्तस्य समूलं विनिपातार्थं परम्परागतवैरनिर्यात-नार्थञ्च कपटनीतिमेवोररीकुर्यां तर्हि विनैव शक्तिसंक्षयं मेऽभीष्टार्थसिद्धिः निःसंशयं भूयात्'—इति मनसि भावयन्, रहसि सबहुमानं पृष्टेन स्व-नूतनस्वामिनस्तादृशं राजनीतिनैपुण्यं कपटप्रयोगपाटवञ्च साक्षात्कृत्या-त्यधिकप्रभावितमिवात्मानं प्रदर्शयता चतुरेण भागुरायणेन सोत्साहमनु-मोदितः, 'कपटप्रयोगेणाधिगतसाम्राज्यश्चन्द्रगुप्तोऽविश्वसन् मागधेषु प्रमुखराजपुरुषेषु, अश्रद्दधानः दूतानीतेषु सामान्यप्रजाजनवृत्तान्तेषु, भवन्तं सन्ततप्रवर्द्धमानबलसम्पदं श्रुत्वाऽधिकतरसमुपजाताऽऽशङ्कः, समये समये वेषपरिवर्तनं कृत्वा द्वित्रैः परमविश्वासपात्रैः सुगोपिता-कृतिभिः सेवकैः परिवृतः कदाचिद् राजधान्यां कदाचित्तस्याः समीप-वर्तिषु प्रदेशेषु, कदाचित् साम्राज्यस्य दूरवर्तिषु भागेषु वास्तविकपरि-स्थित्यवलोकनेच्छया निभृतं परिभ्रमति कैश्चिदपि अज्ञायमानसत्य-स्वरूपः। तद्यदि नाम स्वामिनोऽभिप्रेतं तर्हि स कपटमतिः एतेषां गूढ-भ्रमणानामन्यतमस्यावसरेऽस्माभिरपि सुतीक्ष्णशस्त्रैः संख्ययाधिकैरक-स्मात् तन्मार्गपतितैः प्रयुज्य शस्त्रबलं हठात् बन्दीकर्तुं, अदत्त्वैव जन-सामान्यस्याऽऽशङ्कायै अवसरं मागधप्रदेशादपहर्तुञ्च शक्यः। परतस्तु न्याय्येन प्राणदण्डेन दण्डयितुञ्च। दण्डितेऽपि हि तस्मिन् आदित एव तस्मिन् अननुरक्ता, नात्युद्विग्ना कपटप्रहारमेतादृशमाकस्मिकं कर्णोप-कर्णिकया श्रुत्वाऽपि, अराजकतां परिहरन्ती मागधप्रजा स्वामिनमेव

निखिलेऽपि उत्तरभारतवर्षेऽप्रतिद्वन्द्विसामर्थ्यं प्रशासनकुशलं स्वपालकत्वेन वरिष्यति—इति दृढो मम विश्वासः। कथं तर्हि स्वामी मन्यते ?' इति योजनोपन्यासेन प्रोत्साहितश्च, दैवोपहतमतिः, विस्मरन् स्वपितुः कपटप्रयोगस्य तादृशं पर्यवसानं, कलयन् स्वशंसितं फलमवश्यम्भावि, अगणयन् सम्भाव्यमाना आपदः, अवधीरयन् गजनिमीलिकया संकटानि, 'बाढम् !' इति सहसा तां योजनामङ्गीचकार।

दधाव च दिनत्रयानन्तरमेव भागुरायणस्य गूढपुरुषेणाऽऽनीतां 'चन्द्रगुप्तोऽद्यतन्यामेव निशीथिन्यां सीमासन्नवर्तिनि प्रदेशे गूढमागमिष्यति' इति वार्त्तामनुकूलनियतिसम्प्रेषितामिव मन्यमानः, औत्सुक्यत्वरमाणमानसः, अकृत्वैव स्वस्कन्धावारस्य दृढतरं संरक्षणोपायं, कतिपयैरेव लोहकवचावृतशरीरैर्महाप्रमाणाश्वारोहिभिः कुन्तधारिभिः, प्रकटतः स्वामिभक्तमात्मानं प्रकाशयद्भिरपि निभृतं सेनापतिभागुरायणस्यैवैकमात्रस्य वश्यैः सैनिकैः परिवृतः, मूर्तिमता दुर्भाग्येनेव भागुरायणेन स्वयमुपदिश्यमानमार्गः, वंशपरम्परागतैः स्वामिभक्तैः स्वसेवकैरपि अपरिज्ञातगूढसङ्कल्पः, निर्गत्य स्कन्धावारात् अस्तङ्गते तद्भाग्य इव दिनमणौ, दश दिश आक्रामति तन्मतिमोहे इव नैशेऽन्धकारे, चन्द्रगुप्तस्य कपटघाते प्रवृत्तस्य तस्य मूर्खस्याऽऽत्मघातं साक्षात्कर्तुं चन्द्रेण स्वयं प्रेषिताभिः दूतीभिरिव तारकाभिरसङ्ख्याभिर्व्याकुलाकुले गगनाङ्गणे, मागधसाम्राज्यसीमान्तर्वर्तिनं गूढपुरुषनिवेदितं ग्रामटिकाविशेषमभिलक्ष्य।

सम्प्राप्य च तत्सीमासमीपवर्तिनीं गहनवृक्षराजिदुर्लक्ष्यविशेषां, पातालान्निर्गत्य धरणीतलमम्बरतलञ्च प्रसह्याऽऽक्रामतो घोरस्य तमसो मूलां वसतिमिव सूचिभेद्यतिमिरां, आक्रन्दन्नैशवनेचरशब्दनिनादितां, निवातस्तब्धवृक्षलतासन्तानां, समीपाघाताशङ्कयाऽवसन्नगात्रीमिव अरण्यानीं, तन्मध्यगामिनो मागधराजधानीमार्गस्य शून्यशून्यस्यासन्नतमवर्तिनोऽतिदूरप्रसृताभिः शाखोपशाखाभिरालिङ्गित इव सनक्षत्रं नभो वटवृक्षस्य कस्यचिदधः समयं प्रतिपालयन् तस्थौ।

सुपरिलक्ष्य च नातिचिरादेव प्रज्वालितदीपिकाऽऽलक्षितप्रवासं तुरगयायिनमेकं पथिकदलं तेनैव मार्गेण तमेव ग्रामटिकाविशेषमभिलक्ष्यागच्छत्, सहसासमुत्तेजितेनात्युन्नतशाखाधिरूढेन सैनिकेन कृतसंकेतः, प्रयुज्य सर्वं बलं तस्य पथिकवृन्दस्याक्रमणे प्रवृत्त एव लक्षयाञ्चकारात्मानं पातालादिव बहिरागतैः, अन्धकारपटलैरिव चलायमानैः निबिड-

वृक्षततिभ्य इव प्रकटीभूतैः, घनान्धकारव्यापृताद्गगनाङ्गणादिवावतीर्णैः सवेगं निःशब्दञ्च समीपमुपसर्पद्भिः खड्गहस्तैः पदातिभिः कवचाऽऽवृतशरीरतया दुर्लक्ष्यस्वपरस्वभावैः सैनिकैरसंख्यैः सर्वतः निरुद्धप्रसरम् ।

स्वप्नेऽप्यनुत्प्रेक्षितामकल्पितोपनतां परिस्थितिं तां साक्षात्कृत्य किङ्कर्तव्य-विमूढः कथमप्यात्मानं पर्यवस्थापयितुं प्रयतमानः, 'कथं नाम रिपुभिः प्रागेव परिज्ञायास्मत्कपटप्रयोगं कुटिलतरप्रयोगेण प्रत्युत्तरितम् ?' इति विस्मयाकुलमानसः, प्रसह्य भित्वा प्रतिक्षणं समीपतरमुपसर्पत् प्रतिपक्षिजालमितः प्रपलायनमेव श्रेयस्करम्' इति विनिश्चित्य स्वसुहृन्नियन्त्रितान् सैनिकान् तदर्थमादेष्टुं प्रवृत्तः तानेव तमभितः बद्धनिविडवर्तुलान् स्थिरदृष्ट्या तच्चेष्टाविशेषानवलोकयतः विकोशखड्गोदग्रहस्तान्, तमेव खण्डशः कृत्वा चर्वयितुं प्रवृत्तस्य निःशब्दं प्रकाशितसुतीक्ष्णदन्तञ्च हसतोऽन्धकारदानवस्यासंख्यानां अवताराणां शोभां विडम्बयतोऽवलोक्य हठाद्विदितयाथार्थ्यः, सर्वथा वञ्चितं मुषितञ्चात्मानं विभावयन् परिलुप्तधैर्यविशेषः, गलितखड्गः समीपमुपस्थितेन छद्महासकुटिलमुखेन कृत्रिमविनयप्रह्वमूर्तिना कपटमूर्तिना भागुरायणेन सादरमिव सबहुमानमिव, 'राजराजेश्वर ! भवद्दुर्धर्षप्रतापाऽऽतङ्कितेन भवच्छत्रच्छायायामाश्रयमभिकांक्षता मगधसम्राजा चन्द्रकेतुना सादरं सम्प्रेषितं भवत्सेवायामुपायनं तुच्छमेकं, तत्स्वीकरोतु उदारहृदयः स्वामी' इत्युक्त्वोपस्थापितेन लोहनिगडेन शृङ्खलितहस्तः पराभवम्लानमुखः अचिरादेव समीपमानीतेनाऽन्येनाश्वारोहिणा सैनिकेन नियम्यमानमश्वमारुह्य, रिपुसैनिकैः सर्वतः उपरुद्धप्रसरः शनैः शनैः मगधराजधानीं ययौ विमनस्कः उद्भ्रान्तचित्तोऽपारयन् कलयितुं नियतेर्दुर्विलासान् ।

अमात्यराक्षसस्तु स्वाभिमानैकधनोऽननुभूतसदृशं तादृशमधिक्षेपं पर्वतराजपुत्रसदृशात् क्षुद्रान्नृपात् लब्ध्वा नितरां क्षुभितः, सङ्कल्पितस्य स्वकार्यस्यास्याऽऽधारभूतं स्वामिवंश्यैकमात्रमवशिष्टं तन्तुं कालविच्छिन्नं परिज्ञाय नितान्तं विलक्षः, 'अकल्पितपरिणतायां परिस्थितावस्यां किन्नु ममोभयलोकाविरुद्धं कर्तव्यं स्यात्' इति विनिश्चेतुमपारयन् क्षुभितस्वान्ततया, स्कन्धावारैकदेशक्लृप्ते कारागारे चिन्ताजडान् परिभवम्लानान् विषादगलितान् क्षणान् कथमप्यतिवाहयन्, 'अविवेकिनोऽदूरदर्शिनः क्षुद्राशयस्यास्य मलयकेतोर्मागधसाम्राज्यलिप्सयाऽहर्निशं ज्वलतोऽपि

कार्यसिद्धिरसम्भाव्यैव। तन्मन्ये—वैफल्यमेवास्य श्रेयस्करं मत्स्वामिनः साम्राज्यस्य कृते प्रयतमानस्य तत् प्रयततां नामायं दुराशाकदर्थ्यमानहृदयः' इति शनैः शनैः ताटस्थ्यमेवोररीकुर्वन् मलयकेतोर्व्यापाराणां विषये, अवधीरयन् तस्य सङ्कल्पितगूढाक्रमणसन्नाहं, अजानन्नेव तस्य मागधसाम्राज्यान्तर्वर्तिनं ग्रामटिकाविशेषमभिलक्ष्य स्कन्धावारात् निगूढं निष्क्रमणं, किञ्चित्परिणते तस्मिन्निशामुखे स्वामिनं स्वल्पबलसहितं भागुरायणप्रदर्श्यमानमार्गनिष्क्रान्तं कर्णोपकर्णिकया श्रुत्वा परित्यज्य कारागाररक्षाकर्तव्यं स्वमित्रैः साकं मधुपानमहोत्सवार्थं गतेषु रक्षकसैनिकेषु, सहसाऽवलोकयाञ्चकार मन्दप्रकाशया प्रदीपिकया किञ्चित्प्रकाश्यमानाभ्यन्तरे स्वपटकारागारे निभृतं प्रविशन्तं कृष्णवस्त्राऽवगुण्ठितकायं खड्गहस्तं सतडिल्लतं कृष्णमेघं विडम्बयन्तं व्यक्तिविशेषम्।

कौतूहलाक्रान्तश्च, तमुपसर्पन्तमवलोक्य 'क्षुद्राशयेन मलयकेतुना प्रेषितोऽयं भवेत् निभृतं मत्प्राणहरणार्थम्? उत नन्दवंशानुरागिष्वेकमात्रमवशिष्टं मां गूढं यमसदनाऽतिथिं विधातुं चन्द्रगुप्तेन जनसामान्यक्षोभं परिहरता प्रहितो भवेत्?' इत्येवमादि किमपि किमपि तर्कयन्, शृङ्खलानिगडिततया किञ्चिदपि प्रतिकर्तुमक्षमः, परं विस्मयमाससाद तं प्रणतिपुरःसरं निःशब्दं शृङ्खलाबन्धनविमोचने प्रवृत्तमवलोक्य।

विस्मयपरवश एव बन्धनान्मुक्तस्तेन गूढपुरुषेण स्वानुसरणार्थं निःशब्दमभ्यर्थितः तमनुसरन् कारागृहान्निर्गतः रक्षितपूर्वे स्कन्धावारे सैनिकानविभाव्य परं विस्मितः, 'किन्नु खलु समापतितं स्यात्?' इति चिन्तयन्, तं विमोचकपुरुषमनुगच्छन् ततो निर्जगाम, प्राप च तेनैव गूढपुरुषेणोपदिश्यमानमार्गस्त्वरितगतिः नातिदूरवर्तिनो गुल्मस्य कस्यचित् अधिपतेरिव महाप्रमाणस्याभ्रंकषशाखावितानस्याश्वत्थस्य मूले आदित एव सन्निधापितमतिदूरप्रवासार्थं सन्नद्धं तुरगद्वयम्। एतावत्या कालकलया सुविज्ञातस्वमोचकपुरुषाभिप्रायः तमभिवन्दयितुं प्रवृत्तश्च सहसाऽपनीतकृष्णवस्त्रावगुण्ठनं पादयोः प्रणतं तं समुत्थाप्य, सुचिरं विभाव्य, तं स्वप्रियसेवकं सिद्धार्थकं प्रत्यभिज्ञाय परं विस्मितः 'तेनाधमेन तथाऽधिक्षिप्य कारागारे निक्षिप्तं स्वामिनं बन्धनान्मोचयितुमेतावत् विलम्बितं मया क्षुद्रेण सेवकेनानुकूलं समयं प्रतिपालयता निःसहायेन। तत् क्षन्तव्योऽयं दास' इति विज्ञापयन्तं तं बहु प्रशंसन् 'वर्तमानस्थितौ इतः क्वापि दूरं गत्वाऽऽत्मैव तावत् परिरक्षणीयः प्रथमत' इति सम्प्रधारयन् स्वसेवकेना-

नुमोदितः प्रजविनमश्वमेकतरमारुह्य निभृतं तस्मात् स्थानान्निश्चक्राम सिद्धार्थकेनानुयातः ।

प्रवसंश्च स्वैरमिव स्वल्पयैव कालकलयाऽतिक्रम्य मलयकेतुराज्य-सीमां, प्रविश्य मागधं चिरपरिचितं प्रदेशं, कृतवेषपरिवर्तनदुर्विभाव्य-व्यक्तिः, निरुद्वेगमिव मार्गमाक्रमन्, तेषु तेषु ग्रामेषु नगरेषु च मार्गपति-तेषु क्लृप्तवासः, तेन तेनापदेशेन वणिग्वर्गेषु च तेन तेन प्रयोजनेनैकत्री-भूतेषु विचरन्, सुनिपुणमवलोकयंश्च वास्तविकीं मगधराज्यस्थितिं मल-यकेतोः स्कन्धावारे तैस्तैः गूढपुरुषैः समये समये श्राविताया: सर्वथा विपरीतामश्रुतपूर्वसदृशं राजपरिवर्तनमनुभूयाऽपि किञ्चिदप्यनु-द्विग्नां सुखप्रसन्नां सुप्रशासनसन्तुष्टां मागधजनदैनन्दिनचर्यां, मागध-साम्राज्यपरिरक्षणेऽधिकतरमेव दक्षचित्तानामचिराधिगतसाम्राज्यमपि विख्यातशौर्यप्रकर्षं चन्द्रगुप्तं दैवतमिवानन्यपरायणतया सम्पूजयतां सैनि-कानां रणचर्यां, निर्बाधं निरातङ्कञ्च मगधसाम्राज्ये सर्वत्र सञ्चरतां विधूय परचक्रोद्वेगं स्ववाणिज्यव्यापारविस्तारार्थमहर्निशं प्रयतमानानां वणि-जाञ्च वाणिज्यवृत्तिं साक्षात्कुर्वन्, 'नूनं स्वरिपुपक्षस्य समूलनाशार्थं तान् तान् राजनीतिव्यापारान् प्रयुञ्जता चन्द्रगुप्तेन द्रव्यक्रीतानां गूढचराणां माध्यमेन प्रापितैरसत्यैरराजकतावृत्तान्तैः प्रवञ्च्यते स मूर्खो मलयकेतुः। मन्ये कृतकसेवकेन तेन भागुरायणेन वारं वारं समुत्तेजितः, अकृत्वैव पर्याप्तसाधनसन्नाहं, मगधसाम्राज्यमेतदाक्रमितुं प्रवृत्तोऽचिरादेव दुर्गतिं प्राप्स्यति' इत्यात्मनैव सम्प्रधारयन्, प्रवसंश्च यथापूर्वं, नातिचिरादेव क्षुद्रग्रामटिकासु ग्रामेषु नगरेषु च राजकीयैरुद्घोषकैः सडिण्डिमनिनादं समुद्घुष्यमाणां विरम्य स्व-स्वव्यापारेभ्यः सकौतूहलं मागधैः श्रूयमाणां 'मगधसम्राजं प्रजाजनहितैषिणं कपटजाले बन्दीकर्तुं प्रवृत्तो मागधरिपु-र्मलयकेतुः स्वयमेव सम्राजा बन्दीकृतो महता चातुर्येण स्वापराधसमु-चितदण्डभाग् भविष्यति राजधान्यामचिरादेव'---इति प्रकाशयन्तीं वार्ता-मश्रृणोत् ।

नातिविस्मितश्च समुत्प्रेक्षितकल्पमुदन्तं तमाकर्ण्य संप्रधार्य स्वात्म-नैव साकं गृहीतोत्तरदिक् शनैः शनैः प्रवसन् मनस्यकरोत्---'नूनमेवमेवा-भीष्टं नियतेः । मया खलु तेन विलक्षणेन कपटजालेन विमोहितमतिना, स्वामिवंशघातानन्तरं प्रबुद्धेन, स्वामिवंशं पुनरपि प्रस्थाप्य मागधसाम्रा-ज्याधीश्वरपदे प्रायश्चित्तं स्वकर्तव्यच्युतेरनुष्ठातुं प्रवृत्तेन, गूढं स्वदेशात् प्रपलायितेन, मागधसाम्राज्यस्य वंशपरम्परागतः शत्रुः शरणीकृतः ।'

'परित्यज्य सांसारिकमोहपाशान् हिमाचलोपत्यकावर्तिनि आश्रमपदे कस्मिंश्चित् योगमभ्यस्यतः सुगृहीतनामधेयस्य सर्वार्थसिद्धेः नन्दवंशावशेषस्यैकमात्रस्यान्वेषणार्थं परमविश्वासपात्रीभूतान् दूतान् प्रयुञ्जता, विलक्षणराजपरिवर्तनचकितान् नन्दवंशभक्तान् अनेतृकान् उच्चावचपदाधिरूढान् मागधराजपुरुषान् गूढदूतमाध्यमेन प्रबोधयता स्वकर्तव्यविषये, क्षुद्राशयतया प्रतिपदमवमानयन्नपि कार्यगौरवं मनसि कुर्वता सधैर्यं सोढश्च ।'

'नियत्या तु आदित एव प्रतिकूलया महाराजं मम वैरनिर्यातनप्रयासस्यैकमात्रमाधारं, परलोकं प्रापयन्त्या हठाद् वैफल्यमेतेषामुपायानां प्रापितः ।'

'विना हि नन्दवंशावशेषं कमिव पुनर्मागधसाम्राज्याऽधीश्वरपदे पुनरप्यभिषेक्तुं तैस्तैः कूटोपायैः प्रयतेय ? न खलु दुर्विनीतं पर्वतराजपुत्रम् । मया हि सः पुनरपि महाराजं साम्राज्याधीश्वरपदेऽभिषेक्तुं बद्धपरिकरेण स्वकार्यसिद्धेरन्यतमोपायत्वेनाऽऽश्रित आसीत् । न हि मम हृदयं मागधसाम्राज्यस्य वंशपरम्परागतस्यामित्रस्य तस्याधीनां मागधसाम्राज्यश्रियं कुर्तुमुत्सहते । तन्निकट एतावत्कालपर्यन्तं निवसता मया तस्य यच्चारित्र्यं शीलं गाम्भीर्यञ्चावलोकितं तेन बलवत्तरीभूता नूनं ममेयमनिच्छा । चन्द्रगुप्तबन्धनान्मोचितोऽपि, मागधसाम्राज्यञ्च लम्भितोऽपि स नूनमचिरादेव तत् स्वगुणैर्विलयं नेष्यति ।'

'नास्ति चान्यः कोऽपि योग्यः नृपतिः निखिलेऽपि भारतवर्षेऽद्यतने यं मागधसाम्राज्याधीश्वरपदे स्थापयितुमुत्सहेत मम मानसम् ।'

'तद्यथा नाम नियतेरभीष्टं तत्तथैवास्तु । अलङ्करोतु नाम कपटचतुरेण तेन विप्रेण नन्दवंश्यत्वेन मागधनियतिप्रदत्तत्वेन च प्रख्यापितः सर्वैः मागधैश्च स्वीकृतश्चन्द्रगुप्त एव मागधसाम्राज्याधीश्वरपदम् । योग्यतर एव सः अज्ञातवंशोद्भवोऽपि महत्तमस्यास्य भारस्य वहनार्थम् । प्रद्युम्नदेवपुत्रमिषेण सम्राजः सन्निधौ निवसतस्तस्य मया पूर्वमपि निरीक्षितमेव संयमशीलत्वं महाशयत्वं गुणग्राहकत्वञ्च । वेषपरिवर्तनं विधाय मागधे प्रदेशे स्वच्छन्दमेतान्यतीतानि दिनानि पर्यटता मागधजनसमुदायेषूच्चावचेषु तेन तेन मिषेण सञ्चरमाणेन मयाऽवलोकिता निरुद्विग्ना सुखतृप्ता निरावाधा मागधप्रजावृत्तिः निःशब्दं कथयत्येव तस्य प्रजाजनानुरञ्जनवृत्ति प्रशासनचातुर्यञ्च । विनाशमात्यन्तिकं प्राप्ते दैववशात् स्वामिवंशे,

विनैव तद्वंश्यस्य कस्यचित् साम्राज्याधीश्वरपदे पुनः प्रतिष्ठापनस्याऽऽशां, कपटप्रयोगाधिगतसाम्राज्यस्यापि कुशलप्रशासकतयाऽप्रत्याख्येयस्य तस्य विनिपातने प्रवृत्तोऽहं समुपलब्धे साफल्ये कृतवैरनिर्यातनोऽपि-, वंशपरम्परया सेविते प्राणेभ्योऽपि प्रियतरेऽस्मिन् साम्राज्येऽराजकतामुत्पादयन्, एतादृशावसरावलोकनैकचित्तेभ्यः सासूयेभ्यः परकीयेभ्यो यवनेभ्यश्च तदुपायनीकुर्वन्, न केवलस्य स्वामिवंशस्य न केवलस्य मागधसाम्राज्यस्यापि तु समस्तस्य भारतवर्षस्यापकारी स्याम् !'

'अद्यतने हि भारतवर्षे यदि नाम कापि आर्यशक्तिः कष्टचिकित्स्यं रोगमिव शनैः शनैः समस्ते राष्ट्रे प्रसरन्तं यावनं प्रभावं रोद्धुं क्षमा तर्हि सा मागधशक्तिरेव। तस्यान्तु प्रविलीनायामप्रतिबन्धा यावनी शक्तिः, सर्गान्तवीचिरिव क्षुभितस्य महासागरस्य सम्पूर्णमेव भारतवर्षं व्याप्नुयात्। तन्मन्ये शिरसि कृत्वा नियतेरिच्छामस्माद्दुरुदर्कात् वैरप्रतिशोधनप्रयासान्निवर्तनमेव मम श्रेयस्करम्। प्राप्तासु परिस्थितिषु ममेदमाचरणं समुचितमेव मंस्यन्ते विवेकिनो भाविन इतिहासकाराः।'

'अस्मात् प्रयत्नात् विरतस्य तु मम नास्तीच्छाऽन्यं कमपि नृपं सेवितुम्। वंशपरम्परया सेवितं नन्दवंशं विहायान्यं महत्तरमपि राजन्यवंशं सेवितुमनुत्सुकमेव मम मानसम्। कुतश्च नन्दवंशान्महत्तरस्य राजन्यवंशस्य सम्भवः? तन्मन्ये—गृहीत्वा राजकारणसंन्यासमुर्वरितमायुः प्रशान्तमनसा परलोकं साधयता यापनीयम्।'

विनिश्चित्य चैवं प्रवसन् उत्तरस्यामेव दिशि अतिक्रान्तमागधसाम्राज्यसीमारेखः प्राप कतिपयैरेव दिवसैः हिमाच्छादितस्य, तपश्चरणप्रवृत्तस्य परिगृहीतधौतधवलवस्त्रस्येव, नगाधिराजस्य हिमालयस्योपत्यकावर्ति, सन्ततप्रवहन्निर्झरवेष्टितप्रान्तं योगाभ्यासार्थम् आगृहीतयोगपट्टिकमिव भासमानं प्रशान्तवृक्षं मन्दसमीरणचलन्मञ्जुललतापल्लवं गूढमन्त्रजपस्फुरदधरोष्ठमिव शोभमानं योगाभ्यासनिरतसंसारविरततपस्विजनभासुरमाश्रमपदम्, जीवनस्य पूर्वस्मिन्नाश्रमे मागधराजपुरुषेषु महत्तरपदवीमलंकृतवतः, विरज्य तु सहसापरित्यज्य च सांसारिकबन्धनानि अकस्मात् वानप्रस्थाश्रममङ्गीकृतवतः स्वसुहृत्तमेष्वन्यतमस्य, सिद्धार्थकेनानुसृतः।

तेन सबहुमानं सत्कृतः, विदितसर्ववृत्तान्तेन सानुकम्पेन कुटीरश्चोचितं ग्राहितः, प्रशमयन् स्वान्तं दिवसानतिवाहयितुमारभत ॥

—:※:—

## विंशः परिच्छेदः

स्वामिसेवाव्याजेनाहर्निशममात्यवरेण्यं छायावत् अनुसरतः सिद्धार्थकात् प्रत्यहं तदुदन्तमधिगच्छन् आर्यश्चाणक्यस्तु राक्षसस्यैतादृशीं निर्वेदमयीं मनोऽवस्थां सर्वथाऽनुत्प्रेक्षितां तत्प्रेरिताञ्च तपोवनावस्थितिं परिज्ञाय नातिमुदितः, आशीर्वचनयाचनाव्याजेन सेवायां समुपस्थितेन विनयावनतेन सम्राजा सह गूढं मन्त्रयित्वा 'सम्प्राप्तायां परिस्थितौ सुस्पष्टीकृत्य सर्वमपि राजनैतिकं व्यूहं, सुविविच्य तदाधारभूतं तर्कजालं, सुव्याख्याय वर्तमानपरिस्थितौ भारतीयमात्रस्य कर्तव्यभारम् अमात्यवरेण्यस्य राष्ट्रभक्तिभावनाया आवाहनमेवैकमात्रमुपायत्वेनावशिष्यत' इति निर्धारयामास ।

प्रचचाल चाचिरादेव मगधराजधान्या आश्रमपदं तदेव हिमालयोपत्यकावर्ति अभिलक्ष्य कृतवेषपरिवर्तः गृहीतमागधक्षत्रिययुवकवेषेण सुहृद्व्यपदेशेन सहप्रवसद्भिः कतिपयैः स्वामिभक्तैरङ्गरक्षकैः सुरक्ष्यमाणेन बन्दीकृतं मागधसाम्राज्यरिपुं मलयकेतुं समर्प्य स्वसम्राजे तेन राजसभायां सविशेषमभिनन्दिते चतुरङ्गबलाधिपपदे स्थापिते च भागुरायणे निधाय निखिलसाम्राज्यभारं निराकुलेन चन्द्रगुप्तेन सह ।

प्रवसंश्च स्वैरमिव, अवलोकयन् मागधजनसाधारणस्थितिं, प्रहृष्यन् साक्षात्कृत्य तां गुप्तचरनिवेदनानुसारमेव नितान्तमनुद्विग्नां, प्रबोधयंश्च दक्षचित्तं सम्राजं निरीक्षणपथेऽवतरितानां प्रशासनिकदौर्बल्यस्थलानां विषये जनान्तिकं सम्प्राप नातिचिरादेवामात्यवरेण्येन निर्विण्णेन शरणीकृतमाश्रमपदम् । अवलोक्य च तदस्ताचलचुम्बिदिनकरकरपरामृश्यमाननिष्कम्पतरुशिखरं प्रतिनिवर्तमानहोमधेनुधूलिधूसरितप्रान्तभागं प्रज्वाल्यमानहोमाग्निनिःसरद्धूमरेखापरामृश्यमानगगनाङ्गणं प्रशान्तं तपोवनं हठात् स्मारितः परमद्र्पभिरार्यसंस्कृतेः यवनैस्तथा विनाशितस्य पञ्चनदीयस्य स्वस्याश्रमपदस्य, रणरणकखिद्यमानमानसः, विनयनम्रेण चन्द्रगुप्तेन तदनुयायिभिश्च सहकृतप्रवेशः, अतिथिसत्काराय सादरमुप-

स्थितेभ्य आश्रमवासिभ्यः स्वीकृत्याघ्यं तत्प्रदर्शितेऽतिथिकुटीरे क्लृप्त-निवासोऽपनयन् प्रवासपरिश्रमं, समयमनुकूलं प्रतिपालयंश्च तस्थौ।

शनैः शनैः परिणतायाञ्च रजन्यां, सायंस्तोत्रपाठविरतशिष्यगणं तपःस्वाध्यायनिवृत्ततपस्विजनं स्वीकृताहुतिभिः प्रकटय्य तेजोभासुरं स्वरूपं पुनरपि मन्दज्वालैः तपोधनार्चनामभिनन्द्य पुनरप्यात्मचिन्तन-संलग्नैराश्रमपदसंरक्षकैर्मूर्तैस्तपस्तेजोराशिभिरिव होमाग्निभिः संरक्ष्य-माणं स्वस्वनीडप्रविष्टं सुखनिद्रितं द्विजगणं मन्दशीतलवायुलहरीप्रकम्प्य-मानपल्लवहस्तकैः सस्नेहं वीजयद्भिरिव पादपैः शोभितं निद्रायमाण-गोकुलहुंकारमुखरितगोशालं तदाश्रमपदं सस्नेहं सकौतुकं सादरं स्पृशति भालचन्द्रचन्द्रकलासुन्दरे चन्द्रे स्वरजतकरैः, निर्गत्य स्वकुटीरात् विनयावनतेन भद्रविमलवेषेणापि नैसर्गिकतेजः-सम्पत्संसूच्यमानविशे-षेण चन्द्रगुप्तेनानुगम्यमानः, अमात्यवरेण्येनाधिष्ठितां चरणवन्दनाव्या-जेनागतेन सिद्धार्थकेन प्रागेव निर्दिष्टां पर्णकुटीं ययौ।

प्रविश्य च तदासमन्ताद्विराजमानां वृक्षराजिं, 'कथं तावदागमनमा-त्मनः नितान्तमेकान्तनिवासिनेऽमात्यवरेण्याय निवेदनीयम्? इति विचारयत एव तस्य दृष्टिः तस्या वृक्षराजेरधिपतित्वमिव कुर्वाणस्याभ्रंक-षशाखाशिखरस्यातिविस्तृतशाखासम्भारस्याश्वत्थस्यैकस्य तले विराज-मानस्य, पल्लवान्तरनिपतद्भिश्चन्द्रकरैः सादरमिव साशङ्कमिव ससङ्को-चमिव स्पृश्यमानस्य, धौतधवलोत्तरीयाऽऽवृतशरीरस्य, गौरवर्णस्य, विनिपत्य धरणीतलेऽवलोक्य च तत्र तत्र संघीभूतं नैशं तिमिरं स्वात्म-रक्षणाय स्वयमपि संघीभूतस्य चान्द्रप्रभाकरनिकरस्य शोभां विडम्बयतः, निश्चलस्य पुरुषविशेषस्योपरि पपात।

'अहो! अयममात्यराक्षसः एवाऽऽत्मनैव सार्धं किमपि चिन्तयन् प्रशान्ते समयेऽस्मिन् अत्रास्ते' इति दृष्टिपातसमकालमेव प्रत्यभिज्ञाय तत्समीपमुपसृत्य धीरगम्भीरया वाण्या प्रोच्चारितैः शुभाशीर्वचनैः सभाजयामास।

अमात्यराक्षसस्तु विमनस्कतयाऽपरिलक्षितागन्तुकागमनोऽकस्माच्छ्रु-तिपथमवतीर्णया तया वाण्या चकितचकितः, 'कुतो नु खल्वस्याः प्रभवः शान्तनिद्रामग्नेऽस्मिन् स्थले' इति हठादिव व्यापारयन् विचारभारजडे नयने ददर्श स्वसमीपमेवोपस्थितं धौतधवलवेषं पर्णान्तरप्रविशद्भिः

शिशिरकरकरैः सादरमिव स्पृश्यमानं ब्राह्मतेजोभासुरं पुरुषवरेण्यं तदनुयायिनेव पार्श्ववर्तिनाऽऽदरप्रह्वेणापि साधारणवेषेणापि आकारविशेषसंसूच्यमानप्रभावविशेषेण युवकेन केनापि सहितम्। भूमिं विदार्येवोत्थितं शशिमण्डलादिवावलम्ब्य तत्किरणपथमधोऽवतीर्णमतर्कितागमनं तत् पुरुषविशेषद्वयमवलोक्य किञ्चिद्विस्मयमानचित्तश्च, निबिडपर्णराशिनिरोध्यमानप्रवेशस्य चन्द्रखण्डस्य दुर्बलैः किरणैः किञ्चित् प्रकाश्यमानविशेषमपि तत् सहसा प्रत्यभिज्ञातुमपारयन्, विधूय निर्वेदजाड्यं परित्यज्य स्वासनम् अतिथिसत्काराय पुर उपसृत्य बद्धाञ्जलिस्तत्सभाजनमंगीचकार सादरमभ्यर्थयामास चाऽऽसनपरिग्रहाय।

आर्यचाणक्यस्तु तस्य तादृशं व्यवहारं वीक्ष्य 'नूनममात्यवरेण्येन, स्वप्नेऽपि ममैतादृशं स्वयं तत्समीप आगमनमनुत्प्रेक्षमाणेन, बहोः कालात् प्राक् एकवारमेव, स्वप्रासादे कार्यान्तरव्यापृतमनसा साक्षात्कृतोऽहं न प्रत्यभिज्ञातोऽस्मि। वत्सस्य चन्द्रगुप्तस्यानेकवारं दृष्टपूर्वस्यापि अप्रत्यभिज्ञाने तु......मन्ये तद्वेषपरिवर्तनमेव कारणम्', इति तर्कयन् स्वीकृत्यामात्यवरेण्यस्य प्रार्थनां चकाराऽऽसनपरिग्रहम्।

पार्श्वत एवोपविष्टमस्पष्टाकृतिविशेषं चन्द्रगुप्तं मुहुर्मुहुरवलोकयता सञ्जायमानकौतूहलेन तेन सादरमागमनप्रयोजनं पृष्टश्च प्रशान्तया स्नेहमय्या वाण्या प्रत्युवाच 'अमात्यवरेण्य!......बहोः कालात्प्राक् एकदा मगधसाम्राज्यराजधान्यां....भवतः प्रासादे यवनानां पापानामुच्छेदनार्थं मागधानां क्षात्रं सामर्थ्यं याचितुं भवतः समक्षमुपस्थितोऽयं पञ्चनदीयो विप्रः पुनरपि गुर्वीमभ्यर्थनां मनसिकृत्य तत्साफल्याशया भवतः समक्षमुपस्थितोऽस्ति। अपि करिष्यति भवान् तस्येदानीन्तनीं याचनान्तु फलवतीम्?'

अमात्यराक्षसः श्रुत्वैव तां धीरगम्भीरां विस्पष्टाक्षरां तेजस्विनीं वाणीम् अकस्मात् सञ्जातस्मृतिः, 'वंशपरम्परया प्राणाधिकभावेन सेवितस्य सुगृहीतनामधेयस्य स्वामिनो धननन्दस्य तथा निर्घृणघातकः, निरपराधानां नन्दवंशांकुराणां तथा समुच्छेदकः कपटपटुर्ब्राह्मणः स्वामिभक्तस्य मे पुरतः निर्लज्जतयाऽऽत्मानं समुद्घोषयन् प्रगल्भत—' इति क्रोधातिरेकज्वलच्चित्तः, बलाढ्यतमभारतीयसाम्राज्यशासिनः नन्दवंशस्य तथा समूलच्छेदनेन प्रख्यापितस्वकूटनैतिकचातुर्यसम्पद्, आबाल्यात् संवर्धितं पुत्रकल्पं कञ्चित् क्षत्रियकुमारमज्ञातकुलशीलं मागधसाम्राज्या-

धीश्वरत्वेन प्रस्थाप्य स्वयमेव वस्तुतः शासनयन्त्रं सञ्चालयन्, स्वयमार्य-श्चाणक्यः मम समक्षं याचकरूपेणोपस्थित–' इति परं विस्मयमानहृदयो, 'वशीकृतसमस्तमागधसामर्थ्यसम्पदः सर्वविधसाहाय्योपेतस्यास्य किमिव नामाऽप्राप्यमभिलषणीयं स्याद्यदर्थं ब्राह्मण्यसुलभेनाधिकारेण याचितुमय-मस्मिन् सुदूरवर्तिन्याश्रमस्थाने एतादृशे समये शिष्यमात्रद्वितीयो परिहरन् जनसामान्यज्ञानं समुपस्थित–' इत्याश्चर्यदोलायमानमानसो, विविधपर-स्परव्यामर्दिभावनाकल्लोलविलोडितान्तःकरणः प्रत्युत्तरं किमपि दातु-मपारयन् तूष्णीमेव तस्थौ ।

सुष्ठु तर्कयन् तस्य मनोऽवस्थां, तं प्रकृतिस्थं विधातुं प्रशान्तया वाचा पुनरपि जगाद स विप्रवरः—'अमात्यवरेण्य ! नगाधिराजोपत्यकावर्तिनि सांसारिकजनसम्पर्कानाकुलेऽस्मिन् आश्रमपदेऽकस्मादुपस्थितं मामवलोक्य सञ्जातो भवतः भावनाक्षोभः निभाल्य मदभ्यर्थनागौरवं भवदेकमात्र-पूरणीयं शान्ति प्राप्स्यति नूनम् । शृणोतु चाविलम्बमेव कार्यगौरवं यद्वशान्निर्व्यूढप्रतिज्ञाभारोऽपि अहं प्रागिव याचकीभूय पुनरपि भवत्स-मक्षमुपस्थितः ।'

निशम्यैतां प्रशान्तगम्भीरां वाचं किञ्चिन्न्यूनीभूतक्षोभः, प्रसह्य प्रयतमान आत्मानं प्रकृतिस्थं विधातुं, राक्षसः कतिपयक्षणानन्तरमेव वशीकृतस्वान्तः, खिन्नया वाचा प्रत्युवाच ।

'आर्य ! बुद्धिमात्रसाहाय्येन भवता पातयित्वा बलाढ्यतमं भारतीयं साम्राज्याधीश्वरमैश्वर्योच्चशिखरात्, घातयित्वा तं सवंशं पश्यतामस्माकं सर्वेषामेव, स्थापयित्वा स्ववशंवदं शिष्यमिमं तत्पदे, वशीकृत्य भय-व्याकुलानि मागधानां चेतांसि सक्षमप्रशासनकौशल्येन, विफलीकृत्य मम वैरनिर्यातनप्रकारान् तांस्तान् निगूढैस्तैस्तैरुपायैः, सफलीभूतप्रतिज्ञा-भारस्य भवतः स्वामिवंशरक्षणच्युतस्य, लोके उपहसनीयतां प्राप्तस्य, निर्विण्णेन चेतसा स्वीकृत्य पराजयमात्यन्तिकं विजनेऽस्मिन् आश्रमपदे वसतो ममाधन्यस्य पुरः याचकभावेनोपस्थितिः भवतः नूनं क्रूरतम उपहासः । को हि नाम आर्यस्याप्राप्योऽभिलषणीयोऽर्थः स्याद्यदर्थमार्यः सत्यमेव याचकभावेनोपस्थितः स्यात् ?'

वारं वारं आर्यचाणक्येनानुरुध्यमानोऽपि एवमेव प्रतिवदन्, 'याचक-ब्राह्मणाभ्यर्थनाया अस्वीकार उभयलोकविरुद्धः स्यात्' इति आर्यचाण-क्येन स्मारितो महता सङ्कोचेन तदनुरोधं स्वीचक्रे ।

तत्स्वीकृतिं प्राप्य सिद्धप्रायं स्वसङ्कल्पं परिगणयन् आर्यश्चाणक्यः तदनन्तरं बुद्धिप्रभावप्रगल्भयाऽपि शान्तभावपरिपूर्णया, प्रशान्ते तस्मिन्निशीथसमये विनयप्रह्वेण सम्राजेव कौतूहलैकाग्रचित्तेन राक्षसेनेव च विरम्य तारकाक्रीडनकौतुकात् चन्द्रमसा, समुत्थाय निद्राजाड्यात् तपोवनेन, निवृत्य लतान्दोलनव्यापारात् समीरणेन च सादरं श्रूयमाणयेव धीरगम्भीरया वाण्या अमात्यवरेण्याय स्वीयं समग्रं वृत्तान्तमादितः प्रभृति–, अपरित्यजन् क्षुद्रतममपि घटनाविशेषं–, सुस्पष्टयन् स्वव्यापारक्रमान्तस्तलवर्तिनं तर्कप्रवाहं, विवेचयन् स्वकपटकुटिलषड्यन्त्रप्रेरकशक्तिभूतमुद्देश्यसामर्थ्यं पदे पदे–, तथा व्याचकार यथाऽऽबाल्यात् अधीतकूटनीतिशास्त्रोऽपि प्रतिपदं प्रयुक्तकपटप्रयोगोऽपि सः राक्षसः,—शनैः शनैः कौतुकाविष्टचित्तः,—अपहृतचित्त इव सञ्जातसमग्रदर्शनया विप्रवरबुद्धिसम्पदा, समग्रमपि वृत्तान्तं करतलगतामलकवत् सुनिपुणं विदाञ्चकार।

श्रावयित्वा चैवं सम्पूर्णं रोमहर्षकं वृत्तान्तमुपसञ्जहार स मेधावी ब्राह्मणः, 'अमात्यवरेण्य! स्पष्टीभूतमेवाधुना भवतः समक्षमेतत् सत्यं यन्मया खलु बुद्धिमात्रसाहाय्येनाशरणशरणभगवन्मात्रानुगृहीतेनैतद्यत् कपटकुटिलं, निर्दयं, निर्घृणं व्यापारजालं सङ्कल्पितं स्वनुष्ठितञ्चाविगणय्य मानवस्वभावमात्रसुलभकोमलभावनानामाक्रोशं, तिरस्कृत्य निरपराधजनहननजन्यपापभाराणामाडम्बरं, विस्मृत्य स्वधर्मोचिताचारमर्यादानां परिपालनं, तस्यैकमात्रं सर्वातिशायि प्रेरकं कारणमासीत् निर्मर्यादा स्वमातृभूमिभक्तिः तदुद्भूता दुर्दमनीयाऽऽवेगा पापानां यवनानां स्वमातृभूमेर्निष्कासनेच्छा च। मया खलु स्वधर्मोचिताऽऽचारविचारमात्रप्रवणचित्तेन तथा नूनमनुभूतमकस्मात्.......श्रान्ते तस्मिन्नाश्रमपदे पापानां नृशंससमात्रोचितमाचरणं यथाऽपसार्य ब्राह्मणवर्णोचितां शमदमादिसम्पदं विधूय सदसद्विवेकसामर्थ्यं तिरस्कृत्य कोमलभावनामार्दवं वशंवदीबभूव मम मानसम् अत्युग्रायाः क्षणमेकमपि न विरमन्त्यास्तदुन्मूलनेच्छायाः। तद्वश्यतां निरपवादां प्राप्तेनैव मया यवनोच्छेदनसमर्थं नृपमन्वेषयता, परित्यज्य नितान्तं प्रियमाश्रमपदम् एकाकिनैव पर्यटता, समग्रेऽपि भारतवर्षे तेषां तेषां नराधिपानां शक्तिः निरपवादमधीता। अधीत्य च निर्धारिता मगधसम्राजो भोगैकप्रवणस्यापि भवत्सदृशेनातुलितबुद्धिवैभवेनामात्यवरेण्येनोपबृंहितसामर्थ्यस्य शक्तिः तादृशगुरुतमकार्यभारवहनसमर्थतया। निर्धार्य च याचिता सर्वजनसमक्षं साक्षान्मगधेश्वरात्

अङ्गीकृत्य ब्राह्मणवर्णोचितं याचकभावम्। नियतिवशात्तु तेन विधूय सदसद्विवेकं वशीभूय च क्षुद्रतमानां हृदयकार्पण्यमात्राभिव्यञ्जकानां भावनानां तथाऽहम् अपमानितो यथा यवनविद्वेषेणाहर्निशं ज्वलतो भस्मीभूतकोमलभावनस्य मम क्रोधावेश आत्यन्तिकमावेगं प्राप्य परिणमति स्म—'ससुतस्यैतस्योन्मूलनं विधाय निधाय चैतत्पदे सुयोग्यं क्षत्रियपुङ्गवं तन्माध्यमेनैव कारयिष्यामि यवनानां समुच्छेदनम्' इति प्रतिज्ञायाम्। तस्याश्च प्रतिज्ञायाः पूर्त्यर्थं प्रतिक्षणं प्रयतमानोऽहं यत् स्वबुद्धिमात्रसाहाय्योऽपि सिद्धिम् अलेभे तत्र मन्ये जगन्नियन्तुः कृपैव कारणम्। नास्ति च मम मानसे स्वल्पतमोऽपि खेदस्तान् तान् अतिनिर्घृणान् कूटनीतिप्रयोगाननुष्ठितान् संस्मरतः।'

'राजनीतौ हि साध्यपरिपूतं साधनमुपदिश्यते।'

'तदेवं सर्वथाऽनुकूलायाः नियतेः प्रभावेणोन्मूल्य ससुतं धननन्दं तत्पदे स्थापितवतोऽपि सुयोग्यं चन्द्रगुप्तं नास्ति मम मनसि सन्तोषस्य लेशोऽपि। अर्धमेवावसितं भारस्य मन्ये। इदानीन्तने भारतवर्षे यावनसंकटघटायाः सर्वथा विधूनने समर्थाया मागधसाम्राज्यशक्तेः सुयोग्यक्षत्रियहस्ते निक्षेपणं हि साधनमात्रम्। साध्यन्तु तस्याः शक्तेर्यथायोग्यं प्रयोगं विधाय यवनानामार्यभूमेः निष्कासनम्। तच्च दुष्करमद्यापि अवशिष्टमेव।'

'अथवा सुनिपुणं विचार्यमाणे साधनमेवाद्यापि न सुनिष्पन्नम्। मागधसाम्राज्यशक्ति राजपरिवर्तनेनाप्यनुपजातसंक्षयां वत्सस्य चन्द्रगुप्तस्य हस्ते निक्षिप्तामपि न तावत् सुनिक्षिप्तां यावनसंकटनिवारणक्षमाञ्च विभावयामि यावन्न तस्याः प्रतिक्षणं समुपवर्द्धकस्य रक्षकस्य विनियोक्तुश्च राजनीतिपारङ्गतस्य लेशतोऽप्यकलङ्कितराष्ट्रभक्तेः जनसामान्यश्लाघ्यमानचरितस्य अमात्यप्रमुखस्य साहाय्यं तदर्थमुपलभ्यं करोमि।'

'नास्ति च मम लेशतोऽपीच्छा गुरुतमं कार्यभारमेतं स्वयं वोढुम्। मया खलु परित्यज्य स्ववर्णोचितं स्वाश्रमानुरूपं स्वसंस्कारानुमोदितञ्चाऽऽचरणं यदङ्गीकृतमेतावत्कालपर्यन्तं कपटकुटिलं निष्कारुण्यदारुणं राजनयिकं जीवनं तेन समुद्विग्नमेव मम चित्तमास्ते प्रतिक्षणं पश्चात्तापलेशविरहितमपि। साक्षादनुभूय च राक्षसं जीवनं क्लेशबहुलं समुत्सुकमेव

तत्पुनरपि प्रशान्तं तपस्विजीवनं यापयितुम् । नास्ति च मम दृक्पथ-पथिकः कोऽप्येतादृशो राजपुरुषः य आबाल्यात् शाठ्ये शिक्षितोऽपि सरलस्वभावो, विपुलैश्वर्यपरिवृतोऽपि सर्वथाऽनासक्तः, मनसः अतुलनीयां बलसम्पदं प्रयुञ्जानोऽपि रात्रिन्दिवं क्षणमात्रमपि स्वामिभक्तेरविचलित-चित्तश्च स्यात् । न कोऽप्येतादृशः राजपुरुषो मया सूक्ष्मेक्षिकयाऽवलोकयताऽपि समुपलब्धः ।'

'ऋते भवतः ।'

'तन्महान् खलु मम मनोरथः यद् भवान् विस्मृत्य सर्वं कटुप्रायमतीतं, प्रशमय्य विषाक्तं वैरभावम्, अङ्गीकृत्य च ब्राह्मणप्रणयं स्वीकरोत्वेतं गुरुतमकार्यभारम् । नार्हति च भवान् एतं विफलयितुम् । आसन्न-वज्रपातनिभायाः एतस्याः यावनसंकटघटायाः प्रविलयनं हि प्रत्येकस्य भारतीयस्य कर्तव्यम् । विशेषतस्तु भवत्सदृशस्य । भवत्सदृशा हि नरपुङ्गवाः सम्यगाकलितयावनसंकटा अपि तन्निवारणसमर्था अपि तदर्थं मातृभूम्या विह्वलमाहूयमाना अपि, यदि पामरजनसुलभभावनानां वशीभूय–, न तं कार्यभारं वोढुं तत्परा भवेयुस्तर्हि कानिव पापभारभुग्ना भारतमाता, पङ्कमग्ना धेनुरिव, साहाय्यार्थं भयविह्वलेक्षणं प्रतीक्षेत ?'

'तत् परित्यजतु भवान्निर्वेदजाड्यम् । अङ्गीकरोतु च महत् कर्तव्य-भारम् । भवता हि तैस्तैरुपायैः वंशपरम्परागतं स्वामिवंशं परिचरता प्राप्तमेव यावच्छक्यं स्वामिविश्वासाऽऽनृण्यम् । सोढा एव अनेका आपदः स्वामिवैरिवैरनिर्यातनाय यावत्सम्भवं प्रयतमानेन ।'

'परन्तु—स्वामिभक्तेर्नायमाशयो यत् परित्यज्य योग्यायोग्यविचारम् अवधूय सदसद्विवेकं न्यक्कृत्य कर्तव्याकर्तव्यबुद्धिं प्रतिहिंसाभावनामात्र-प्रज्वलन्मानसो महत्तरे कर्तव्ये समुदासीत मानवः ।'

'चन्द्रगुप्तसदृशं गुणैकवशंवदं सदसद्विवेककुशलं कर्तव्यदक्षं निर्व्यसनिनं नन्दवंशाङ्कुरं स्वामिनं, मागधसाम्राज्यसदृशं नितान्तपरिचितं लेशतोऽप्यक्षतसामर्थ्यं बलाढ्यं शासनयन्त्रं, यावनसंकटोन्मूलनसदृशं नितान्तश्लाघनीयं कर्तव्यञ्चप्राप्याऽपि यदि भवान् दिवङ्गतस्य स्वामिनो भक्तिवशात् निष्कारणमेव कार्येऽस्मिन् गुरुतम उदासीत तर्हीमां भवतः स्वामिभक्तिं वैगुण्यत्वेनैव गणयिष्यन्ति भाविन इतिहासकाराः ।'

'अतः समुत्थायास्मात् निर्वेदमात्रकारिणो मनोमोहात्, अङ्गीकृत्य च विशालतमं दृष्टिकोणं, 'व्यसनासक्तमुपभोगमात्रप्रवणतया स्वकर्तव्यानि गर्जनिमीलिकयाऽवधीरयन्तं धननन्दं यवनोच्छेदनसदृशे कठिनतमे कर्तव्ये सर्वथाऽसमर्थं मन्यमानेन विधिनैव तत्स्थानेऽयं शूरः स्वाभिमानी गुणानुरागी नन्दवंशाङ्कुरः स्वामित्वेन प्रेषित' इत्यवधार्य स्वीकरोतु भवान् मगधसम्राजः चन्द्रगुप्तस्य प्रधानामात्यपदभारम् ।'

'करोतु च भगवती नियतिः सुसंवादिगुणगणवशात् उपबृंहितसामर्थ्यौ युवामुभावपि प्रसुप्तं भारतीयं क्षात्रं तेजः पुनरपि जागरयन्तौ यवनपापच्छायां पुण्याया भारतभूमेर्निष्कासयन्तौ आर्यसंस्कृतिरक्षकत्वेनेतिहासेषु विख्यातौ ।'

अमात्यराक्षसस्तु विचारोत्तेजकेनानेन धीरगम्भीरेणोद्बोधनेन बुद्धिनैर्मल्यं लम्भितः, 'निःसंशयं राष्ट्रभक्तिः स्वामिभक्तेरपेक्षया गरीयसी । तन्महत्तरकर्तव्यार्थमाह्वयन्त्या इव नियत्या दुर्विज्ञेयगत्या समुपस्थापितानामनुकूलतमानां परिस्थितीनां साहाय्यं प्राप्य राष्ट्रस्य सेवैव मम सर्वातिशायि कर्तव्यम् । तद्विमुखस्य मम नूनमुभयलोकच्युतिः' इत्यात्मनैव सम्प्रधार्य 'यथाऽऽज्ञापयति भवान्' इति तदनुरोधं महान्तं स्वीचकार ।

—:❀:—

# एकविंशः परिच्छेदः

उदगाच्चाचिरादेव एकस्मिन् पश्चिमाशावलम्बिचन्द्रमण्डलप्रभाधवलिते मन्थरप्रवहच्छीतलसमीरणवीजिते सुप्तोत्थितपतत्त्रिकुलकलरवमुखरिते महति प्रत्यूषे मगधराजधान्यामर्धसुप्तायां राजकीयैः समुद्घोषकैः सडिण्डिमनिनादं समुद्घुष्यमाणा, अपरित्यक्तशयनैः निद्रालसारक्तलोचनैर्विलासिभिः शिथिलीकृत्य कामिनीबाहुपाशं रतिश्रमस्वेदार्द्रम् अस्पष्टाक्षरं, सद्यःस्नानार्द्रचूडैर्ब्राह्मणैर्विरम्य क्षणमात्रं मन्त्रपाठात् सकौतूहलं, गृहकर्मप्रवृत्ताभिः गृहिणीभिः सौत्सुक्यं श्रूयमाणा, राजकीया समुद्घोषणा यत्—'निखिलनृपमण्डलचुम्बितचरणकमलश्चतुरुदधिमेखलालङ्कृताया भुवो भर्ता सम्राट् चन्द्रगुप्तः समाज्ञापयति यदद्य प्रथमे सायन्तने यामे राजकीये न्यायभवने सम्राट् स्वयं मागधसाम्राज्यरिपुभिः सद्य एव प्रचालितस्य भीषणतमस्य कपटव्यूहस्य यथार्थां कारणमीमांसां तद्वास्तविकसूत्रधाराणाञ्च दण्डधारणां कारयिष्यति' इति ।

आकर्ण्य च तां समुपजातकौतूहलाः रोमाञ्चकारिराजवंशहत्याकपटव्यूहवास्तविकापराधजनदर्शनोत्सुकोत्सुकाः राजधानीनिवासिनः स्त्रीपुरुषाः विस्मृतप्रायस्वदैनन्दिनकर्तव्यानुष्ठानाः न्यायसभासमयं प्रतिपालयितुमसमर्थाः आरभन्त मध्यमम्बरतलस्यालङ्कुर्वत्येव दिनमणौ भव्यदर्शनं न्यायसभासौधं गन्तुं येन निर्धारितसमयात् प्रागेव तत् सभागृहं विविधव्यवसायानुशालिभिर्यथाशक्ति स्वस्वैश्वर्यं प्रदर्शयद्भिः वणिग्भिः, मूर्तिमद्भिः ब्राह्मतेजोभिरिव धौतधवलवेषधारिभिः भस्मचर्चितभालपट्टैः प्रशान्तैर्ब्राह्मणैः, दीर्घकायैरागृहीतविविधायुधोदग्रतरविग्रहैः श्मश्रुलमुखैः सशरीरैः क्षात्रप्रभावैरिव क्षत्रियैः, सभागृहैकदेशे आरक्षिते यष्टिधारिभिः सादरं समुपावेशिताभिः महार्ह—विविधवर्ण—चीनांशुकाऽऽवृतकोमलांगलताभिर्मनोज्ञरत्नाभरणभूषिताभिः त्रिदशाङ्गनाभिरिव कौतूहलवशात् स्वर्गादवतीर्णाभिः ललनाभिः सङ्कुलतां परामाससाद ।

यथासमयञ्च कर्णपथमवतीर्णेन, चुम्बतेव गगनमण्डलं, समालिङ्गिते-

वाऽऽशाः सर्वाः, बधिरयतेव श्रोत्राणि, शब्दमयमिव कुर्वंता ब्रह्माण्डं, युगपत्प्रहतविविधवाद्यध्वनिसमाकुलेन महता पटहध्वनिना संसूचिताऽऽगमनः, रत्नखचितसौवर्णयष्टिधारिभिः प्रतिहारिभिर्मेघध्वनिगम्भीरया रोमाञ्चकारिण्या वाचा समुपदिश्यमानमार्गः, लोहकवचावृतसर्वाङ्गैः सुतीक्ष्णभल्लधारिभिः स्वकीयस्यापि जनस्य भयमुत्पादयद्भिः सम्राजः परिरक्षणार्थं मूर्तिं परिगृह्णन्त्याः स्वामिभक्तेरनेकैः पुरुषरूपैरिव परिदृश्यमानैः शरीररक्षकैः परिवेष्टितः, प्रशान्तमुद्रेण धौतधवलवस्त्रेण इष्टदेवतानामसंस्मरणेषद्कम्पमानाधरोष्ठेन प्रसन्नगम्भीरया प्रशान्तया स्नपयतेव दृष्ट्या पुत्रनिर्विशेषं सम्राजम् आर्येण चाणक्येन, कृशतरकायेनापि महत्तमनूतनसंकल्पप्रभोज्ज्वलमुखमण्डलेन चिरपरिचितप्रधानामात्यमहार्हवस्त्रधारिणा राक्षसेन सद्यःप्राप्तराजकीयसम्मानविशेषपरितुष्टाहम्भावेन बलदर्पोद्धतगतिना महासेनापतिना भागुरायणेन महार्हवस्त्रधारिणा विविधरत्नाभरणोज्ज्वलवेषेण नगरश्रेष्ठिना चन्दनदासेन सुवर्णदासेन च अपरैरपि प्रमुखैः राजपुरुषैः यथाधिकारमनुगम्यमानो धवलवेषधारी निष्कलङ्कमौक्तिकालङ्कारालङ्कृतवक्षःकपाटः, सञ्चरिष्णुः यशःपुञ्ज इव मागधानां, सोल्लासहास इव समुत्फुल्लमानसायाः मगधसाम्राज्यलक्ष्म्याः आशानिकर इवाऽऽर्यसंस्कृतेः, पुण्यसम्भार इव भारतभूमेः—प्रविवेश न्यायसभागृहं सम्राट् चन्द्रगुप्तः ।

स्वीकृत्य सादरं ससम्भ्रमञ्चोत्थितायाः सभायाः सभाजनानि, प्रणम्य च सबहुमानं कृतोत्तुङ्गासनपरिग्रहं गुरुवर्यं, तेन साशीर्वादमभ्यनुज्ञातो महार्हं रत्नखचितं सौवर्णं सिंहासनमध्यतिष्ठत् ।

शनैः शनैश्च विरते जयजीवेत्याद्युद्घोषमुखरितसभागृहानाममात्यवरेण्याप्रत्याशितपुनर्दर्शनसमुत्तेजितमनसां किमपि किमपि परस्परं जल्पतां सभासदां महति कोलाहले, प्रस्थापितायाञ्च सभाभवने तत्र तत्रावस्थापितैः सौवर्णदण्डधारिभिर्धवलवेषैर्महाप्रमाणैः न्यायसभारक्षकैः प्रगाढायां शान्त्यां, तेजस्विन्याऽपि धीरप्रशान्तया दृष्ट्याऽनुगृह्णन्नेवोपस्थितं सभ्यवृन्दं न्यायविचाराधिकृतं विशिष्टं राजपुरुषं कार्यारम्भायाऽऽदिदेश ।

स तु (तस्य बालसुहृत्, आर्यचाणक्येन तेनैव सह पाटलिपुत्र आनीतः, तेन यथासमयं मागधन्यायसेवायां प्रवेशितः, क्रमशो महत्तरञ्चाधिकारपदं प्रापितः, आर्यचाणक्यस्य परमविश्वासपात्रीभूतः, पूर्व-

संसूचितपद्धत्यैव ) सर्वमपि राजकीयघटनाचक्रं तथा सविस्तरं वर्णयामास यथा ससुतनन्दघातात् प्रभृति मलयकेतुकपटाक्रमणपर्यन्तं सर्वमपि तत् भारतवर्षविद्वेषियवनशक्तेः कपटमेव निर्घृणमभाषत । उपस्थिताश्चोच्चावचा विविधवयोवेषवृत्तान्ता सर्वेऽपि सभ्याः स्वप्नेऽप्यनुत्प्रेक्षितप्रकारं रोमाञ्चकारि तद्वर्णनं निशम्य विस्मयमूढा आलिखिता इव उत्कीर्णा इव मन्त्रमोहिता इव बभूवुः ।

प्रोद्बोधयन् तान् विस्मयजाड्यात् आह सभागृहनिनादिन्या गम्भीरया वाण्या सम्राट् चन्द्रगुप्तः, 'महत्सौभाग्यास्पदमेतत् भाविकल्याणसंपत्सूचकमेवैतद्यत् समुत्तीर्यानपेक्षितोपनतमश्रुतपूर्वकल्पं विपत्सागरमस्माकं मागधं साम्राज्यं कलेवरे वित्ते धैर्ये वा किञ्चिदप्यक्षतं, पूर्ववदेवैश्वर्योच्चशिखरे विराजते । नियतं भारतवर्षशुभकांक्षिणा परमदयालुना परमेश्वरेणानुगृहीता वयं मागधाः । कुतोऽन्यथा क्षेत्रान्तरचिकित्स्ये महारोग इव यावने कपटकुटिलसामर्थ्ये मागधशक्तिं शनैः शनैः नामशेषां कर्तुं प्रयतमाने, संन्यस्तसर्वकामानां परमतत्त्वसाक्षात्कारविधूतमोहानां विजितषड्विकाराणां गुरुवर्याणामनाहूतानामपि परित्यज्य शान्तं निरापदमाश्रमस्थानम् आर्यसंस्कृतिपरिरक्षणेच्छयैव केवलयाऽत्राऽऽगमनम् । कुतश्च विनिपतिते तस्मिन् अनभ्रवज्रपातभीषणे शत्रोः कपटप्रहारे स्वयं मार्गप्रदर्शनम् ! कुतश्च तत्प्रदर्शितं राजनैतिककपटदुर्गमं मार्गमनुसरतां मागधानामस्माकं विनैव रक्तपातं विनैव शस्त्रपरिग्रहं परचक्रस्य निवारणम् । मन्यामहे गुरुचरणान् साधनीकृत्य समस्तां मगधशक्तिं विनाशगतदिवं परिरक्षता संसारचक्रसञ्चालकेन संसूचितं यद् अस्या दुष्टाया यावनशक्तेः भारतभूमेर्निष्कासनं मागधशक्तेर्नियतिसम्मतं कर्तव्यम् । तच्च तयाऽवश्यमेव पूरणीयम् । तथा सत्येवैतादृशाद् विपदम्बुधेरुत्तारयितुः जगन्नियन्तुरपेक्षा पूर्णतां यास्यति सर्वकल्याणमयी ।'

'सौभाग्याच्च मगधशक्तिरेतादृशमहत्तमकर्तव्यभारवहनक्षमा । यस्या हि संवर्द्धकाः निहतेऽपि तथा ससुते सम्राजि तत्क्षणमेव साक्षात्कृतस्वकर्तव्या अमात्यराक्षससदृशा अर्थनीतिचतुराः, प्रमुखसेनापतिभागुरायणसदृशाः रणधुरन्धराः, चन्दनदाससुवर्णदाससदृशाः धनिकाः उपस्थितायामपि परचक्रापदि क्षणमप्यविचलितचित्ताः प्रशान्तवृत्तयः युष्मत्सदृशाः प्रजाजनाः तस्या एतस्या मागधशक्तेः किमिव नामाऽशक्यं कार्यम् ? का नामापदनुत्तरणीया ? क इव शत्रुरपराजेयः ?'

'अतीव तु दुःखास्पदमेतत् यत् अहर्निशं साक्षात्कुर्वन्तोऽपि यवनानां दुराचरणानि, जानन्तोऽपि तेषामन्तिममुद्देश्यम्, आकलयन्तोऽपि पारदास्यदुःखानि, अवधीर्य स्वदेशाभिमानं, विस्मृत्य स्वसंस्कृतिगौरवं, समवधूय हितवचनानि पर्वतेश्वरसदृशा भारतीया राजानः परस्परेर्ष्याकलहसंक्षीयमाणशक्तयो यवनोच्छेदार्थं नाधुनापि भजन्त एकीभावम्। प्रत्युत वृथाहंभावदुर्विदग्धाः तत्कूटनीतिव्यापारमाध्यमा एव भवन्ति। एतैर्हि धरणीभारभूतैः नृपब्रुवैः स्वक्षुद्रस्वार्थमात्रसाधनतत्परैः परकीयवशंवदत्वमङ्गीकृत्य तद्धस्ते काष्ठपुरुषवद्व्यवहरद्भिः ऐहलौकिकादपवादान्न भीतम्। न पारलौकिकात् भोगाद्वा। धिगेतेषां शौर्यं यदेभिः स्वकीयानामेव देशबान्धवानां विनिपातने प्रदर्शितम्! धिगेतेषां सामर्थ्यं यदेभिर्दुराचारिणां यवनानां साहाय्येनोपार्जितम्! धिगेतेषामैश्वर्यं यदेतैः स्वमातृभूमिं पारदास्यसंकटे विनिक्षिप्य उपार्जितम्।'

'अस्माकं मागधानान्तु प्रारम्भत एवाऽऽर्यसंस्कृतिबहुमूल्यनिधिपरिरक्षणे समुत्सुकानां, तत्रापि पूज्यैः गुरुवर्यैः सन्ततोपदेशामृतवर्षणेन दृढतरीकृतसङ्कल्पानां ध्रुवोऽयं सङ्कल्पो यत् सर्वस्वहोममप्यविगणय्य स्वप्राणसमर्पणमप्युररीकृत्य स्वमातृभूमिरस्माद्यावनसंकटात् समुद्धरणीया इति।'

'महत्तमञ्चैतत् कर्तव्यं नैकाकिना बलाढ्येनापि साम्राज्येनास्माकं पूरयितुं शक्यम्। नितान्तमावश्यकमन्येषामपि भारतीयानां नृपतीनामत्र सहकार्यम्। सर्वेषां भारतीयानाञ्च। तदर्थमेव वयं मागधाः सततं प्रयतामहे। तदर्थमेवास्माभिः मागधसाम्राज्यद्वेषी अयं पर्वतेश्वरः कपटकुटिलमाक्रामन्नपि राजधानीं महोत्सवनिमग्नां न दण्डितः प्राणदण्डेन। अहो! अवधीरयता एवैतत् औदार्यसिक्तं मागधानां वर्तनम् अस्य पुत्रेणैतेन मलयकेतुना मूर्खवत् दुःसहपराक्रमं मागधसाम्राज्यं पुनरपि कपटमाश्रित्य स्वायत्तीकर्तुं प्रयतितम्।'

'वारं वारं मगधद्रोहं कर्तुमेवं चेष्टमानोऽयं वस्तुतः प्राणदण्डेनैव दण्डनीयः। परन्तु मन्यामहे पुनरप्येकवारम्....एकवारमेव अयं क्षन्तव्यः। (सगर्वम्) अवलोकयन्तु नाम सर्वे राजानः मागधानां क्षमासामर्थ्यम्। विदांकुर्वन्तु च स्वकर्तव्यं परमम्। तैः खलु विरम्य परस्परकलहात् सर्वविनाशकात्, एकीकृत्य परस्परसामर्थ्यं, मातृभूमिरियं यावनसंकटात्

अविलम्बमेव समुद्धरणीया। वयं मागधा एतन्महत्तमकर्तव्यपालनार्थं सदैव सन्नद्धाः।'

'अनुगृह्णातु दयाधनः परमेश्वरस्तान् स्वकर्तव्यपालनबुद्धिप्रदानेन।'

विरतवचसि चैवमुक्त्वा मगधसम्राजि क्षणमात्रं सर्वेऽपि सभ्याः जनास्तदीयधीरमनोहराकृतिविशेषभृङ्गायमाननयनाः तदीयधीर-गम्भीरवाक्प्रवाहभाविताः तदीयसमुद्बोधकविचारपरम्परामुषित-मानसाः तूष्णीं तस्थुः।

आन्दोलयामासुश्च क्षणमात्रानन्तरं प्रतिध्वनिसमुपबृंहितेन जय-जयकारसमुद्घोषेण दिगन्तराणि।

—:❀:—

## द्वाविंशः परिच्छेदः

'दिष्ट्या पूर्णा खलु मम प्रतिज्ञा। मया हि प्रातः स्मरणीयानामाचार्यचरणानां यवनाधमैस्तथाकृतमपमानं घोरमसहमानेन, पवित्राया भारतभूमेरेतेषां पापानां समूलमुच्छेदने समर्थं क्षत्रियवरं नृपमन्विष्यता तादृक्सामर्थ्यपितो धननन्दोऽवलोकितः प्रार्थितश्च क्षत्रियमात्रकर्तव्यपरिपालनाय। तेन तु क्षुद्रबुद्धिना विषयलालसामोहितसारासारमतिना दुर्दैविना तथाऽपमानितो यथा बलाढ्यतमभारतीयसाम्राज्यशक्तिशालिनं ससुतं तं समूलघातं हत्वैव कृतकृत्योऽभवम्। प्राक्तन इतिहासेऽश्रुतसदृशीयं राज्यक्रान्तिरनुकूलदैवमात्रसाहाय्येन मया स्वबुद्धिमात्रसाधनेन सम्पादिता। तत्स्थानेऽभिषिक्तश्च कुलीनः सम्यग्विनीतः कर्तव्यपालनदक्षः पराक्रमी वत्सः। सम्पादिता चामात्यवरेण्यतुल्यसाहाय्यसम्पद्वत्सस्य कृते।'

'परन्तु आयुष्मन्! बलाढ्यतमभारतीयसाम्राज्यलाभमात्रेण कृतार्थमात्मानं परिगणयता, विषयोपभोगासक्तचेतसा, प्रजाजनानुरञ्जनमात्रप्रवणेन वा, त्वया स्वीये महत्तमे कर्तव्ये न कदाऽप्युदासितव्यम्। यवनोच्छेदो हि त्वत्कृते नियतिनिश्चितं कर्तव्यम्। तस्मिन्नेवोदासीनतामङ्गीकुर्वति त्वयि विषयोपभोगेनैव कालं यापयति, भाविन इतिहासकारा उपहसेयुः नूनं मां 'चाणक्येन वराकेणैवं धननन्दं समूलघातं घ्नताऽपि तत्स्थानेऽन्यं धननन्दमेव स्थापयता वृथैवात्मा क्लेशित' इति।....अथवा वृथैव क्लिश्यते मया स्वप्नेऽप्यसम्भाव्यां परिस्थितिमेतादृशीं परिकल्पयता। त्वत्सदृश आबाल्यात् सम्यग् विनीतः शस्त्रशास्त्रप्रवीणः स्वाभिमानी स्वकर्तव्यपालनदक्षः कर्ता, अमात्यवरेण्यसदृशो भारतीयसंस्कृतेरभिमानी राजनीतिचतुरः साहाय्यकः, मागधसाम्राज्यशक्तिसदृशी प्रबला साधनसम्पद् इत्येतत्त्रयं सूचयति महत्तमस्य यवनोच्छेदरूपस्य साध्यस्यावश्यंभाविनीं सिद्धिम्।'

—आह आर्यश्चाणक्यः तस्यामेव सायंसन्ध्यायां पादवन्दनार्थं निभृतमागतम् अमात्यराक्षसेन सह सम्राजं चन्द्रगुप्तं राजधानीबहिर्वर्त्तिनो विजयोत्सवप्रमुदितराजधानीकौतुकानि सकौतुकमवलोकयितुं गतैर्देवतायतनवासिभिः शून्यशून्यस्य तस्य शान्तस्य नीरवस्य देवतायतनारामस्य प्राङ्गणवर्तिनो महतो वृक्षस्याधस्ताच्छान्तभावेनोपविष्टः।

'भवति–, अपि–, अमात्यवरेण्य ! भारतभूमेर्महती नूनमाशा। भवानपि विस्मृत्य सर्वा घटना अतीता एतन्महत्तमकर्तव्यसम्पादनमात्रसंलग्नचित्तः स्वस्वामिनस्तथा साहाय्यं करोतु यथा सः अङ्गीकृतस्यैतस्य महतो भारस्य वहने क्षमः स्यात्। किं बहुना ? यावनं भयं समूलं विनाश्यापि भवतः सम्राट् निर्मर्यादाधिकारमदोन्मत्तोऽकुतोभयो गर्वान्धः स्वप्रजाकल्याणे यथा नोदासीत तथा वर्तनीयं भवता। अन्यथा यावनसंकटविनाशनमेव व्यर्थं स्यात्।'

'एवञ्च पूर्णप्रतिज्ञस्य मम मानसं पुनरपि निवृत्तिमार्गमनुसर्तुं व्याकुलम्। महान् खलु अतीतः कालः पापैर्यवनैर्विध्वंसितं शान्तं तदाश्रमपदं परित्यज्य प्रतिज्ञापूर्त्यर्थं देशाद्देशान्तरं प्रवसतो मम। आचार्यचरणानां तां चरमामाज्ञां पालयितुमहर्निशं प्रयतमानेन मयाऽवधीरितो श्रेयस्करो निवृत्तिमार्गः। स्वीकृतः क्लेशबहुलः प्रवृत्तिमार्गः। आश्रितः कपटकुटिलो राजनीतेर्मायावी पन्थाः। प्रदर्शितश्च दुष्टसांसारिकपुरुषवत् अन्यविनिपातने स्वबुद्धिविलासप्रकर्षः। दिष्ट्या सुष्ठु परिणतं सर्वम्। इत ऊर्ध्वमपि राजनीतिमार्गमिममशान्तिसंकटं दुर्नीतिबहुलमनुसर्तुं तु नेच्छति ममान्तरात्मा। निर्विण्णोऽस्मि विश्वासघातिभिरेतैः शाठ्यबहुलैः राजनैतिकव्यापारैः। शमधना वासनाविजयमेव विजयमनुत्तमं मन्यमाना अस्मादृशा आश्रमवासिनः क्व, क्व चायं समुद्वेगकारोर्ष्योदग्रः चिन्ताकुलो मार्गः। दिष्ट्या प्रतिपन्नमेवाऽयुष्मता यावनसंकटस्य मूलतो विनाशनमार्यसंस्कृते रक्षणञ्च।'

'तत् श्व एव ब्राह्मे मुहूर्ते प्रतिज्ञापूर्त्यर्थं किञ्चित्कालपर्यन्तमुज्झितं निवृत्तिपथं पुनरप्यनुसर्तुं वनं शान्तं यास्यामि।'

'तात चन्द्रगुप्त ! मैवमवमंस्थास्तवैव केवलस्यान्तरात्मा वियोगमिमं समुत्प्रेक्ष्य सीदतीति। ( सगद्गदम् ) ममापि आश्रमवासिनोऽपि विधूतसंसारमोहपाशस्यापि दूयत एवान्तःकरणं त्वां परित्यज्य विजनवासमुर-

रीकुर्वंतः। आकैशोर्यात् सुतनिर्विशेषं संवर्द्धितस्य, प्रयत्नेन च महता विविधेषु शस्त्रेषु शास्त्रेषु च शिक्षितस्य, विविधैः कपटकुटिलैः राजनैतिकमार्गैः व्यवहृत्य मागधसिंहासने प्रतिष्ठापितस्य विनीतस्य शूरस्य दक्षस्याऽऽयुष्मतो वियोगः,—पुत्रकस्येव पितरं—दहत्येव माम्।'

'तथापि किं क्रियताम्? एवंविधैव संसारस्य गतिः। संसारसागरे समेत्य किञ्चित्कालपर्यन्तं सहप्रवहतोः काष्ठयोर्वियोगोऽवश्यं भाव्येव। सोऽद्यैव भवतु श्वो वा। न तत्र विदुषामाग्रहोऽभिनिवेशो वा। अतोऽवलम्ब्य धैर्यं, विधूय मोहपटलं सम्प्रधार्यतामात्मा। 'स्निग्धजनवियोगः जीवनयात्रायामपरिहार्य' इति समाश्वास्य चात्मानं कर्तव्ये महत्तमेऽविचला निधीयतां धीः। स्मर्यताञ्चाहर्निशं यवनोच्छेदेनैव ते गुरोरस्य चाणक्यस्याऽऽनृण्यं सम्भवि—इति। परमेश्वरः प्रयत्नान् तव सफलयतु सत्यसङ्कल्पदाता।'

एवं धीरगम्भीरं स्नेहसिक्तं समुद्बोधकं किमपि किमपि शनैः शनैः श्रावयत आर्यचाणक्यस्य, अनाकलनीयस्वभावगाम्भीर्यस्य वज्रादपि कठोरस्य कोमलस्य कुसुमादपि लोकोत्तरचरित्रस्य पितृतुल्यस्य स्वगुरोरासन्नं वियोगं समुत्प्रेक्ष्य रणरणकखिद्यमानचेतसः परस्परविरोधिभावनाकल्लोलव्याकुलितस्वान्तस्य विनयावनतस्य सम्राजः चन्द्रगुप्तस्य, परमनिःसङ्गिनोऽपि पराभवप्रचण्डस्याऽऽश्रमवासिनोऽपि शस्त्रशास्त्रनिपुणस्य सरलस्वभावस्यापि राजनैतिककपटकुटिलस्य तेजस्विनस्तस्य विप्रस्य लोकोत्तरं चरितं पुनः पुनः पर्यालोचयतोऽमात्यराक्षसस्याविदितगतयामैव सा रात्रिर्व्यरंसीत्।

'तेजस्विनमपि राजनीतिनिपुणमपि अल्पवयस्कं कोमलस्वभावं चन्द्रगुप्तं महति कर्तव्यभारे विनियोज्य स्वयं तपस्तप्तुमरण्यानीं गच्छतो विप्रस्याहो निःसङ्गिता' इति खिद्यमान इव चन्द्रः पश्चिमाम्बुनिधौ ममज्ज।

'मम बलाढ्यस्य साम्राज्यस्य स्फूर्तिदाता चाणक्यो विधूय ममानुरोधान् कमलपत्रमिव निःसङ्गः, प्रचलितः तपोवनाय। धिङ्माम्' इति समुत्पन्त्या मागधसाम्राज्यलक्ष्म्या निःश्वास इव ववौ मन्दं मन्दं समीरणः।

'कदा नु खलु पुनः प्रेक्षेय एतत् गुरुचरणद्वयम्' इति तदवलोकन-

लालसां जेतुमपारयन्तीमिव मागधयामिनीं बलादुत्सारयन्ती गगनाङ्गणात्"""सर्वत्र प्रससार मागधसाम्राज्यभाविसमुत्कर्षसूचिकेवाऽऽरुणी प्रभा।

वनं प्रस्थितस्य ब्राह्मतेजोमूर्तेर्विप्रस्य दर्शनेनाऽऽत्मानं पावयितुमिव त्वरमाणो भगवान् सहस्रकिरणः पूर्वाचलशिखरमारुरोह।

आर्यचाणक्योऽपि स्वनुष्ठितनित्यकर्मा प्रत्यग्रस्नानार्द्रजटः धौतधवलवेषः सद्यश्चर्चितभस्मभासुरललाटपट्ट, एकेन हस्तेन जपमालां वहन्, जलपूर्णञ्च कमण्डलुमपरेण, शुभाशीर्वचनैस्तपःपरिपूतैरनुगृह्य चरणनिपतितमश्रुक्लिन्नमुखकमलं सम्राजं चन्द्रगुप्तं—तपोवनं चचाल एकाकी।

:❀:—